कुमारिलभट्टविरचितम्

# मीमांसाश्लोकवार्तिकम्

( भूषणाख्यटीकासहितम् )

टीकाकर्ता

पण्डितरत्नम् ई. श. वरदाचार्यः




राष्ट्रीय संस्कृतसंस्थानम

नवदेहली

श्रीः

## ॥ सव्याख्यश्लोकवार्तिकस्यविषयानुक्रमणी ॥

### प्रतिज्ञासूत्रम्

## चोदनासूत्रम्

## निमित्तसूत्रम्



॥ श्रीः ॥

# भूमिका

- ० -

सर्वकर्मसमाराध्यं सर्वाभीष्टफलप्रदम् ।
सर्वावासं वासुदेवं वन्दे श्रीतुरगाननम् ॥

सव्योत्सङ्गविराजत्
तटिदाभाम्भोधिजाभुजाश्लिष्टम् ।
वन्दे सुधांशुनिलयं
दिवानिशं हयमुखं देवम् ॥

अयि ! मान्याः ! आस्तिकाग्रेसराः !

विदितमेवैतत् सर्वेषां वैदिकानामास्तिकानां, प्रमाणेषु सर्वेषु अपौरुषेयः वेद एव सर्वश्रेष्ठं प्रमाणं जागर्ति ; इति । आह च भगवान् बादरायणः- 'वेदात् शास्त्रं परं नास्तीति' । स च वेदः नह्यज्ञतार्थकः लोकोपकारको भवतीति च अनुभववेद्यमेव हि भवति । वेदश्च धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयप्रज्ञाजनकः इतिकर्तव्यताभूतं मीमांसात्मकविचारमपेक्षते । मीमांसाशब्द एव च पूज्यविचारवाचकः, इति शाब्दिकादिभिस्तीर्थकारैरङ्गीक्रियत एव 'मानेर्जिज्ञासायां' इति धातुनिष्पन्नत्वात्तच्छब्दस्य ।

## ॥ मीमांसायाः ऐक्यम् ॥

वेदश्च संहिता-ब्राह्मण-उपनिषदात्मकः कर्मकाण्ड-ब्रह्मकाण्डात्मना विभक्तः संसारसागरनिमग्नलोकोद्धारकः अनेकानपूर्वानर्थान् वेदयतीतित्यतः अन्वर्थ वेदसंज्ञायुक्तः दरीदृश्यते । वेदतत्त्वविमर्शात्मकं मीमांसाशास्त्रमिदं ब्राह्मणोपनिषद्रूपस्य एकस्यैव वेदस्य इतिकर्तव्यताभूतं एकमेव शास्त्रं न भिन्नं भिन्नामिति प्राज्ञाः निर्णयामासुः। तत्र पूर्वमीमांसेति ब्राह्मण-ग्रन्थविचारं कथयन्ति । उत्तरमीमांसेति च औपनिषदविचारम् । पूर्वोत्तरपदघटितमीमांसापदमेव हि मीमांसाशास्त्रस्य ऐकशास्त्र्यमावेदयति ।

अत्र च गमकं, प्रवचनपरंपराबोधकं 'ब्रह्मा प्रजापतये मीमांसां प्रोवाच" इति एकवचनान्तमीमांसापदघटितवाक्यमिति नात्र मीमांसाद्वय-कल्पनायाः मनागपि प्रसक्तिर्भवति । पूर्वोक्त'ब्रह्मे'तिवाक्ये ब्रह्माणमारभ्य कृष्णद्वैपायनपर्यन्तमियं मीमांसा कर्मकाण्डादिब्रह्मकाण्डपर्यन्तवेदवाक्यानां परस्परमविरुद्धतात्पर्यमभिदधती लोके स्वात्मानं अभेदेनैव बोधयति । तादृशीमेव च कृष्णद्वैपायनः स्वशिष्याय 'जैमिनये' चोपदिदेश । स च भगवान् जैमिनिः शिष्यत्वात् ब्रह्मविद्याङ्गभूतां कर्ममीमांसां 'अथाऽतो धर्मजिज्ञासेति प्रक्रम्य प्रवर्तयामास । आचार्यस्तु व्यासः प्रधानभूतः "अथाथोब्रह्मजिज्ञासे"ति प्रक्रम्य चतुर्भिरध्यायैः ब्रह्मकाण्डं विवव्रे ।

कर्मणां ब्रह्मविद्याङ्गत्वं च 'तस्मात् ब्राह्मणा विविदिषन्ति यज्ञेन इत्यादिवाक्यैरवगम्यते । अतो नात्र कर्ममीमांसाब्रह्ममीमांसयोः विभिन्न-विषयकत्वनिबन्धनविरोधप्रसक्तिः, न वा तन्मूलकमीमांसाभेदकल्पनायाः प्रसङ्गः । एतद्विस्तरस्तु श्रीभाष्यतत्त्वाञ्जने अस्मदीये द्रष्टव्यः ।

## सूत्रकारकालः

सूत्रकारश्च भगवान् जैमिनिः श्रीबादरायणशिष्यः इति, 'ब्रह्मा प्रजापतये मीमांसां प्रोवाच। सोपीन्द्राय, सोप्यादित्याय स च वसिष्ठाय; सोऽपि पराशराय; पराशरः कृष्णद्वैपायनाय; स च जैमिनये स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबबन्धे'ति श्रीपार्थसारथिमिश्रोद्धृतवाक्येन विज्ञायते। तथा च व्यासजैमिनी समानकालिकाविति सिद्ध्यति। व्यासश्च श्रीभगवत्कृष्णसमकालिकः इति इतिहासविदां सुस्पष्टम्। श्रीकृष्णकालश्च द्वापरयुगान्ते इति श्रीभागवतादिभिर्ज्ञायते। एवं च भगवान् जैमिनिः द्वापरयुगान्ते कलियुगारंभात् प्राक् व्यासाल्लब्धामिमां प्रवर्तयमासेति सूह्यम्॥

## जैमिनिसूत्रभाष्यकारः

दक्षिणदेशे उत्पन्नः पण्डितप्रकाण्डः आदित्यमण्डलान्तर्वर्त्यरविंदाक्षोपासकः, अत एव च 'आदित्यदेव' इति विख्यातः सर्वशास्त्रनिष्णातः जैमिनिसूत्राणां भाष्यमतिमनोहरं, सर्वातिशायिन्या शैल्या विबुधानां हृदयंगमं प्रणिनाय। तस्यैव च 'शाबरभाष्यमिति' नाम बरीवर्ति। तत्र चेदं कारणम्— पूर्वोक्तः विद्वद्धौरेयोऽयमादित्यदेवः बौद्धानां वेदविद्वेषिणां आक्रमणात् भीतभीतः जडभरतवत् शबरवृत्त्या चात्मानमाच्छाद्य स्वीयजीवनानिर्वाहं चकार। तत्तेजसा चाकृष्टाः जनाः तमिममादित्यदेवमेव 'शबरस्वामी'ति नाम्ना कथयांबभूवुः। अतस्तद्भाष्यं 'शबरभाष्य'मिति प्रथते स। अस्य च कालः ईशातः प्राक् तृतीयशताब्दिरूपः इति ऐतिह्यविदः वर्णयन्ति।

अस्य च महानुभावस्य या भाष्यशैली तामेव अनुसस्रुः अन्ये च दार्शनिकधुरंधराः स्वस्वभाष्येषु। एतदेव चालं अस्य भाष्यस्य महत्वं प्रकर्षं सर्वोत्कृष्टत्वं सूचयितुम्।

## वार्तिककारः कुमारिलभट्टपादः

शबरस्वामि विरचितभाष्यस्य गंभीरार्थकतया न सामान्यमतीनां तदर्थावबोधो भवितेति तद्भाष्यार्थविवरणार्थं द्वे हि परंपरे प्रवृत्ते भवतः। एका भाट्टपरंपरा, अन्या च प्रभाकरपरंपरेति। तत्र च भाट्टपरंपरायाः प्रवर्तकाः एते कुमारिलभट्टा भवन्ति। भाट्टपरंपराया एव च लोकानुसारित्वात् सर्वैरपि तीर्थकरैः इयमेव परंपरा समाद्रियते। 'व्यवहारे भट्टनयः' इति च प्रसिद्धिरपि चकास्ति॥

'कुमारिलभट्टाः' इति प्रसिद्धिजुषः एते भट्टपादाः श्री शंकराचार्यसमकालिकाः इति चारित्रविमर्शकाः प्राहुः। यद्येतेषां महानुभावानां प्रादुर्भावो न स्यात् वैदिकमार्ग एव प्रणष्टः स्यात् बौद्धाक्रमणेन। बौद्धसमयनिराकरणेन वेदसमयविजयवैजयन्ती एतैरेव हि परिरक्षिता उन्नतस्थाने संप्रापिता अद्यापि राराजते।

बौद्धमतमेव संप्रविष्टाः बौद्धार्थसर्वस्वं तेभ्य एवाधीत्य पश्चात् समाधिगतबौद्धमतमर्मविज्ञानाः एते सम्यगेव तन्मतनिरसनेन वेदमार्गं परिरक्षुः। अत एव बौद्धखण्डनसंजातगुरुद्रोहजपाप-(शङ्का) परहरणाय तुषाग्निप्रवेशेन देहत्यागं च स्वीचक्रुः। अहो! वेदमार्गरक्षणतत्परता, धर्मश्रद्धाचेति तदिदं स्मारं स्मारं पण्डितलोकः आस्तिकसमाजश्चेदानीमपि विस्मयाविष्टो भवति। एतत्तुषाग्निप्रवेशसमये एव शङ्कराचार्याणां एतेषां च परस्परसमागमो बभूवेति च प्रसिद्धिः।

भट्टपादैः शाबरभाष्यव्याख्यारूपेणारचितं वार्तिकम् । तच्च त्रिपथगावत् त्रेधा परिदृश्यते ।

१) श्लोकवार्तिकम् ।

२) तन्त्रवार्तिकम् ।

३) टुपूटीकेति च ।

आद्यं हि श्लोकवार्तिकप्रथमाध्यायप्रथमपादभाष्यमात्रस्य विस्तृतमनुपमं पण्डितैरवतंसीक्रियमाणं च व्याख्यानम् ।

द्वितीयं तु प्रथमाध्यायद्वितीयपादमारम्भ तृतीयाध्यायतृतीयपादान्तस्य ( निवीतान्तभागस्य ) विवरणरूपं गद्यपद्योभयरूपम् ।

ततः पश्चात् भाष्यभागस्य आद्वादशाध्यायस्य व्याख्यानरूपं अतिसंक्षिप्तं 'टुपटीके'ति व्यवह्रियमाणं समुल्लसति ।

श्लोकवार्तिकाभिधे प्रथमाध्यायप्रथमपादशाबरभाष्यव्याख्यारूपे अस्मिन् तत्र तत्र नैकत्र भाष्यस्पष्टीकरणं, अवैदिकमतनिराकरणं, मीमांसक (वैदिक) मतस्थापनं वेदमार्गानुसरणावश्यकता, वेदापौरुषेयत्वं इत्यादिकं सम्यक् निष्प्रकम्प्यमेतैर्म्यरूपि ।

किं बहुना ? वार्तिककाराह्येते, प्रमातृ-प्रमेय-प्रमिति-प्रमाणाजीवादिस्वरूपाणि तथा विवृण्वन्ति, यथा जैमिनिसूत्रोपज्ञं चेदं मीमांसाशास्त्रं 'मीमांसदर्शनं'मिति दर्शनपीठमलभतेति । नेयमुक्तिरर्थवादरूपा ( अतिशयोक्तिः ) अपि तु सुतरां पारमार्थिकी इति पण्डितरूपवेद्यं भवति ।

## भट्टपादकृतदर्शनविवेचनप्रकारः

वेदविरोधिनः **बौद्धास्तावत् 'लोकसंवृतिसत्यं च सत्यं च परमार्थतः'** इति सत्यद्वयस्वीकरणेन स्वसिद्धान्तं स्थापयन्ति। तदिदं एकमेव सत्यमिति स्वीकुर्वद्भिः वेदप्रामाण्यस्थापनबद्धदीक्षैः **कुमारिलभट्टपादैः** निरालंबनवादे

संवृतेर्न तु सत्यत्वं सत्यभेदः कुतोऽन्वयम्। इत्यारभ्य

"तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः।
तत् सत्यमन्यत मिथ्येति न सत्यद्वयकल्पना॥"

इत्यन्तभागे विस्तरेण प्रदूष्यते। तस्य च फलं वेदप्रामाण्यसिद्धिरिति च **"तस्मात् धर्मार्थिभिः"** इत्यादिना प्रत्यपादि।

एवं सत्यद्वयनिराकरणेन भट्टपादानां इदमपि पर्यालोचितं भवति यत् ब्रह्मज्ञानेतराबाध्यत्वरूपं व्यावहारिकं सत्यं अत्यन्ताबाध्यत्वरूपं पारमार्थिकम् सत्यं, इति भिदाया आधुनिकवेदान्तिनां सापि न युक्तेति। वेदप्रामाण्यस्यापि हानापत्तेः। उक्तं च **भट्टपादैः**

'सत्यत्वं न चसामान्यं मृषार्थपरमार्थयोः' इति।

आरंभणाधिकरणे शंकराचार्यैः- 'प्राक् चात्मावगतेः अव्याहतः सर्वः सत्यानृतव्यवहारः लौकिको वैदिकश्चेत्यवोचाम। तस्मात् अन्त्येन प्रमाणेन प्रतिपादित आत्मैकत्वे समस्तस्य प्राचीन व्यवहारस्य बाधितत्वात् नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति' इति। परमार्थावस्थायां ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते व्यवहारावस्थायां तु उक्तः श्रुतावपीश्वरादिव्यवहारः" इति चोक्तम्।

अत्र **भट्टपादानां** सत्यद्वयनिराकर्तॄणां अयमाशयः **बौद्धमत**-निराकरणेन सूचितो भवति; शास्त्रस्य परमार्थसत्यत्वमनङ्गीकृत्य व्यावहारिकसत्यत्वाङ्गीकारे व्यावहारिकस्यापि बाधितत्वेन परमार्थसद्विलक्षणत्वेन शशशृङ्गवैलक्षण्यमेव स्यात्। बौद्धैरपि व्यावहारिकसत्यत्वमङ्गीकृतमेवेति **बोधिचर्यावतारपञ्जिकायां - 'संवृत्तिः परमार्थश्च सत्यद्वयमिदं स्मृत मित्येतद्विवरणे तस्मा व्यवहारसत्य एव स्थित्वा परमार्थोदेश्यते। परमार्थदेशनावगमाच्च परमार्थाधिगमो भवति । तस्यातदुपायत्वादिति यदुक्तं शास्त्रे**
**व्यवहारमनाश्रित्य परमार्थो न देश्यते।**
**परमार्थ मनागम्य निर्वाणं नाधिगम्यते'** इति।

एवं सत्यद्वयमङ्गीकृत्य निर्वाहिकरणे यथा **बौद्धाः** वेदविदूषका भवन्ति, **विवर्ताद्वैतिनो**पि तथैवेति, तन्मतमपि मीमांसमूर्धन्य**भट्टपादैः** दूषितमेव। अन्यथा वेदप्रामाण्यभङ्गापत्तेः, तत एव च वौदिकत्वहानिरपि।

अविद्यावलंबनेनैव स्वसिद्धान्तं स्थापयतां **विवर्ताद्वैतिनां** पक्षः **श्लोकवार्तिककारैः**, शतशः निराक्रियते यथा—

**स्वयं च सिद्धरूपत्वात् असत्वाच्चान्यवस्तुनः।**
**स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किं कृता॥**

**अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते।**
**स्वाभाविकीमविद्यां तु नोच्छेतुं कश्चिदर्हति॥**

**विलक्षणोपपाते हि नश्येत् स्वाभाविकी क्वचित्।**
**न त्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः॥ इति॥**
(श्लो-वा,सं,आ,परि)

एवमनेकस्थलेषु भट्टपादाः वेदमार्गाविदूरबौद्धामतवत् शाङ्करमतमपि सम्यगेव वैदिकमार्गपरिरक्षणाय प्रादूषयन्। तदिदं प्राप्तस्थले विशदीकुर्मः।

एवं प्रमाणविषये सौगतैः प्रत्यक्षस्य विशेषविषयत्वं विवर्ताद्वैतिभिः सामान्यविषयत्वं च यदङ्गीक्रियते तदुभयमपि भट्टपादैः विस्तरेण प्रदूष्य प्रमाणानुसारेण, लोकानुसारेण च—

संबद्धं वर्तमानं च गृह्यते चक्षुरादिना।
सामान्यं वा विशेषो वा ग्राह्यं नातोऽत्र कल्प्यते॥ इति
(प्र-सू-८४)

प्रत्यक्षव्यवस्था संप्रदर्शिता वर्तते। 'सन्मात्रग्राहि प्रत्यक्षं' इति वदतां विवर्ताद्वैतिनां पक्षस्य दूषणावसरे—

तद्युक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात्।
न ह्याख्यातुमशक्यत्वात् भेदो नास्तीति गम्यते॥

निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः।
ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते॥

न चासाधारणत्वेन परव्यावृत्त्यकल्पनात्।
विशेषानुगमाक्लृप्तेः सामान्यमिति नापि तत्॥ इति

अयमाशयः— निर्विकल्पकेन स्वरूपमात्रेण सामान्यविशेषौ गृह्येते नासाधारणतया सामान्यतया च व्यावृत्त्यनुगमविकल्पाभावात्। द्व्यात्मकस्येत्यस्य सामान्यविशेषात्मकस्येत्यर्थः। सामान्यावभासोऽपि प्रतीतिसिद्ध न वा अगृहीते एव। न हि निर्विकल्पकेनागृहीतस्य सविकल्पकेनापि ग्रहणं संभवति। सामान्ये व्यक्त्यन्तरे प्रत्यभिज्ञा घटते। तस्मात् सामान्यं विशेषश्च निर्विकल्पकेऽपि भासेत एवेति।

एवं च प्रत्यक्षविषये **भट्टपादाः** न सन्मात्रस्य ग्राह्यतेति स्पष्टं वदन्तः प्रपञ्चापलापिनां वेदान्तिनां पक्षं निराकुर्वन्ति। ततश्च प्रपञ्चसत्यत्वसंस्थापनद्वारा वेदप्रामाण्यसिद्धिरिति **भट्टपादाना**माशयः (मीमांसकसंमतः)। एवमन्येष्वपि प्रमाणेषु **भट्टपादानां** वैलक्षण्यं सुधीभिरूह्यम्। विस्तरभयात्तु उपरम्यते। तत्तत्प्रकरण-व्यवस्थाऽवसरे विशदीभविष्यति।

## भाट्टसंमतात्मविचारः

**औत्पत्तिकसूत्रे भाष्यकारैः शबरस्वामिभिः**, असंवादविसंवादाभ्यां वेदस्याप्रामाण्यमिति शङ्कानिराकरणवेलायां आत्मवादे एवमभिहितम्—यथा

"नचाहं प्रत्ययो व्यामोह इति शक्यते वक्तुम।
बाधकप्रत्ययाभावात्"

इति। एतद्विवरणे **वार्तिककारैः भट्टपादैः**

'नतास्मिन् स इति ज्ञानं नह्यसौ भ्रान्तिकारणम्।
न चाहं प्रत्ययो भ्रान्तिरिष्टो बाधकवर्तनात्॥'

इति विव्रियते। तथा च अहमर्थः आत्मा इति स्थापयन्तः **वार्तिककारा** अह-मर्थानात्मत्ववादिनां मतं दूरीकुर्वन्तीति स्पष्टम। एवं—

नैरात्म्यवादपक्षे तु पूर्वमेवावबुध्यते।
मद्विनाशात् फलं न स्यात् मत्तोऽन्यस्याथवा भवेत्॥

इति वदन्तः वेदप्रामाण्यं नित्यात्मवादपक्ष एवहि सिद्ध्यति। न तु शरीरमात्र-मात्मेति पक्षे न वा ज्ञानमात्रमात्मेति **बौद्ध**वेदान्तिपक्षे इति स्पष्टमेवावेदयन्ति। ज्ञानं चात्मनिष्ठं विषयावगाहिचैतन्यपदवाच्यं इति च **वार्तिककाराणां**

संमतम्  ज्ञातृत्वं च न शरीरेन्द्रियप्राणदीनां संभवतीति ज्ञातृगोचर एवाहं-प्रत्ययः इति मीमांसकानां पक्षः **भट्टपादैः आत्मवादे** व्यवस्थापितः ।

शरीरेन्द्रियादिविलक्षणाः प्रतिशरीरं भिन्नाश्चात्मानः अनेके इति आत्मभेदः पारमार्थिकः इति भट्टपादैः आत्मवादे अन्यत्र च **तन्त्रवार्तिकादौ** सम्यक् विवव्रे । ननु चोपनिषत्सु स्मृतिषु आत्मैकत्ववादानां का गतिरिति चेत् अवैलक्षण्यपरत्वात् न दोषः इति ब्रूमः । यथा चाहुः **अभूर्वाधिकरणो तन्त्रवार्तिके भट्टपादाः**–

'चैतन्यात्मकत्वात् अविभागाच्चोपनिषत्सु ऐकात्म्यव्यवहारः' इति ।

**शंकर**सम्मतं **अविद्यावादं ऐकात्म्यवादं** च संबन्धाक्षेपपरिहारे–

**स्वयं च शुद्धरूपत्वात् असत्त्वाच्चान्यवस्तुनः ।**
**स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥८४॥**

अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते ।
स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥८५॥
विलक्षणोपपाते हि नश्येत् स्वभाविकी क्वचित ।
नत्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥८६॥

इति विस्तरेण दूषयन्ति एव **कुमारिलभट्टा**चार्याः । अत्र व्याख्याने श्री **पार्थसारथिमिश्राः** प्राहुः **'निरस्तोऽयं पक्षः निरालंबनवादेने'**ति । तथा च **बौद्धवेदान्तिनां** साम्यं प्रदर्शयन्तः मीमांसकाः बौद्धसमयनिरसनेन तदनु-यायिवेदान्तिसमयमपि निरस्तमेवेति मन्यन्ते । अत एव निरालंबनवादान्ते **श्लोकवार्तिककाराः**

युक्त्यानुपेतामसतीं प्रकल्प्य
यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बौद्धैः
ग्राहं गतास्तत्र कथाचिदन्ये ॥

इति उद्घोषयन्तः 'अन्ये' इत्यनेन पदेन वेदान्तिनः **बौद्धगन्धिनः** परिगृह्य तानपि निरस्तान् मन्यन्ते। वासनास्वीकारः बौद्धानां, अविद्यास्वीकारः तत्प्रगन्धिनामेषामिति परं विशेषः। निरासप्रकारः उभयोस्सम एव। व्यक्तीभविष्यति चेदं तत्रेत्यत्रोपरम्यते।

स चायमात्मा द्विविधः **जीवात्मा परमात्मा** चेति। परमात्मस्वरूपं च ग्रहैकत्वाधिकरणे तन्त्रवार्तिके भट्टपादैरेतैस्स्पष्टमेवोल्लिख्यते

तथा व्योमशरीरोऽपि परमात्मा श्रुतौ मतः।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥

शब्दब्रह्मेति यच्चात्र शास्त्रं वेदाख्यमुच्यते।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ इति ॥

अत्र **न्यायसुधा**– " कस्याः श्रुतेः व्योमशरीरताश्रुतेत्यपेक्षायां **'खं ब्रह्म'**ति श्रुत्या व्योमशरीरतया उदितः इत्युक्तम्। **'य आकाशे तिष्ठन् आकाशमन्तरायमयति यमाकाशो न वेद ; यस्याकाशः शरीरमेष त आत्मा अन्तर्याम्यमृतः'** इति श्रुत्यन्तरसूचनार्थः चकारः ; **'शब्दब्रह्मे'**त्यत्र शब्दब्रह्मवादस्य च चेतनाचेतनयोः तादात्म्यानुपपत्तेः शब्दः ब्रह्माधिष्ठानमित्येवं व्याख्येयत्वात्। शब्दात्मकानामपि वेदानां देहतां ब्रह्माख्यस्य परमात्मनोऽपि देहाधिष्ठातृतां सूचयितुमाह **शब्दे**ति यद्वेदाख्यं शास्त्रं शब्दब्रह्मेत्युच्यते तत् अधिष्ठितमिति योज्यम् " इति।

खण्डदेवोऽपि कुमारिलभट्टानुयायी भाट्टरहस्ये उपनिषदादि प्रमाणगम्यमीश्वरमप्यङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थः तात्पर्यरूपा च इत्याह ।

एतेन वृत्तिकार (बोधायन)संमताः जीवपरमात्मभेदभावः शरीरात्मभावेन सामानाधिकरण्ये निर्वाह जीवानां परस्परभेदः प्रपञ्चसत्यता इत्येवमादयः अर्थाः वार्तिककार (भट्टपाद) संमताश्चेति सिद्धम् । एतद्विस्तरस्त्वन्यत्र ।

आत्मा चायं (जीवः) ज्ञाता सुखदुःखाश्रयः ज्ञानरूपः । सुखदुःखाद्यनुभव एव च स्वस्थः मुक्त इत्युच्यते । तथा च येचात्यागमापायिनो धर्माः सुखदुःख-इच्छा-द्वेष-प्रयत्न-धर्म-अधर्म-संस्काराः तानपहाय यदस्य नैजस्वरूपं ज्ञानशक्तिद्रव्यत्वादि तद्विशिष्टतया च स्थितिरेव मुक्तिरित्युच्यते । विस्तरेणचायमर्थः आत्मवाद असमदीये श्लोकवार्तिकभूषणे द्रष्टव्यः ।

## ज्ञानप्रामण्यनिरूपणम्

अस्ति हि ज्ञानप्रमाण्यविषये प्राचां दार्शनिकानां बहुधा विवादः श्लोकवार्तिके चास्मिन् ते प्रकाराः सम्यगेव विवेचिताः परिलसन्ति ।

१) प्रामाण्यमप्राण्यामुभयं च स्वत एवेति सांख्याः ।
२) नैयायिकास्तु उभयमपि परत एवेति प्राहुः ।
३) बौद्धास्तु परतः प्रामाण्यं स्वतस्त्वप्रामाण्यमिति ।
४) मीमांसकाः पुनः प्रामाण्यं स्वतः, अप्रामाण्यं परतः ।

इति सिद्धान्तयन्ति परपक्षप्रतिक्षेपपूर्वकम् ।

अनभ्यासदशापन्ने ज्ञाने यः संदेहो जायते तदुपपत्तये अनुमानादिना प्रामाण्यं ज्ञायते इति **नैयायिकानामाशयः** ।

तत्र **मीमांसकाः**— ज्ञानं यदि स्वगतप्रामाण्यं स्वत एव ग्रहीतुं न पारयेत् तर्हि जगदान्ध्यप्रसङ्गो भवेत् । नैव स्वतोऽनिश्चीयमानोऽर्थः परतः निश्चेतुं पार्येत ; परस्यापि तद्वदेवासमर्थत्वात् । ततश्च यत्र कुत्रापि वा स्वतो ग्राह्यत्वमङ्गीकरणीयम् । तद्वरं सर्वज्ञानेष्वपि प्रामाण्यं स्वतो गृह्यते इत्यङ्गीकारः । तच्च स्वतोग्राह्यत्वं प्राथमिकज्ञानग्राह्यत्वं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वमिति निष्कर्षः । एतादृशं च स्वतो ग्राह्यत्वं सर्वमीमांसकानां मतेषु घटते । तथाहि—

**मुरारिमिश्र**मते हि '**अयं घटः**' इति ज्ञानोत्पत्तिक्षणानन्तरं, तद्विषयकः अनुव्यवसायस्तावत् '**घटमहं जानामी**'त्याकारकः संभवति । तेनैव च प्रामाण्यं तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपं गृह्यते इति तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री व्यवसायात्ममनःसंयोगादिरूपा, तज्जन्यो ग्रहः अनुव्यवसायः, तद्विषयत्वं च प्रामाण्यस्य स्वीक्रियते; इति स्वतो ग्राह्यत्वोपपत्तिः ।

**प्राभाकर**समये ज्ञानानां स्वप्रकाशत्वात् **घटमहं जानामी**त्याकारक व्यवसायेनैव प्रामाण्यग्रहणं भवतीति ते तावदभिप्रयन्ति तन्मते हि ज्ञान ग्राहकसामग्रीपदेनेन्द्रियसंनिकर्षादिघटितसामग्रीस्वीकारात् तज्जन्यव्यवसायात्मकग्रहविषयत्वेन प्रामाण्यस्य स्वतो ग्राह्यत्वमुपपादनीयम्

**भाट्ट**मते चार्थतथात्वरूपं प्रामाण्यं ज्ञानेनैव गृह्यते । उक्तं च **श्लोकवार्तिके**—

तस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् ।
बाधकारणदुष्टत्वबोधाभ्यां तदपोद्यते ॥ इति ॥

एतच्च विस्तृतं चोदनासूत्रवार्तिके इति ॥

## देवताविग्रहादिविषये मीमांसकरीतिः

**पूर्वमीमांसकाः** विग्रहवतीं देवतां नैव स्वीकुर्वन्तीति **केचित् पण्डिताः मीमांसकान् निरीश्वरवादिश्रेण्यां** प्रक्षिपन्ति नेदं घटते। तथा हि **सूत्रकारस्तावत् भगवान् जैमिनिः** न कुत्रापि स्वयं प्रत्याचख्यौ स्वसूत्रेषु देवताविग्रहादिकम् । **भाष्यकारस्तावत् शबरस्वामी** अभ्युपगम्यापि विग्रहां शब्दमात्रमयीं देवतां कर्मणः प्राधान्यं सर्वाङ्गपरिपूर्णतां च निराबाधं उपपादयिष्यामीति **प्रौढिवादेन** देवतानां विग्रहत्वं निराकुर्वाणः भाष्यमाकलयांचकार नावमिकस्य देवताधिकरणस्य। कर्मणः प्राधान्यस्थापने एव भाष्यकाराभिसंधिः न तु देवताविग्रहनिराकरणे। नवमाध्यायप्रथमपादीयदेवताधिकरणस्थसूत्राणां देवताविग्रहपरत्वे न काप्यनुपपत्तिरिति अत्रैव प्रथमश्लोकव्याख्यानावसरे स्पष्टं न्यरूपि। **देवताधिकरणशाबरभाष्ये** आपाततः देवताविग्रहादौ नैर्भर्यमनाकलयतो भाष्यकारस्य शबरस्वामिनः अयमाशयः—केचिद्धि वेदार्थतत्त्वमनवगच्छन्तः तदुदिते कर्मणि नैर्भर्यमनावहन्तश्च देवताविग्रहमेव बहुमन्यमानाः अङ्गप्रधानादिक्रियाजातमगणयन्तः कर्मणो वैफल्यमेव संपादयेयुः इति तन्निराकरणाय देवतानां विग्रह एवासद्भूते कर्मकलापेष्वेवैकतानं मनः संपाद्यतेति। अत एव भगवान् सूत्रकृदापि स्पष्टमेव निराचष्टे देवतायाः प्राधान्यम् । तावतैवचेदमवगम्यते— देवतायाः प्राधान्ये कर्मण्यनिर्भरः संभवेज्जनानामिति सूत्रकृदभिप्रैति इति। शास्त्रदीपिकाकारप्रभृतयोऽपि विग्रहवत्त्वमभ्युपगम्यैव फलदातृत्वं प्राधान्यं च निराचक्रुः।

सूत्रकारः भगवान् जैमिनिः दशमचतुर्थे प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् अधिकारो वा अर्थशब्दानपायात् स्यात् द्रव्यवत्। ' तथा आरंभसमवायाद्वा चोदितेनाभिधानं स्यात् अर्थस्य श्रुतिसमवायित्वात् अवचनेच गुणशास्त्रमनर्थकं स्यात् 'इत्यादिसूत्रैः अग्न्यादिशब्दार्थस्यैव देवतात्वं स्थापयति। अत्र शास्त्रदीपिकाकारः– 'तत्र किमित्यर्थस्य देवतात्वं विधाय पश्चात् शब्दोच्चारणं विधीयतो प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधीयते। तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते ; येन हि शब्देनोद्दिश्य हविस्त्यज्यते; तस्यार्थस्य देवतात्वं भवति; इति ।

अत्र सोमनाथीये 'आग्नेयः ' इत्यादौ अग्निदेवतामुद्दिश्य हविस्त्यजेदित्यर्थस्य देवतात्वं श्रौतोऽर्थः । अग्निशब्दं समुच्चार्य हविस्त्यजेदिति शब्दोच्चारणमार्थिकोऽर्थः तत्र श्रौतोऽर्थो विधीयते इति स्वीकारेऽपि शब्दस्य पश्चाद्विधेयत्वं वक्तव्यं तेन विना देवतात्वानिर्वाहात् । तथासत्यावश्यकत्वात् अग्निशब्दमुच्चार्य हविः यजेत् इत्येवमार्थिकार्थ-शब्दोच्चारणमेव विधीयते। तद्विधानेचार्थस्य देवतत्वं प्राप्तमाग्नेय इत्यनूद्यते। इति नोभयविधानप्रयुक्तगौरवम् ; इति अतः एवमादिग्रन्थजातसंदर्भेण मीमांसकानां न देवताविग्रहनिराकरणनैर्भयम् ; किंतु कर्मप्राधान्यसमर्थने एवेति सिद्धम् । अत एव च मीमांसकानां निरीश्वरवादित्वापख्यातिनिराकृतिः भवतीति सिद्धम् । विस्तरस्त्वन्यत्र।

## वेदापौरुषेयत्वम्

मीमांसका हि वेदमपौरुषेयं, नित्यं स्वीकुर्वन्ति । अन्ये च दार्शनिकाः केचित् तदेतत् न सहन्ते । 'उत्पन्नो गकारः', इति लोके प्रतीतेः सत्त्वात् वर्णानामनित्यत्वं सिद्धम् । तत्समुदायरूपपदानां वाक्यानां चानित्यत्वं स्वत एव चायास्यति अतश्च वेदः अनित्यः । यथाकथञ्चित् वर्णानां नित्य-

त्वस्थापनेऽपि तदानुपूर्वीरूपवेदानां नित्यत्वं तु केवलमाशामोदकमात्रमेव भवति ।

एवं काठकादयश्च समाख्याः वेदानामपौरुषेयत्वं विघटयन्ति ; सकर्तृकत्वज्ञानजनकत्वात् । सकर्तृकत्वे सति पुरुषसबन्धनिमित्तकदोषसंभावनया प्रामाण्यमपि न निश्चेतुं पार्यते । तथा हि—

वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान्, वाक्यत्वात्, भारतादिवत् इत्यनुमानेन वेदानां पौरुषेयत्वस्यापरिहार्यत्वात् । पुरुषाश्च काठकादयः ईश्वरो वा भवतु । अत एव च त्रयो वेदाः अजायन्त इत्यादिश्रुतीनामप्यञ्जसोपपत्तिः इति वेदपौरुषेयत्ववादिनो मन्यन्ते ।

तदिदं न युक्तम् पुरुषैः वाक्यरचना तावत् अर्थं ज्ञात्वैव हि भवतीति सर्वानुभवसिद्ध वर्तते । अपूर्वात्मा च वेदार्थः न यथा कथंचिदपि पुरुषैः बुद्धौ आरोपयितुं पार्यते ; नातः पौरुषेयत्वं वेदानां सिध्येत् । काठकादिसमाख्याश्च प्रवचननिमित्तकतयाप्युपपद्यन्ते । पूर्वोक्तानुमानं तु सत्प्रतिपक्षितम् वेदः ; प्रागभावप्रतियोगितावच्छेदकधर्माभाववान् अस्मर्यमाणकर्तृकत्वात् इति प्रतिप्रयोगसद्भावात् । अनेनैव सोपाधिकत्वं च । न केवलमेतावत् ।

१) पूर्वकालो न वेदशून्यः, कालत्वात, वर्तमानकालवत् ।

२) प्राक्कालिकं वेदाध्ययनं, गुर्वध्ययनपूर्वकं अध्ययनत्वात्, इदानींतनाध्ययनवत् ।

३) वेदः न पौरुषेयः, संप्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वात् इत्याद्यनेकप्रत्यनुमानैः पौरुषेयत्वस्य समूल उन्मूलनात् ।

ननु चास्मर्यमाणकर्तृकत्वं न वेदापौरुषेयत्वसाधने पर्याप्तं भवति ; अस्मर्यमाणकर्तृककूपादौ व्यभिचारसंभवादिति चेत् , न ; तत्रापि सामान्येन कर्तृस्मरणात् । आदाराभावात्तु विशेषतः न स्मर्यते । वेदेषु सर्वजनादरभूतेषु कर्तृस्मरणाभावः कर्तुरभावमेव हि साधयेत् ।

यच्चोक्तं- '**अग्नेः ऋग्वेदः**' इत्यादिवेदवाक्यैरेव वेदपौरुषेयत्वमवगम्यते ; इति, तदपि न घटते । '**वाचा विरूपं नित्यया**' **ब्रह्म स्वयंभु इत्याद्यनेकवाक्यैः** वेदनित्यत्वावगतेः तदविरोधेन अग्निना ज्ञापितः इत्यर्थस्वीकारादेवाविरोधात् । **स्मृतयश्च**–

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
स्वयम्भूरेष भगवान् वेदो गीतः स्वयम्भुवा ॥
हर्याद्याः ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ।

इत्यादयः वेदापौरुषेयत्वं साधयन्ति ।

किंच– पौरुषेयत्ववादिनं भवन्तं पृच्छामः– किमिदं पौरुषेयत्वं भवतोऽभिप्रेतम् ? किं पुरुषाधीनोत्पत्तिकत्वं ? उत मानान्तरेणार्थमुपलभ्य रचितत्वम् ?

न प्रथमः– आकाशवत् सर्वगतानां नित्यानां कालतो देशतश्च क्रमरहितानां अनित्योच्चारणक्रमविशिष्टानां पूर्वपूर्वक्रमानुसरणनिमित्ततत्सदृशोत्तरक्रमवतां वेदशब्दवाच्यानां पुरुषाधीनोत्पत्तिकत्वस्येष्टत्वात् ।

नापि द्वितीयः– अग्निहोत्रादिनिष्ठफलसाधनत्वादेर्मानान्तरानधिगम्यत्वात्

किं च कोऽयं पुरुषो वेदकर्तृत्वेनाभिप्रेतः किं कश्चिन्मनुष्यः ? उत योगी ? अथ ईश्वरः ?

नाद्यः- मनुष्ये **धर्मादिज्ञानस्य** वेदाधीनत्वेन तस्य तत्कर्तृत्वानुपपत्तेः । न द्वितीयः योगिनिष्ठबाह्येन्द्रियाणां **धर्माधर्मयोरप्रसरात्** ; तद्गतान्तरिन्द्रियस्यापि आत्मयोग्यगुणातिरिक्तज्ञानजनने मनसोऽप्रभविष्णुत्वात् ।

नापि तृतीयः- **वेदादीश्वरसिद्धिः, वेदश्चेश्वरप्रणीतः** इत्यन्योन्याश्रयापत्तेः । तस्मात् कर्तृस्मरणाभावात् अपौरुषेयत्वं वेदानां निराबाधं सिध्यति ।

अपौरुषेयत्वादेव निराबाधं स्वतःप्रामाण्यं पदानां न परिहर्तुं शक्यते । **शब्दनिष्ठं** स्वतः प्रामाण्यं अनधिगताबाधितार्थबोधकत्वम् । ज्ञाननिष्ठं स्वतः प्रामाण्यं अनधिगताबाधितार्थविषयकज्ञानत्वम् ।

**अपौरुषेयत्वं नाम** पूर्वकालत्वअध्यापक-समानानुपूर्वीकाध्ययनविषयत्वे सति **सर्व**जनसमादरणीयत्वे सति अस्मर्यमाणकर्तृकत्वम् ।

यद्वा पुरुषसमवेतमानान्तरजन्यज्ञानानपेक्षोत्पत्तिकानुपूर्वीकत्वे सति अध्ययनविषयत्वम् । नित्यत्वं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । इदं वर्णजातस्य । वेदस्य तु आनुपूर्वीविशेषविशिष्टवर्णसमुदायरूपस्य नित्यत्वं अपौरुषेयत्वेनैव चरितार्थमिति न पुनर्विचार्यते । एतत्सर्वं च **प्रथमाध्यायप्रथमपादीयान्तिमाधिकरणश्लोकवार्तिके तद्भूषणे** च मदीये स्पष्टम् ।

प्रमाण-भेद-शेषत्वप्रयोज्यत्व-क्रम-अधिकार सामान्यातिदेशविशेषातिदेश-ऊह-बाध-तन्त्र-प्रसङ्गरूपान् द्वादशार्थान् प्रतिपादयन्ती द्वादशाध्यायपरिमिता मीमांसा सर्वशास्त्रोपजीव्या राराजते ; इति नातिशयोक्तिरियम् । तत्रापि

श्लोकवार्तिकमिदं भट्टकुमारिलप्रणीतं मीमांसकसर्वस्वप्रकाशकं अनुपमं ग्रन्थ-रत्नं भाभाति ।

विषयगाम्भीर्यात् , श्लोकरूपेण विद्यमानत्वाच्च अर्थग्रहणे क्लेशो भवतीति, **पूर्वव्याख्यानां पार्थसारथ्यादिभिः** महात्मभिः रचितानां सत्त्वेऽपि तेषां अतिसंक्षिप्तत्वेन लोकोपकारो न पूर्णो भवितेति पूर्वव्याख्यातृप्रदर्शितमार्गमेवानुसृत्य इयं " **श्लोकवार्तिकभूषण** "नाम्नी व्याख्या विरच्य प्रकाश्यते ।

एतत्प्रकाशने भारतसर्वकारः ( *Central Government* ) संपूर्णसाहाय्यमाकलय्य महान्तमुपकारं करोति इति वयंमधमर्णा तस्येति कृतज्ञतां समर्प्य ब्रूमः ।

देवनागर्यक्षरटंकनसमर्थानां (Sanskrit Compositors ) पुरुषाणां अलाभात् सांप्रतं प्रथमभागः परं निमित्तसूत्रपर्यन्तं प्रकाश्यते । अत्र च बहूपकृतवतां एतं च ग्रन्थं बहुश्रमेण मुद्राप्य साहाय्यंकृतवतां श्रीविजयलक्ष्मी मुद्रणालयस्वामिनां ( proprietor ) श्रीमतां विदुषां भा ॥ वं ॥ नरसिह्माचार्याणां उपकारः संस्मरणीयः वर्तते । तेषां कार्तज्ञ्यं समर्पयामः । अचिरादेव अस्य श्लोकवार्तिकभूषणस्य अवशिष्टः समस्तोऽपि भागः प्रकाशितो भवितेति निश्चप्रचं ब्रूमः ।

**मीमांसाशास्त्रतेजोभिः विशेषेणोज्वलीकृतम् ।**
**वेदार्थज्ञानरत्नं स्यात सर्वेषां मङ्गलप्रदम् ॥**

पण्डितरत्नम्—मीमांसावाचस्पतिः

**ई-श-वरदाचार्यः**

**पूर्वमीमांसाशास्त्रप्राध्यापकः**

श्रीः

श्रीलक्ष्मीहयग्रीवाय नमः

कुमारिलभट्टविरचितम्

# श्लोकवार्तिकम्

श्री वरदाचार्यविरचित

## भूषणव्याख्यासमलङ्कृतम्

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे ।
श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥

इति ॥

---

## श्लोकवार्तिकभूषणम्

अखिलमङ्गलकारणमच्युतं महितया रमया सुविभूषितम् ।
निखिलवेदसुरक्षणतत्परं हयमुखं भजते मम मानसम् ॥

वन्देहं नव्यरंगेन्द्रयतीशानं कृपानिधिम् ।
यदीयकरुणालेशादहं नीतोऽस्मि वस्तुतां ॥

नत्वा लक्ष्मीहयास्यं तं तत्प्रसादावलम्बनात् ।
क्रियते वरदार्येण श्लोकवार्तिकभूषणम् ॥

लोके हि धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु धर्म एव सर्वापेक्षया श्रेष्ठतरश्चकास्ति । अत एव च तस्य प्रथमं स्थानम् । स्थाने चैतत् । कथं ? त्रयाणामपि पुरुषार्थानां अर्थादीनां धर्मापेक्षायाः अवर्जनीयत्वात् । 'वायव्यं श्वेतमालभेत भूतिकामः' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत 'तस्मात् ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिवाक्यैः धर्मव्यतिरिक्तानां पुरुषार्थानां धर्माधीन-

त्वस्य स्फुटं प्रतीतेः । तत्र चार्थकामयोः साक्षात्साधनं धर्मः, मोक्षस्य तु परम्परया (वेदनद्वारा) इत्येतावानेव परं विशेषः । तादृशं च धर्मं दुरवगाहं निरूपयितुं भगवान् **जैमिनिराचार्यः** पूर्वमीमांसाशास्त्रसूत्राणि प्रणिनाय । तानि च द्वादशाध्यायपरिमितानि । सूत्राणि च तानि अतिगभीराणि मन्दमतिभिः दुर्बोधानीति **उपवर्षादयः** तेषां वृत्तिं चक्रुः । तादृशवृत्तीनामपि दुर्बोधार्थतां मत्वा भगवान् **शबरः** अनितरसाधारण्या मधुरमधुरया सकलार्थविशदीकरिण्या शैल्या एतेषां जैमिनिसूत्राणां भाष्यमेकं रचयामास । यच्च **शाबरभाष्य**मिति नाम्ना लोके प्रथते । तादृशं च भाष्यं सुललितमप्यतिगंभीराशयं विना व्यारव्यां मन्दमतीनां नोपकरोति; इति मत्वा लोकोपकाराय इतर (गुरु) प्रदर्शितकुत्सितार्थनिराकरणाय च तत्र भवान् कुमारिलभट्टः स्वकीयेन वार्तिकेन व्याचक्रे । तच्च वार्तिकं श्लोकवार्तिकं, तन्त्रवार्तिकं, टुप्टीका चेति शाखात्रयवत भवति । तत्र प्रथमाध्यायप्रथमपादस्य (तर्कपादस्य) विवरणरूपं यत् भाष्यं तद्व्याख्या श्लोकवार्तिकत्वेन प्रथते । तादृशग्रन्थस्य निर्विघ्नपरिसमाप्तये आदौ (स्वेष्टदेवतानमस्कारात्मकं) मङ्गलमारचयति— **विशुद्धेति** ॥

इदं च मङ्गलं कर्मपरमेव योजनीयम् । चोदनासूत्रे अन्यत्र च सर्वज्ञस्य बहुशः वार्तिककारैरेव निराकरणेन अस्य सर्वज्ञेश्वरविषयकत्वासम्भवात् । देवताधिकरणे नवमे देवतायाः विग्रहादीनां निरासात् देवताविषयकत्वासम्भवाच्च । ततश्च कर्मपरत्वे चायमर्थः **'विशुद्धज्ञानदेहाय'** मीमांसासंशोधितज्ञानदेहायेत्यर्थः। मीमांसानिर्णीतज्ञानाधीनानुष्ठानायेति यावत् । **'त्रिवेदीदिव्यचक्षुषे'** त्रिवेद्येव दिव्यं चक्षुःप्रकाशकम् यस्य इति विग्रहः। वेदमात्राधीनप्रमाविषयायेत्यर्थः । **चोदनालक्षणोऽर्थो धर्मः** (पू.मी.१.१.२.) इति सूत्रे चैतत् स्फुटीभविष्यति । **"श्रेयः प्राप्तिनिमित्ताय"** इष्टसाधनत्वविशिष्टाय इत्यर्थः । इदमपि चोदनासूत्रघटकीभूतार्थपदेन व्यक्तम ।

अनेन च पदद्वयेन एतच्छास्त्रप्रमेयधर्मलक्षणं सूचितं भवति । वेदबोधित-श्रेयःसाधनताकत्वरूपं हि तत् । **'सोमार्धधारिणे'** । सोमस्य अर्ध—स्थानं ग्रहचमसादि- तद्धारिणे तद्विशिष्टायेत्यर्थः । **'ग्रहैर्जुहोति'** इत्यादिवाक्यैः ज्योतिष्टोमादिकर्मणः सोमरसाधारभूतग्रहादिविशिष्टत्वस्य प्रतीतेः । तादृशे कर्मणे **'नमः'** ॥ इति ॥

वस्तुतस्तु ग्रहैकत्वाधिकरणवार्तिके ईश्वरसद्भावपक्षः वार्तिककारैरेव सुदृढमुपन्यस्तः । तथा हि—

'तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥ इत्यारभ्य

शब्दब्रह्मेति यच्चेदं शास्त्रंवेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥

॥ इति ॥

अतः परमात्मसद्भावपक्षस्य वार्तिककार (ग्रन्थकार) संमततया तत्परतयापि इदं योजयितुं शक्यते । अत एव च देवताप्रसादद्वारा फलप्रतिपादकानां अर्थवादादीनां अञ्जसा उपपत्तिः भविष्यति । अन्यथा वेदैकदेशस्य तत्प्रतिपादकभागस्य अप्रामाण्यगौणत्वान्यतरापातात् । न च तर्हि देवतायाः विग्रहप्रसादादिनिराकरणपरनवमाधिकरणविरोध इति वाच्यम् । सूत्रकारैः कुत्रापि देवताविग्रहादेरनिराकरणात् । देवताविग्रहादिनिरासकतया व्याख्यातृभिः नीतानां देवताधिकरणसूत्राणां यथावस्थितार्थस्त्वेवं दर्शयितुं शक्यते ।

तथा हि देवताधिकरणघटकीभूतानि पञ्चसूत्राणि (१) **देवता वा प्रयोजयेदतिथिवत्भोजनस्य तदर्थत्वात्** ।(२)आर्थपत्याच्च (३)। ततश्च तेन

सम्बन्धः । (४) अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः । (५)अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात् ॥ " इति । सूत्रेष्वेतेषु देवतायाः एव प्राधान्यमिति पूर्वपक्षः । कर्मणस्तु तदिति च सिद्धान्तः स्वरसतः प्रतीयते; न तु देवतादेः विग्रहनिराकरणम् । तच्च व्याख्यातृभिः स्वमत्या ऊहितम् । अथात्र पूर्वपक्षसिद्धान्तौ वर्णयामः । 'कर्मण एव फलसाधनत्वं; न देवतायाः;' इति सिद्धान्तोपरि एवं पूर्वपक्षः **'देवता वा प्रयोजयेत् भोजनस्य तदर्थत्वात्;'** इति । वा शब्दादाशङ्काव्यावृत्तिः । हविः प्रति प्रधानभूता देवतैव फलापेक्षिणं पुरुषं स्वपूजात्मके यागे प्रयोजयेत् ; कुतः ? भोजनस्य तदर्थत्वात् भोजनस्य– हविषः, यद्वा तत्समर्पणात्मकस्य तदर्थत्वात् , तच्छेषत्वात् यागे (त्यागे) उद्देश्यत्वेन व्याप्यमानं यत् द्रव्यं तेनापि सम्प्रदानभूतायाः देवतायाः व्याप्यमानत्वेन प्रधानतया सम्प्रदानभूता देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते । उक्तं चाचार्यैः–

**क्रियाप्रधानवाक्येषु न्यग्भूताऽपि हि देवता ।**
**तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी ॥**

इति ।

न च देवतायाः विग्रहादीनामयोगेन न प्रयोजकत्वं युक्तमिति वाच्यम् । अबाधितार्थवादादिप्रमाणैरेव तत्सिद्धेः । ततश्च यथा विग्रहादिविशिष्टातिथिः आराध्यः स्वार्थं स्वाभीष्टं उपचरणं प्रयोजयति तद्वद्देवतापीति भावः । देवतायाः विग्रहादिमत्वेऽपि स्वाराधकाभीप्सितफलविशिष्टत्वाभावात् न सा देवता कर्मकर्तुः फलं दद्यात् इति चेदाह 'आर्थपत्याच्च' इति । अर्थ्यते । प्रार्थ्यते इत्यर्थः । (विभूतिः) तत्पति-

त्वादित्यर्थः। परा खलु देवता सर्वस्येष्टे **'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'**। (प्रभुः फलप्रदातेत्यर्थः) इत्यादिवचनात्। तन्नियुक्ताश्च इतराः देवताः यथाधिकारं तत्तद्विभूतीनाम्॥ इति

ननु तथापि स्वयं इतरनिरपेक्षा देवता न केनापि प्रीयते न कञ्चन तर्पयति, अतः कथं तस्याः प्रयोजकत्वमिति चेदाह **' ततश्च तेन सम्बन्धः॥ '** इति। नैरपेक्ष्येऽपि देवतायाः दयौदार्यादिगुणशालिन्याः परिचर्यमाणायाः प्रसेदुष्याः देवतायाः एव हेतोः परिचरतां स्वाभीष्टफलेन सम्बन्धः स्मृत्यादिभिः प्रमाणैरवगतः इति॥ किमुक्तं भवति। यथा नरपतिः स्वयं निरपेक्षः सन्नपि दयौदार्यादिगुणसम्पन्नः पूजादिना प्रीतः स्वाश्रितानां फलदो भवति, तद्वन्निरपेक्षाऽपि देवता फलदायिकेति। अतः देवतायाः एव फलहेतुत्वमिति पूर्वपक्षः॥

राद्धान्तस्तु– **" अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् "** इति। अत्र अपिशब्दसंवलितवाकारेण पूर्वपक्ष्युक्तार्थाधाङ्गीकारः, तदसंमतार्थाङ्गीकारेण पूर्वपक्षव्यावृत्तिश्च सूच्यते। अयमर्थः, यद्यपि देवतायाः विग्रहादिपञ्चकं निषेद्धुमशक्यम्; एवं द्रव्याद्यपेक्षया सम्प्रदानस्य प्राधान्यं, यजेश्च देवतापूजावाचकतया यागस्य देवतार्थत्वं चेति; तथापि कर्तव्योपदेशपरेषु विधिवाक्येषु यागादेः कर्मणः **'यजेत स्वर्गकामः'** इत्यादिना फलसाधनत्वेन चोदितत्वात्, तदेव प्रधानं प्रतीयते; कृत्स्नं चान्यत् देवतादि क्रियाशेषभूतम्। अतः विधिवाक्ये कर्मण एव फलसाधनतया श्रूयमाणतया प्राधान्यमिति॥

नन्वेवं फलदायिन्याः देवताया एव प्राधान्यं युक्तं; कर्मणः आशुतरविनाशिनः कालांतरभाविफलसाधनत्वायोगात्। **" स एवैनं भूतिं**

गमयति" 'तृप्त एवैनं इन्द्रः प्रजया पशुभिश्च तर्पयति ।' इत्यादि श्रुतिभिः देवतायाः एव प्राधान्यश्रवणाच्च इति शङ्कायामाह— "गुणत्वे देवताश्रुतिः" इति । हविष्प्रदानं प्रति गुणीभूतां हि देवतां श्रुतयो वदन्ति । अतश्च वस्तुतः प्रधानभूताऽपि देवता फलकामप्रवर्तकवाक्येषु शब्देन प्रधानतया अवगतेषु कर्मसु गुणतया अवगता न प्रधानतया प्रयोजिका भवितुमर्हति ; इति ॥

एवं तर्हि अतिथेर्वा कथं प्रयोजकत्वं इत्यत्राह 'अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्' इति । अयमर्थः आतिथ्यं प्रति अतिथेरेव प्रयोजकत्वं स्वीकर्तव्यम् ; इतरथा तादृशकर्मणि (आतिथ्ये) प्रयोजकाभावात् कर्मण एव लोपः स्यात् । ननु अतिथिसत्कारविधेरेव प्रयोजकत्वं स्वीक्रियतामिति चेदाह । 'तस्य प्रीतिप्रधानत्वात्' इति । आतिथ्याख्यकर्मणः अतिथ्यागमनप्रतिविधानत्वेनैव विधानात् इत्यर्थः । अयं भावः, देवतायाः स्वयमागतायाः प्रीतिजननार्थं न यागादिकर्मविधानम् । किं तर्हि क्रियायां प्रवृत्तेन पुरुषेण समाहूता सा तादृश पुरुषेष्टसिध्यर्थं संनिधत्ते ? अतः कर्मणः न देवताप्रयोज्यता । अपि तु फलप्रयोज्यतैव । अतिथिस्तु स्वयं प्राप्तः, अतः तदिष्टानुविधानेन अतिथिपूजाना विधानम् । ततश्च प्राप्ताप्राप्तविवेकादतिथेः प्राधान्यमिति । अतः देवताधिकरणे नवमे देवताविग्रहनिरासकसूत्राभावात् विग्रहप्रसादादिवैशिष्ट्याङ्गीकारे न किमपि बाधकमिति ॥

न च देवतायाः विग्रहवत्त्वाङ्गीकारे विग्रहवती सा अनित्या स्यात् ; तथा च नित्यवेदविषयत्वं न स्यात् इति वाच्यम् । न हि देवदत्तादिशब्दवत इन्द्रादिशब्दाः वैदिकाः व्यक्तिविशेषे संकेतपूर्वकं

प्रवृत्ताः किं तर्हि, गवादिशब्दवदाकृतिविशेषवाचित्वेन ? अतश्च एकस्यामिन्द्रव्यक्तौ विनष्टायामपि अत एव वैदिकात् शब्दात् इन्द्रादेः, मनसि स्मृतात् लोकस्रष्टा धाता ज्ञातवाच्येन्द्राद्यर्थाकारः तदाकारमेवापरमिन्द्रम् सृजति, यथा च लोके कुलालः घटशब्दान्मनसि विपरिवर्तमानात् तदाकारमेव अपरं घटम्, इति। अत्र च श्रुतिस्मृती प्रमाणे भवतः। तथा हि–

**"वेदेन रूपे व्याकरोत् सतासती प्रजापतिः, स भूरिति व्याहरत स भूमिमसृजत। स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत' इति।**

**"अनाधिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः॥**
**नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम्।**
**वेदशब्देभ्य एवादौ देवादीनां चकार सः॥"**

इति च। अतः देवादीनां विग्रहादिमत्वेऽपि वेदानामनित्यत्वं न प्रसज्यते। सूत्रितं चैतत् भगवता **बादरायणेन**
**'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति॥**

ननु सत्यपि विग्रहे प्रदत्तस्य हविषः देवतया भोगः प्रत्यक्षविरुद्धः अशक्योऽभ्युपगन्तुम्। न चाभुञ्जाना प्रसीदतीति युक्तमिति। इति चेत्– अत्रेदं वदामः– अत्र प्रत्यक्षविरोधः इति, किं प्रत्यक्षासंवादो विवक्षितः ? उत प्रत्यक्षविसंवादः ? तत्र न तावदाद्यः- न हि वेदप्रामाण्याङ्गीकर्तृभिः वैदिकैः अदृष्टेष्वर्थेषु प्रत्यक्षासंवादापादनं युज्यते। यथाशास्त्रं ह्यभ्युपगन्तव्यं भवति। अन्यथा- ज्योतिष्टोमादिकर्माण्यपि न फलसाधनानि प्रत्यक्षतः अनुपलम्भात् इत्यापादने किमुत्तरं स्यात्। अतश्च शास्त्रैकगम्येष्वर्थेषु न प्रत्यक्षविरोधो दोषाय। प्रत्यक्षस्य तद्विषये अप्रवृत्तेः। सूत्रितं च भगवता **जैमिनिना**– '**प्रत्यक्षमनिमित्तम्**

**विद्यमानोपलम्भनत्वात्**' इति। न च द्वितीयः– देवतायाः अस्मत्प्रत्यक्षागोचरत्वेन अग्नौ प्रक्षेपात् भस्मीभूतेन हविषा तस्याः भोगो न भवति इति विरोधापादनस्यायुक्तत्वात् ॥

अथ स्यात्, मन्त्रार्थवादेतिहासपुराणेषु दैवतादीनामपि तपश्चरणक्रत्वनुष्ठानादिकीर्तनात् देवतानां देवतान्तराभावे कर्मण एव फलं न देवतयेति ; न स्यात् । तद्देवतापेक्षया अधिको यः परमात्मा तत्तोषार्थं तपःप्रभृतिषु कर्मसु देवताप्रवृत्तेरुपपत्तेः । श्रूयते हि शास्त्रेषु इन्द्रादिभिराराधितः परमात्मा सर्वकर्मसु समाराध्यः तेषां फलं ददाति ; इति ॥

न च स्तोकमण्डूकादीनां तिरश्चां, अचेतनानां च ओषधिवनस्पतीनां, अश्वानां गवां च हनुदन्तानां, अश्वरूपाणां कृष्णश्वेतादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्धधीत ? इति वाच्यम् । तत्तदभिमानिदेवतानां कर्मभिः प्रीतानां फलप्रदत्वमिति न विरोधः । यद्वा– **'सर्वात्मा' 'विश्वात्मानं'**

**न तदस्ति विना यत्स्यात् मया भूतं चराचरम् ।**
**मया ततमिदम सर्वं जगदव्यक्तमूर्तिना ॥**

**'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्'** इत्यादिभिः श्रुतिस्मृतिब्रह्मसूत्रादिरूपैः प्रमाणैः ब्रह्मणः तत्र तत्र वर्तमानत्वप्रतीतेः तिर्यगचेतनादिवाचकाः शब्दाः तदन्तर्यामिणमभिदधति इति तच्छरीरकपरमात्मोपासनया च प्रीतः स अन्तर्यामी फलं दास्यति इति च न विरोधः इति ॥

ननु विहितद्रव्यैः आज्यादिभिरेव देवताप्रीतिरिति कुतः, सुरादि-निषिद्धद्रव्यैरपि सा कुतो न स्यात्? इति चेत्, तत्र ब्रूमः— यत्र तावत् सुरादीनां विधानम्, यथा सौत्रामण्यां सुराग्रहेषु, तत्र नैवाक्षेपस्यावसरः, अन्यत्र विहितद्रव्यावरुद्धेषु कर्मसु नैव पुरुषबुद्ध्या आपादनं कर्तुं शक्यते। विहिततत्तद्रव्ययुक्तकर्मण एव धर्मपदवाच्यत्वात्। द्रव्यान्तरस्वीकारे च विहितकर्मानिष्पत्तेरिति। ननु देवताया एव फल-प्रदत्वे, तस्या एव प्रधानत्वात् देवतासादृश्यमादायैव प्रकृतिनिर्णयः कार्यः स्यात्। तथा च अष्टमाध्यायविरोधः— तत्र हि द्रव्यदेवतासामान्ये द्रव्यं बलीयः इति व्यक्तम्। अत एव च '**आग्नेयं पयः, ऐन्द्रः पुरोडाशः**' इति वाक्यविहितयागयोः यथाक्रमं सान्नाय्य, आग्नेय-विकृतित्वमिष्यते; अन्यथा देवताप्राधान्ये पयोद्रव्यकयागस्य आग्नेय-विकृतित्वं पुरोडाशद्रव्यकयागस्य च सान्नाय्यविकृतित्वं च स्यात्। न चैत-दिष्टमिति चेत्, सत्यम् — तत्र हि प्रत्यक्षेण द्रव्यस्य शीघ्रमुपस्थितेः देवतायाश्च शास्त्रेण विलम्बेनोपस्थितेः शीघ्रोपस्थितद्रव्यसादृश्यमेव निर्णा-यकमिति न विरोधः। विलम्बितत्वादेव च देवतासादृश्यस्य दौर्बल्यम्। विस्तारस्तु आचार्यसार्वभौमकृततत्वटीकयाऽवगन्तव्यः इति। अतश्च देवता-प्रसादद्वारा फलसाधकत्वं, युक्तिप्रमाणोभयोपष्टब्धमिति इदं मङ्गलं पर-मात्मपरमपि भवति।

कैश्चित्तु शिवरतैः महादेवपरत्वेन व्याख्यातोऽयं श्लोकः। परन्तु तदा सोमार्धधारित्वं तस्य लक्षणयैव व्याख्येयं भवेत्। चन्द्रकलावतं-सत्वेन, महादेवस्य, चन्द्रार्धधारित्वस्य कथमप्यसम्भवात्। अर्धपदस्य कलापरत्वं तु नैव लक्षणां विना सङ्गच्छते। एवं त्रिवेदीदिव्यचक्षुस्त्व-मपि गौणमेव, शिवपरत्वपक्षे, वेदात्मकचक्षुर्वैशिष्ट्यस्याप्रसिद्धेः। अतः

**अभिवन्द्य गुरूनादौ शिष्याधीपद्मिनीरवीन् ।**
**तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्तिकम् ॥ ॥ २ ॥**

---

त्रयीसंरक्षकत्वेन श्रुतौ प्रसिद्धस्य विशुद्धविज्ञानस्वरूपत्वेन उपनिषद्धोषितस्य '**मण्डलस्थस्सुधांशोः**' इत्यादिप्रमाणैः चन्द्रस्थानधारित्वेन प्रख्यापितस्य '**लभते च ततः कामान् मयैव विहितान् हितान्**' इति भगवद्गीतादौ सकलश्रेयःप्राप्तिनिमित्ततया गीतस्य भगवतो नारायणस्य श्रीलक्ष्मीहयग्रीवस्यैव नमस्कारकर्मत्वं वार्तिककृता अनुसन्धीयते । युक्तं चैतत्—ग्रहैकत्वाधिकरणादौ अयमेव वार्तिककारः— '**इज्यते वारिणा नित्यं खं ब्रह्मेति चोदितः**' इत्यादिना सूर्यमण्डलस्थं द्विजैः नित्यं वारिणं इज्यमानं (गायत्र्या) भगवन्तं परब्रह्मभूतं वासुदेवं प्रतिपादयति । आदित्यमण्डलस्थो हि श्रीमन्नारायण एवेति **छान्दोग्योपनिषदि** अन्तरादित्यविद्यायां '**य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते**' इत्यादिषु स्पष्टम् । अतः भगवान् श्रीमन्नारायणः मधुकैटभाभ्यां वेदापहारे ब्रह्मणः सञ्जाते, तद्रक्षणार्थं उपात्तहयवदनः पाताले स्वकीयदिव्यचक्षुषा त्रयीमन्विष्य आनाय्य चा तां पुनर्ब्रह्मणे प्रादात् इति **श्वेताश्वेतरोपनिषदि महाभारतादौ** च व्यक्तम् वेदार्थनिर्णयौपयिक्यां **मीमांसायां** तस्यैव स्मरणं नमनं च युक्तमिति सर्वज्ञः कुमारिलः '**त्रिवेदीदिव्यचक्षुषे**' इति तमुपकारं स्मृत्वा प्रणमति श्री लक्ष्मीहयास्यं, **सोमार्धधारिणे** इत्यपि श्री हयग्रीवपरत्वे एव स्वरसतया युज्यते । 'अर्ध' शब्दस्य स्थानवाचित्वेन, सोमशब्दवाच्यचन्द्रमण्डलस्थायेति प्रमाणानुसारेण तथोक्तेः । विस्तरस्त्वन्यत्र ॥

एवं भगवन्तं प्रणम्य विद्यागुरूणां स्तुतिप्रणामौ कुर्वन् वार्तिकप्रारम्भं च प्रतिजानाति— **अभिवन्द्येति** ॥

शिष्यधी पद्मिनीरवीन् गुरून् आदौ अभिवन्द्य तत्प्रसादात् मीमांसाश्लोकवार्तिकमहं करिष्ये इत्यन्वयः । अत्र शिष्यधियां पद्मिनीत्वेन गुरूणां

तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ॥ ३ ॥

---

रवित्वेन च रूपणात् शिष्यधीविकासः गुर्वनुग्रहमन्तरा नैव प्रकारान्तरेण भवतीति द्योत्यते । न हि कमलानां विकासः आदित्यमन्तरेण अग्न्यादिज्योतिषा भवति । बहुदूरस्थोऽपि हि रविः उदकस्थं कमलं यथा विकासयति, एवं आचार्यः दूरस्थोऽपि स्मरणमात्रेण शिष्यज्ञानविकासहेतुः इत्यपि द्योत्यते । एवं आदित्यः न पद्मोत्पादाकः किन्तु विद्यमानपद्मविकासहेतुः तद्वत् आचार्योऽपि शिष्यात्मनि ज्ञानं नोत्पादयति, किं तर्हि नित्यतया आत्मनि विद्यमानं धर्मभूतं ज्ञानं विकसितं यथा भवेत् तथा करोति इति च द्योत्यते । तथा च " **न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते** " इत्यादिप्रमाणैः जीवात्मनिष्ठधर्मभूतज्ञानस्य नित्यस्यैव कर्मणा सङ्कोचः गुर्वनुग्रहेण तद्विकासः इति यस्सिद्धान्तः स एव **कुमारिलभट्टसंमतः** इति **भट्टपादानां** आशयः । आह च भगवानपि **गीतायां 'तेषामादित्यवत ज्ञानं प्रकाशयति तत्परम्'** इति । एतद्विस्तरस्त्वन्यत्र ।

गुर्वनुग्रहवत् समचेतसां विदुषां अनुग्रहोऽपि कार्यसिद्धिहेतुरिति शास्त्रमार्गमनुसृत्य लोकयात्रामाद्रियमाणः ज्ञानिनामनुनयं करोति ॥ **तदिति** ॥

श्लोकवार्तिकग्रन्थपरं तस्मादित्यर्थकं वा, गुर्वनुग्रहाधीनकृतिविषयं वार्तिकमिति यावत् । गुरुप्रसादपुरस्सरणात् इति वा । तथा च- न स्वच्छन्दात्प्रवृत्तिर्मम, अपि तु गुरुप्रसादादेव । तथा अप्रमाणिकत्वशङ्कायाः नैवावकाशः । तत्प्रसादिभिः चित्तश्रोत्रैः विद्वांसः अनुगृह्णन्तु इत्यन्वयः ।

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ॥ ४ ॥

कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम् ॥ ॥ ५ ॥

---

चित्ते प्रसादः वेदार्थनिर्णयौपयिकत्वात् ; श्रोत्रे च शब्दसौष्टवादिना ; वैदुष्यं अनुग्रहे कारणम् । न हि सर्वे विद्वांसः प्रसादिचित्तश्रोत्रवन्तः अनुगृह्णन्ति । असूयालुत्वे दोषारोपस्यैव करणात् इति, उत्तरार्धे **अनसूयवः**, असूयाविधुराः, अत एव च **सन्तः** सद्गुणभूयिष्ठाः विद्वांसः **प्रणयिवाक्यानि गृह्णन्ति** इति प्राह वार्तिककारः । गुणेषु दोषाविष्कारः असूया, तद्विदूराः अनसूयवः । अत एव च सन्तःप्रणयिवाक्यानि इत्यनेन विद्वत्सु सत्सु स्वस्य भक्तिप्रकर्षश्च द्योत्यते ।

सम्प्रति मध्यस्थदृष्ट्या परीक्षणं प्रार्थयते— ॥ **नचेति** ॥

सर्वत्रापि दोषाविष्करणमेव कर्तव्यमिति ये सन्ति ते गुणमपि सन्तं परित्यज्य **अतीव** दोषमेवान्विष्यन्ति । तेषां च चित्ते भावनावशात् **अविद्यमानोऽपि दोषः प्रकाशते** भ्रान्त्यादिदोषवशात् । अतस्तादृशी रीतिः परित्याज्या ।

एवं प्रार्थनामात्रेण कर्कशमनसः केचित् प्रार्थयितुः स्वस्याशक्तिं मन्येरन्निति तान दमयति— **कुतोवेतिति** ॥

मम स्वभावस्तावदयं परस्थानपि दोषान् परिजिहीर्षुः तन्निराकरणाय सततं प्रयतितव्यमिति । तादृशे मयि ज्ञानिनः दोषान्

निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचित् मोक्षस्वर्गावपि प्रति ॥ ॥ ६ ॥

आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ॥
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥ ॥ ७ ॥

---

कथं संगृह्णीयुः । अविद्यमानत्वात्, मूर्खाः परं भ्रान्त्या गृह्णीयुरिव । ते तु शोच्या एव ॥ ५ ॥

ननु ज्ञानिभिर्दोषग्रहणाभावेऽपि ये विद्यावलिप्तचेतसः पण्डितं-मन्याः ते दोषं ग्रहीष्यन्ति । तथा च ग्रन्थस्यास्य निर्दुष्टत्वं सविगानमेवेति नात्र सर्वेषां बुद्धिपूर्वकारिणां प्रवृत्तिः सुलभेति चेत्— **निर्दोषत्वेति** ॥

नहि लोके सर्वेषां निर्दुष्टः कश्चन पदार्थः परिदृश्यते, यौ तावत परमपुरुषार्थत्वेन अत्यन्तनिर्दुष्टत्वेनाभिमतौ **मोक्षस्वर्गौ** तत्रापि केचिन्नास्तिकाः दोषमारोपयन्त्येव सद्भावमारभ्यैव । अतः असूयादिमद्भिः दोषारोपणं न मदीयग्रन्थस्योपादेयताभञ्जकम् ।

पूर्वं न मदीयग्रन्थे दोषसम्भावनेत्युक्तम् । सम्प्रति सत्यपि दोषे न त्याज्योऽयं ग्रन्थः अपि तु संग्राह्य एवेत्याह— **आगमप्रवणेति** ॥

**अहं च, स्खलन्नपि आगमप्रवणः नापवाद्यः** न हि निन्द्यः। अत्र आगमप्रवणः इति हेतुगर्भविशेषणम । वेदानुसरणमित्येतत् सन्मार्गः

**यथाकथञ्चिदारब्धा त्रयीमार्गानुसारिणी ।**
**वाग्वृत्तिसाराऽपि श्रद्दधानस्य शोभते ॥** ॥ ८ ॥

**मीमांसाशास्त्रतेजोभिः विशेषेणोज्वलीकृते ॥**
**वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥** इति ॥ ९ ॥

---

किल तन्मार्गेण चाहं विषयान्निरूपयामि । सन्मार्गेण गच्छतां स्खलनेषु च नापवादो युक्तः । तदपवदने च दुन्मार्ग एव हि समाश्रयणीयो भवेत् । तथा च नितरां दोषप्रसङ्गः । तथा च मदीयप्रवृत्तेः वेद-व्याख्यारूपत्वात् ग्रन्थोऽयं भूयिष्ठगुण इति सतोऽप्यल्पस्य दोषस्योपेक्षण-मेव युक्तमिति ॥ ७ ॥

कामं मदीयोऽयं ग्रन्थः बहुफल्गुप्रायः (अल्पसारश्च) स्यात् तथापि विषयसौन्दर्यात् मनसश्च श्रद्धाप्रधानत्वात् मदीया वाक् चेयं श्रोतृजनचित्त-समाधान समर्थैव श्रद्धावत्त्वे इत्याह— **यथाकथञ्चिदिति** ॥

त्रयीमार्गानुसारिणी वाग्वृत्तिः यथाकथञ्चिदारब्धा (दोषयुक्ता) अल्प-साराऽपि सती श्रद्धधानस्य शोभते इत्यन्वयः ॥ ८ ॥

एतावता च वार्तिकमिदं परार्थमभिप्रेत्य परप्रवृत्त्यर्थमेतदुक्तं, साम्प्रतं स्वार्थमेव वार्तिकारम्भे प्रवृत्तिः । तथा च किं परप्रवृत्त्यर्थेन बहुनोक्तेन इत्याह— **मीमांसेति** ॥

मीमांसारूपशास्त्रेण शाणोल्लीढरत्नवत् विशेषप्रकाशयुते वेदार्थज्ञाना-ख्यरत्ने मे तृष्णा अतीव विवृद्धा भवति । वेदवाक्यानि च मीमांसा-

**प्रायेणैव हि मीमांसा लोके लोकायती कृता ॥**
**तामास्तिकपथे नेतुमयं यत्नः कृतो मया ॥१०॥** इति।

---

न्यायैः निरूपितानि हि मनोहराणि भवन्ति । नोपदेशरूपेण स्पष्टीकृतानि । अतः वेदव्याख्यापेक्षया मीमांसाव्याख्यायामेव महती इच्छा भवति । ननु च वेदार्थज्ञाने प्राप्ते, वार्तिके च अशक्यकर्त्रभिप्राये वा न तृष्णायाः प्रसक्तिः । अतः ग्रन्थारम्भः स्वार्थ इति कथं घटतां, इति चेन्न । प्राप्तेऽपि वेदार्थज्ञाने रत्ने लोभातिरेकात् अविस्मरणार्थं च ग्रहणकवाक्यवत् स्वार्थोऽपि यत्नः घटत एव (ग्रन्थारम्भः) इति न किञ्चिदपहीनम् ॥ ९ ॥

मीमांसाशास्त्रे प्राचीनानि भर्तृमित्रादिरचितानि व्याख्यानानि सन्ति खिल ? किमनेन व्याख्यानेनेति चेदाह— **प्रायेणेति** ॥

मीमांसाशास्त्रं हि सर्वास्तिकशास्त्राणां श्रेष्ठतमं, सर्वपुरुषार्थतत्साधनज्ञानस्य एतन्निबन्धनत्वात् । एतादृशं च अलोकायतमेव सत् भर्तृमित्रादिभिः बाहुल्येन **लोकायतीकृतम्** ; तैः स्मृतिसदाचाराणां धर्मप्रामाण्यनिराकरणात्, विधिनिषेधयोः इष्टानिष्टफलानभ्युपगमाच्च । चोदनाप्रमाणको धर्मः इत्येतावन्मात्राभ्युपगमेन नास्तिकशास्त्रादपसारणम् । इतरत् सर्वं सममेवेति मत्वा **प्रायेण**त्याह । एवं च भर्तृमित्रादिकृतासद्व्याख्यानवशात् असन्मार्गनिम्नगामिमां मीमांसां उद्धृत्य आस्तिकमार्गे स्थापयितुं अयं वार्तिकारम्भप्रयत्नः कृतो मया ॥ १० ॥

**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ॥**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥११॥**

**सर्वस्य हि कार्यस्य कर्मणो वापि कस्यचित् ॥**
**यावत् प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥ १२ ॥**

---

एवं दशभिः श्लोकैः वार्तिककारं समर्थ्य वार्तिकाख्ये अस्मिन्नादिमे सूत्रतात्पर्यं दर्शयति— ॥ **अथात इति** ॥

अस्मिन् मीमांसशास्त्रे प्रतिपाद्यो विषयः धर्मः, प्रयोजनमपि धर्मः एव इति सूचयितुं भगवान् सूत्रकारः आदौ सूत्रमिदं चकार। शास्त्रं चेदं धर्मजिज्ञासां कर्तव्यां प्रतिपाद्य हि प्रारभ्यते। अर्थाच्च प्रतिपाद्यते चात्र धर्म एव इति स्वत एव धर्मः प्रयोजनत्वेन ज्ञायते। आद्यसूत्रे प्रयोजनकथनं हि युक्ततमं इति सूचनार्थमेव आद्यमिति श्लोके प्राह ॥११॥

किमर्थं आदौ प्रयोजनकथनमिति चेदाह— **सर्वस्येति** ॥

**सर्वस्यैव** हि शास्त्रस्य कृच्छ्रसाध्यस्य, आयासरहितस्य लौकिकस्य **कर्मणो वा कस्यचित्, प्रयोजनं** पुरुषप्रवृत्तिसिध्यर्थं अवश्यं वक्तव्यम्। अन्यथा प्रवृत्तेरेवानुदयात्। शुश्रूषाया एवासम्भवात इति भावः ॥१२॥

मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता ।
न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥ ॥१३॥

विद्यान्तरेषु नाप्येतत् यद्यभीष्टं प्रयोजनम् ।
अनर्थप्रापणं तावत्तेभ्यो नाशङ्क्यते क्वचित् ॥ ॥१४॥

मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः ।
न्यायमार्गे महान् दोषः इति यत्नोपचर्यता ॥ ॥१५॥

---

विशेषतश्च मीमांसाशास्त्रारम्भे प्रयोजनकथनस्यावश्यकता वर्तते इत्याह मीमांसेति

शास्त्रं चेदं मीमांसाभिधं वाक्यशास्त्रम् । इदं च वाक्यार्थनिर्णयाय प्रवृत्तम् । व्याकरणादिशास्त्रान्तरवशेन व्युत्पन्नपदपदार्थस्य हि अत्राधिकारः न्यायव्याकरणादिभिः आपाततः वेदवाक्येषु उत्पन्नज्ञानस्य अत एव तदर्थनिर्णिनीषोः निर्णयहेतुतया बहूनि विद्यान्तराणि आश्रितासौ मीमांसा प्रवर्तते ; इति बह्वायाससाध्या इति व्यक्तम् । अस्यां च विशेषतया प्रयोजनस्याकथने प्रवृत्तिर्न शक्येति सूत्रकाराणां प्रयोजनकथनं युक्तमेव ॥ १३ ॥

विद्यान्तरेषु प्रयोजनकथनं भवतु वा मा वा । अत्र तु अवश्यमेव प्रयोजनकथनं कर्तव्यमिति शास्त्रस्य वैशिष्ट्यमाह— **विद्यान्तरेति** ॥

सर्वत्र प्रयोजनकथनं प्रवृत्तिसिद्ध्यर्थं किल । **विद्यान्तरेषु अभीष्टं प्रयोजनं** यदि नोक्तं, तर्हि प्रवृत्त्यभावः स्यात् ? तथापि न महान् दोषः, प्रत्यवायस्याल्पत्वात् । तेषु प्रवृत्त्यभावे अनर्थप्रापणस्य क्वचिदप्र-

तस्मात्प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
यत्स्वेनोक्तं वदेयुस्तत् भाष्यकारादयः कथम् ॥ ॥१६॥

सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ ॥१७॥

---

भावात् । **इह मीमांसायां** तु, अज्ञातेऽपि दोषः, कथमिति चेत वेदवाक्यगतन्यायनिरूपणपरत्वात् मीमांसायाः न्यायनिर्णयमनुसृत्य अनुष्ठान-करणाच्च, अननुष्ठाने च कर्मणां प्रायश्चित्ती भवति पुरुषः, दुर्ज्ञानानुसारं विपरीतानुष्ठाने निरयप्राप्तिः सुदुःखाप्राप्तिश्च पुरुषस्य । किं बहुना ? एतन्न्यायानुसारेणैव वेदान्तवाक्यार्थनिर्णयाच्च परमपुरुषार्थमोक्षाभावप्रसङ्ग-श्चेति प्रयोजनाभिधानं युक्तमेवेति अत आह—तस्मादिति॥ १४-१५ ॥

अत्यन्तं मुख्यत्वात् सूत्रकार एव भगवान् **प्रयोजनं** कथयामास **स्वयमेव** । तत्रापि निदानं अन्ये स्वसूत्रव्याख्यातारः भाष्यकारादयः प्रयोजनान्तराणि मा ब्रुवन् ; इदमेव च वदेयुरिति धिया स्वयमेव हि निर्दिदेश ॥ १६ ॥

ननु यथा प्रवृत्तिप्रयोजकत्वं प्रयोजनस्य तथैव सम्बन्धज्ञानस्यापि प्रवृत्तिहेतुत्वात् तदकथनात् न्यूनता सूत्रकारस्येत्याशङ्कते—**सिद्धार्थेति** ॥

तादृशमेव शास्त्रं **श्रोतुं** श्रोतारः प्रवर्तन्ते ; यस्य प्रयोजनं सम्बन्धश्च ज्ञातपूर्वः ; अतः प्रयोजनवदेव सम्बन्धोपि शास्त्रावतारहेतुभूतः आदावेव वक्तव्यः, अन्यथा हि सूत्रकारस्य असङ्गताभिधायित्वमवर्जनीयमेवापतेत्॥ १७॥

शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्मात् भिन्नो नोक्तः प्रयोजनात् ॥ ॥१८॥
सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद्यतः ।
तस्मात्सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥ ॥१९॥
यावत्प्रयोजनेनास्य सम्बन्धो नाभिधीयते ।
असम्बद्धप्रलापित्वात् भवेत्तावदसङ्गतिः ॥ ॥२०॥

---

अत एव शास्त्रान्तरादौ **'अथातो धर्मं व्याख्यास्यामः'** इत्यादिषु शिष्यप्रश्नानन्तर्याभिधः सम्बन्धः दृष्टचरः । अत्र तदकथनात् न्यूनतेति चेत् परिहरति— **शास्त्रेति** ॥

सम्बन्धस्यार्थादेव सिद्धतां मत्वा भगवान् सूत्रकारः न पृथक् सम्बन्ध वर्णयति । कथं सिद्धिरिति चेत् **शास्त्रं प्रयोजनं** चेति एतदुभयमपि सम्बधस्याश्रयभूतम् । अश्रयभूतयोस्तयोः कथनेनैव आश्रितस्य सम्बन्धस्यापि सिद्धिः । स च सम्बन्धः साध्यसाधनभावरूपः शास्त्रं साधनं, धर्मज्ञानं साध्यमिति तयोः सूत्रे कीर्तनादेव सम्बन्ध सिद्धः । यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ न पृथक् सम्बन्धकीर्तनम्, न शिष्यप्रश्नानन्तर्यादिरूपः सम्बन्धः अत्र शास्त्रारम्भे हेतुः विनाऽपि प्रश्नादिना धर्मज्ञानसाधनीभूतं शास्त्रं लोकहितैषी भगवान् सूत्रकारः स्वयमारेभे ॥१८॥

ननु आश्रायकथनादेवाश्रितसम्बन्धः कथितप्राय एवेति पक्षेऽपि व्याख्यातृभिः कथनीय एव, अन्यथा श्रोतारः शास्त्रस्यासङ्गतिमेव मन्वीरन्नित्याह— **सिद्धिरिति** ॥

श्रोतृणां प्रवृत्तिस्तावत् यतः **सम्बन्धकथनादेव** भवति अतः **सर्वेषु शास्त्रेषु पूर्वमेव** हि **सम्बन्धः उच्यते** । यावत् शास्त्रस्य प्रयोजनेन

**इह त्वाक्षिप्य सबन्धं भाष्य एवाभिधास्यते ।**
**धर्मप्रसिद्ध्यप्रसिद्धिभ्यां तस्मान्नान्योऽभिधीयते ॥ २१ ॥**

**नचाप्यत्राथशब्देन शास्त्रसम्बन्ध उच्यते ।**
**सम्बन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥**इति ।

---

सम्बन्धो नोच्यते, तावता कर्तुरसम्बद्धप्रलापित्वेन असङ्गतिरेव शास्त्रस्येति मत्वा श्रोतारः न प्रवर्तेरन् । ॥ १९–२० ॥

एवं प्राप्ते परिहरति— इहत्विति

अयमाशयः— अस्मिन्नेव सूत्रे भाष्यकारैः उत्तरत्र **'धर्मः प्रसिद्धो वा स्यात्, अथाप्रसिद्धः— स चेत् प्रसिद्धः न जिज्ञासितव्यः (ज्ञातत्वात्) अथाप्रसिद्धो नितरां ज्ञानेच्छयोरुभयोरप्यसम्भवात् ।'** इति उभयथाऽपि जिज्ञासामाक्षिप्य परिहरिष्यमाणत्वात नात्र पृथगभिधानावश्यकता ॥ २१ ॥

ननु सूत्रादौ अथशब्देनैव अध्ययनक्रियानन्तर्यरूपः सम्बन्धः शास्त्रस्योक्त एवेति **भिन्नो नोक्तः 'प्रयोजनात्'** इति वार्तिकोक्तिः कथं घटते इति चेदाह— **नचेति** ॥

अध्ययनानन्तर्यं जिज्ञासायां सूत्रकारेणोक्तम् । तथाच, अध्ययनक्रियायाः जिज्ञासायाश्च परं पौर्वापर्यं सिद्ध्येत् न विचाररूपस्यास्य शास्त्रस्य अध्ययनानन्तर्यम् । ननु जिज्ञासाशब्दः विचारार्थ एवेति चेत्-

योऽप्ययं शास्त्रसम्बन्धः वर्ण्यते कैश्चिदादितः ।
क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥ ॥२३॥

सदसद्भावयोस्तस्य विशेषो नोपलभ्यते ।
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ ॥२४॥

---

नैवेदं युक्तम्, श्रोतृक्रिया ज्ञानेच्छा तावत् जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा तयोश्चैक्यं सुतरां नैव घटते । सन्नन्तत्वसाम्येन जिज्ञासाशब्द मीमांसाशब्दयोः एकार्थकत्वकथनं तु भ्रममूलकमेव । मीमांसाशब्दे सनः इच्छार्थकत्वाभावात् । किंच जैमिनिना अध्ययनानन्तरं शास्त्रं प्रणीतमित्यत्र न किञ्चिन्नियामकं वर्तते । अतो नाथशब्देन शास्त्रसम्बन्ध उच्यते । एतेन शिष्यप्रश्न-देवताराधन-रसायनसेवनादि-क्रियानन्तर्यरूपः सम्बन्धः शास्त्रस्य वक्तव्य इत्यपि पराहतम्; जिज्ञासा-शब्दस्य शास्त्रवचनत्वासम्भवात् ॥ २२ ॥

शास्त्रेषु सम्बन्धकथनं तावत् प्रवृत्त्यङ्गत्वसिद्धयै, नत्वदृष्टार्थं, पूर्वोक्तसम्बन्धानां च अप्रवृत्यङ्गत्वेन तेषामवाच्यत्वादित्याह— योऽपी ॥ ति ॥

अत्रादिमश्लोकेन निराकार्यसम्बन्धस्वरूपोपन्यासः, द्वितीयेन तु निराकरणहेतुरुच्यते; निष्प्रयोजनत्वात् इति, तत्सम्बन्धानां सद्भावे असद्भावे वा न प्रवृत्तिः, न वा निवृत्ति, न वा एतादृशसम्बन्धसद्भावे किञ्चित्प्रमाणमिति ॥२३–२४॥

तस्मात् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥ ॥२५॥

लोक इत्यादिभाष्यस्य षडर्थान् सम्प्रचक्षते ।
भाष्यकारानुसारेण प्रयुक्तस्यादितः पृथक् ॥२६॥

सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथापरे ।

---

अतः आह—तस्मादिति

शास्त्रं अवतारयति प्रवर्तयति इति शास्त्रप्रवृत्ति हेतुभूतः सम्बन्धः स एव भवितुमर्हति; यस्य सद्भावे किञ्चित्प्रमाणं वर्तते, यश्च सप्रयोजनश्च स्यात् । व्याख्यारूपस्य (विचारात्मकस्य) अस्य शास्त्रस्य स एव हि अङ्गं भवेत् । अन्यस्तु गुरुपर्वक्रमादिः निष्फल एव ॥ २५ ॥

एतावता सूत्रतात्पर्यं व्याख्याय सम्प्रति भाष्यं "येष्वर्थेषु प्रसिद्धानि पदानि," इत्यादिकं व्याचष्टे ॥ **लोक इति** ॥

शास्त्रादौ प्रयुक्तत्वात् सर्वेप्यर्थाः अत्र सङ्गच्छन्ते । **भाष्यकारानुसारेण,** न च तथापि सकृदुच्चारितस्य कथमनेकार्थत्वमिति वाच्यम् । पृथक् पृथक् स्वीकारात् , अथवा प्रयुक्तपदेनेदं सूच्यते पौरुषेयत्वात भाष्यस्य पौरुषेयेषु च वाक्येषु अनेकार्थत्वस्वीकरणं न दोषाय— यथा श्वेताश्वो धावतीत्यादौ । शास्त्रादौ प्रयुक्तत्वात् सकलशास्त्रशेषत्वेन पञ्चार्थाः सर्वव्याख्यानादयः, आनन्तर्यात् प्रथमसूत्रशेषत्वेन वा अथशब्द-दूषणपक्षप्रतिपादनम् ॥ २६ ॥

के ते षडर्थाः इति चेदाह—सर्वव्याख्येत्यादि ।

**परिसंख्यास्तुती केचिदथशब्दस्य दूषणम् ॥ ॥२७॥**
**साधारणी विशिष्टा च सूत्रव्याख्या द्विधा मता।**
**विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ ॥२८॥**
**प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया।**

---

अत्र केचिदित्युक्तिः उत्तरत्र '**यद्वाक्षेपो यथोक्तस्य**' (श्लो६५) इत्यादिना '**लोक**' इत्यादिभाष्यस्य सिद्धान्तग्रन्थताया आहतत्वात तदभिप्रायेणेति ज्ञेयम् ॥ २७ ॥

कथं चेदं 'लोक' इत्यादिभाष्यं सर्वव्याख्या भवेत् प्रतिसूत्रं भाष्यस्य अन्यथैवोपलम्भात् पौनरुक्त्यापतेश्चेत्याशङ्कायामाह—**साधारणीति** ॥

तत्तद्वेद वाक्यानि पुरस्कृत्य तैस्तैस्सूत्रैः या व्याख्या भाष्यकृता क्रियते, सा विशेषरूपत्वात् विशिष्टा। सा तत्र तत्र सूत्रेषु स्पष्टा सर्वाणि सूत्राणि प्रसिद्धार्थकपदघटितानि, नात्राध्याहारादिकमपेक्ष्यते; इति सूत्रेऽस्मिन् कथनं सार्वत्रिकमिति भावः। अत्र भाष्ये सूत्रेषु पदानि प्रसिद्धार्थकान्येव इति प्रवृत्तिरभिहिता। '**नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः**' इत्यादिना भाष्येण तु अध्याहारादिनिवृत्तिः। तत्र प्रवृत्तिः पदेषु इति तावत् स्पष्टम् ॥ २८ ॥

एवं निवृत्तिरपि पदेष्वेव; कुतः? '**सूत्रेषु पदानां**' इति पूर्वभाष्ये सूत्राणां गुणभूतत्वात् पदानां च प्रधानत्वेन निवृत्तिभाष्ये '**एषा**' मिति सर्वनाम्ना पूर्ववाक्यीयप्रधानग्रहणस्यैव युक्तत्वात्; इति शङ्का या भवति तत्परिहारः कथमिति चेदाह— **प्रवृत्तिरिति** ॥

अध्याहारादिकल्पनानां वाक्येष्वेव सम्भवात् सूत्राणामेव वाक्यरूपत्वेन तत्रैवाध्याहारादिप्रसक्तेः तन्निवृत्तिकथनमपि तत्रैव युक्तमिति

**वेदवाक्याविरुद्धेषु न तु सर्वेषु केषुचत् ॥ ॥२९॥**

**अध्याहारस्य वाक्येषु व्यत्यासस्य च सम्भवात् ।**
**तेनैषामिति सूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥ ॥३०॥**

---

गुणत्वेऽपि सूत्राणां पूर्ववाक्ये तेषामेव **'एषा'**मिति ग्रहणं इति भावः प्रसिद्धार्थग्रहणं तु पदेष्वेवेति न काचित् क्षतिः ।

एवं च प्रसिद्धार्थग्रहणं अध्याहारादिवर्जनं च सूत्रेषु सर्वाङ्गीणमिति सामान्यतः सिध्दे, तदपवादमपि भाष्यकारः सूचयामास **'सति सम्भवे'** इति तं विवृणोति— **वेदेति ॥**

पूर्वोक्तं प्रसिद्धार्थग्रहणं, अध्याहारादि वर्जनं न सर्वेषु सूत्रेषु-किन्तर्हि वेदवाक्याविरुध्देषु सूत्रेषु, वेदविरुद्धत्वेहि- सूत्रेषु पौरुषयेषु अध्याहारादिस्वीकरणमिष्टमेव; गुणत्वात् सूत्राणामिति भावः ॥ २९ ॥

**'प्रवृत्तिस्तु'** इति पूर्वं अध्याहारादिवर्जनं वाक्येष्वेवे(सूत्रेष्वेव)ति यदुक्तां तत् सहेतुकं स्पष्टयति— **अध्याहरस्येति ॥**

**'नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा'** इति भाष्ये **'एषा'**मिति पदेन वाक्यरूपाणां सूत्राणामेव ग्रहणम् कुत इति चेत् - अध्याहारस्य व्यत्यासस्य च वाक्येष्वेव सम्भवात् । यद्यपि **'प्रसिद्धानि पदानि + + + तानि तदर्थान्येव सूत्रेषु'** इति पूर्वभाष्ये पदविशेषणत्वेनैव सूत्राणां प्रतीतिर्वर्तते ; तथाऽपि अप्रसक्तनिषेधपरिहारार्थं पारार्थ्ये सत्यपि (विशेषणत्वेसत्यपि) तेषां सूत्राणामेव ग्रहणं युक्तमिति भावः ।

**'एव शब्दोऽल्पवाच्यत्वात् अस्यावृत्तौ तु गौरवम् ।**
**प्रसिद्धत्वादवाच्यं चेत् न दोषः पुनरीदृशम् ॥ ॥३१॥**

---

न चाध्याहारव्यवहित कल्पनयोः न्यूनपदाप्रयोगात् प्रकृतिप्रत्यययोः नियतक्रमकत्वाच्च पदधर्मत्वासम्भवेन वाक्येष्वेव प्रसक्तावपि विपरिणामगुण-कल्पनयोः पदधर्मत्वसम्भवेन प्रतियोगिप्रसक्तिः सम्भवत्येवेति वाच्यम् । वाक्यानां पदसमुदायरूपत्वेन विपरिणामगुणकल्पनयोरपि पदाधारत्वं अक्षतमेवेति न दोषः ।

भाष्यकारैः, सर्वसूत्रसाधारण्येन सूत्राणां प्रसिद्धार्थकपदविशिष्टत्व-मिति साधरणीं व्याख्यां कृत्वा, तस्याः किं प्रयोजनमित्याकांक्षायां **'एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते'** इति सूत्रव्याख्यानाकरणं ज्ञाता-र्थकपदघटितत्वात् सूत्राणां, केवलं वेदवाक्यानामेव व्याख्यानाल्लाघवमिति प्रदर्शितम् । इदं च न घटते विशेषरूपेण सूत्राणामपि व्याख्यानकरणात एवशब्दः कथं घटतामिति चेत्—**एवेति** ॥

विशेषव्याख्यानस्याल्पत्वादसत्प्रायत्वमेवेति वेदवाक्यान्येवेत्येवकारस्य न क्षतिः । **'अनुदरा कन्या'** इतिवत् । अस्य व्याख्यानस्य वेदे सूत्रे चावृत्तौ गौरवं स्यात् इति **'प्रयत्नगौरवं प्रसज्येत'** इति स्पष्टमभिहितम् ।

सति सम्भवे प्रसिद्धार्थग्रहणं अध्याहारादिवर्जनं च लोके प्रसिद्ध-मेवेति मन्दफलं साधारणं व्याख्यानमेवेति चेत्—॥ **प्रसिद्धेति** ॥

लोके पुरुषवचनानां प्रसिद्धार्थकथनं गुणायैव न न्यूनतायै संवादसा-पेक्षत्वात् प्रमाणदार्ढ्यस्य । सूत्राणां च पौरुषेयत्वात् न दोषः प्रसिद्धार्थ-कत्वात् ॥ ३१ ॥

व्याख्याङ्गत्वाभिमानेन योऽध्याहाराद्यपेक्षते ।
स्वसंज्ञां वापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥

वृत्त्यन्तरेषु केषाञ्चिल्लौकिकार्थव्यतिक्रमः ॥
शब्जानां दृश्यते तेषामुपालम्भोऽयमुच्यते ॥३३॥

अथात इत्ययं लोके नानन्तर्ये प्रयुज्यते ॥
तस्मात्तादर्थ्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥

---

पाणिन्यादिसूत्रेषु अध्याहार परिभाषादिभिर्व्याख्यानदर्शनात् अध्याहारादीनां व्याख्यानाङ्गत्वमिति धिया **यो** नाम अत्रापि **अध्याहाराद्यपेक्षते** ; तं प्रतीदमुच्यते— नास्य अध्याहाराद्यपेक्षेति अस्य शास्त्रस्य स्वरूपं तावत् भाष्यकारैः शिक्षितं भवति ॥ ३२ ॥

लोके इत्यादिभाष्यस्य उपक्षिप्तेषु षट्सु अर्थेषु द्वितीयं उपालम्भपक्षं निरूपयितुमुपक्रमते—॥ **वृत्यन्तरेष्विति** ॥

**भवदासादीनां वृत्त्यन्तरेषु,** जैमिनिसूत्रस्थपदानां अप्रसिद्धार्थपरिकल्पनं **दृश्यते** ; तदुपालम्भनं तावदुच्यते—**लोके येष्वर्थेषु प्रसिद्धानि पदानि तदर्थान्येव सूत्रेष्वपि** इत्यादि भाष्येण ॥ ३३ ॥

तदेव स्पष्टयति—॥ **अथात इति** ॥

भवदासेन आनन्तर्यवाचकत्वेन हेतुवाचकत्वेन च प्रसिद्धयोः अथातश्शब्दयोः एकीकृत्य (उभयोः) आनयन्तर्यमात्रवाचकत्वं—परिभाषयैव हि भवेत् लोके कैरप्यप्रयोगात् । तदिदमुच्यते "नाध्याहारादिभिरेषां परि कल्पनीयोऽर्थः परिभाषितव्यो वेति" ॥ ३४ ॥

**प्रसिद्धहानिः शब्दानां अप्रसिद्धे च कल्पना।**
**न कार्या सूत्रकारेण सति सिद्धार्थसम्भवे॥ ॥३५॥**

**सूत्रार्थे क्लिश्यतश्चैवं दूरे वेदार्थनिर्णयः।**
**तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते॥ ॥ ३६ ॥**

**न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः।**
**यत्-तस्य परिहारोऽयं प्रत्याख्यानेन चोच्यते ॥ ॥३७॥**

---

तदनुसारेण भाष्यग्रन्थयोजनां प्रदर्शयति श्लोकद्वयेन—॥ **प्रसिद्धहानिरिति** ;।

प्रसिद्धार्थग्रहणे सूत्रे पदानां सम्भवति अप्रसिद्धार्थग्रहणे, प्रसिद्धार्थहानिः अप्रसिद्धार्थकल्पनं च स्यात् ; इदं च न युक्तम् ; कुत इति चेत् वेदार्थव्यक्तीकरणाय सूत्राणां प्रवृत्तेः। तत्र यदि सूत्रार्थनिर्णयवेलायामेवाप्रसिद्धार्थकल्पनादिगौरवं भवेत् ; तर्हि वेदार्थनिर्णयःएव दुष्करः स्यात् ; उपायाभावात्। यदि उभयगौरवं तदा वक्तुः श्रोतुश्च यत्नभारः इति सूत्रस्थानां पदानां प्रसिद्धार्थग्रहणमेव युक्तम् ॥ ३५-३६ ॥

अथेदानीं 'लोक' इत्यादि भाष्यस्य तृतीयमर्थं निरूपयितुमुपक्रमते—॥ **न व्याख्यास्यति इति** ॥

व्याख्यानप्रत्याख्याने कारणं, प्रसिद्धार्थकत्वमिति। भाष्यकारो हि सूत्राणि पठित्वा, किञ्चित् वेदवाक्यं उदाहृत्य तदर्थनिर्णये प्रवर्तते। किं कारणं तत्रेति। कुतो वा सूत्राणि न व्याख्याति ?—इति विचारे तत्रानेकानि कारणानि भासेरन् ; सूत्राणामर्थभावात् ; अथवा भाष्यकारस्यार्थापरिज्ञानात् ; आहोस्वित् व्याख्येयत्वाभावात् सूत्राणामिति। तत्र भाष्यकारैरभिधीयते न व्याख्यातव्यानि इति ॥ ३७ ॥

**प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ॥**
**फलवत्वाफलवत्वाभ्यां एभिः करणसम्मतैः ॥ ३८ ॥**

**चोदनार्थः उपेतव्यः नोभयं यत्नगौरवात् ॥**
**पदार्थानां प्रसिद्धत्वात् व्याख्येयं नावशिष्यते ॥ ३९ ॥**

---

तत्रापि कारणं प्रदर्श्यते—॥ **प्रयास इति** ॥

शास्त्रं चेदं धर्मज्ञानजनकत्वेन फलवत्; तच्च वेदवाक्यैरेव भवति—तेषामेव धर्मप्रमापकत्वात्; अतस्तेषु व्याख्यानप्रयत्नः सफलो भवेत्—सूत्राणां च तद्विषयप्रमाजनकत्वाभावात्; तत्र **प्रयासो** विफल इति न सूत्राव्याख्या करणात्माकविफलप्रयत्नः युक्तः। सूत्राणि च करणानि उपायभूतानि, तैस्साध्यं फलं चान्यदेव। अतः सूत्रैः उपायभूतैः **यश्चोदनार्थः** ज्ञातव्यः तव्द्याख्यानं सफलमिति। एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते; इति भाष्येणोक्तम्—ननु सूत्राणि वेदवाक्यानि चेत्युभयं व्याख्यायतां इति चेत् **नोभयं यत्नगौरवात्** इदं च **'इतरथा वेदवाक्यानि व्याख्यातव्यानि स्वपदार्थश्च व्याख्यातव्यः इति प्रयत्नगौरवं प्रसज्यते'** ति भाष्येण स्पष्टीकृतम् ॥

ननु सूत्राणां उपायभूतत्वस्य त्वयैवाङ्गीकारात् उपायभूतसूत्रार्थज्ञानं विना फलभूतवेदार्थज्ञानस्यालाभात् स्वर्गकामैः यागानुष्ठानमिव वेदवाक्यार्थ-ज्ञानकामैः सूत्रार्थज्ञानमवश्यं सम्पादनीयमेवेति तान्यपि व्याख्येयान्येवेति चेदाह—॥ **पदार्थानामिति** ॥

सत्यं सूत्रार्थज्ञानमावश्यकमेव; परं तु न सूत्राणि व्याख्याधीन-ज्ञानजनकानि, प्रसिद्धार्थपदघटितत्वात्तेषां, यदा च पदार्थाः प्रसिद्धा तत एव

एवं शब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ॥
पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्त्वियम् ॥ ४० ॥

अत्रीत्येत्र हि सूत्रार्थं अतिरिक्तादि चेष्यते
नन्वशक्तमिदं सूत्रं सम्यक् सूत्रितमित्यपि ॥ ४१ ॥

---

च वाक्यार्थोऽपि प्रसिद्ध एव पदार्थज्ञाननिमित्तकत्वात् वाक्यार्थज्ञानस्य। एतद्विस्तरस्तु तद्भूताधिकरणे भविष्यति। अतश्च न किञ्चिदपि व्याख्येयमवशिष्यते इति। **"लोके येष्वर्थेषु"** इत्यादि भाष्येणेदं स्पष्टीकृतम् ॥ ३८–३९ ॥

एतत्पक्षे सूत्राणामव्याख्यानादेव प्रयत्नगौरवाप्रसक्तेः **'एवं वेदवाक्यान्येव'** इत्यारभ्य......**'प्रयत्नगौरवं प्रसज्येत'** इत्यन्तभाष्यग्रन्थः सुसमञ्जसः। इमं पक्षं तावद्दूषयति—॥ **पदच्छेदाद्यभावेनेति** ॥

सूत्राणां व्याख्यानप्रत्याख्यानपरत्वेन भाष्यार्थवर्णनं चेदं स्थूलदृशा, तत्र च कारणं पदच्छेदाद्यभावः। वस्तुतस्तु तत्त्वदृष्टिमाश्रित्य विचारणे तु सूत्राणामपि व्याख्या भाष्यकारैः समाश्रितैव परिदृश्यते। यथा चोदनासूत्रे **'नन्वशक्तमिदं सूत्रं'** इति चोदयित्वा परिहरिष्यति। एवं द्वितीयाध्याय प्रथमपादे **'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्** (२-१-१४) इति सूत्रव्याख्याने किमिति उभयं सूत्रितं इति अतिरेकं आक्षिप्य परिहरति। **सम्यक् सूत्रितमिति** च ॥ ४०–४१ ॥

नन्वशक्तमिदं सूत्रं– सम्यक् सूत्रितमित्यपि ॥
सूत्रे चगमकत्वादि प्रत्याख्याने विरुद्ध्यते ॥ ४२ ॥

" नचोपायानभिज्ञाने शक्योपेयावधारणा" ॥
नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ॥ ४३ ॥
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ।
यः सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ॥ ४४ ॥

---

न केवलमेतावदेव अपि तु–

'विशये प्रायदर्शनात्' (जै. सू. २-३-१६) इत्यत्र सूत्रस्य अगमकत्वात् न्यूनतामाक्षिप्य तन्निवारकपरिहारं च वक्ष्यति । तदिदं सर्वं प्रत्याख्यानपक्षे कथं घटेत ? ॥ ४२ ॥

अन्यस्मादपि हेतोः प्रत्यख्यानपक्षस्यायुक्ततां स्पष्टयति– ॥ **न चोपायेति** ॥

वेदार्थज्ञानोपायभूतानि सूत्राणि यदि न ज्ञातार्थकानि, तैः कथं तर्हि वेदवाक्यार्थो ज्ञायेत; न चोपायभूतकर्मानुष्ठानरहितः पुरुषः कथमपि स्वर्गादि फलमवाप्नुयात् ; । अत्र श्लोके **'उपेयावधारणा'** इति अवधारणशब्द-प्रयोगात् इतरशास्त्रार्थज्ञाने सत्यपि न निश्चयात्मकवेदार्थज्ञानप्राप्तिः मीमांसा-सूत्रज्ञानमन्तरा इति द्योत्यते ।

ननूक्तं किलास्माभिः प्रसिद्धार्थकत्वान्न व्याख्येयानि सूत्राणि इति, अतश्च नोपेयाज्ञानदोषप्रसक्तिरिति चेदाह– ॥ **नान्यत इति** ॥

**वेदविद्भ्यश्चान्यतः** न सूत्रव्याख्या भवितुमर्हति । प्रसिद्धार्थकत्वात

वाक्यार्थे तत्र सन्देहात् व्याख्यानं चेत्प्रवर्तते ।
सूत्रेष्वपि समानत्वात् प्रत्याख्यानं न युज्यते ॥ ४५ ॥

न व्याख्यातव्यमित्येवं प्रत्याख्याने न सिद्ध्यति ॥
दुष्टव्याख्यानिषेधेन तदपेता न वार्यते ॥४६॥

अस्य दृष्टविरुद्धत्वात् फल्गुत्वाच्चापि पूर्वयोः ।
मध्यमे चातिदौर्जन्यात् परिसंख्यैव युज्यते ॥४७॥

---

सूत्राणां अव्याख्यानं चेत्, **लोकवेदाधिकरणन्यायेन** वेदवाक्यघटकपदानामपि प्रसिद्धार्थकत्वात् माभूत्तेषामपि वेदवाक्यानां व्याख्यानम् ॥४३-४४॥

**ननु** सत्यं वेदवाक्यस्थानि पदानि प्रसिद्धार्थकानि; परन्तु वाक्यार्थ सन्देहात्तत्परिहरणाय व्याख्यानमावश्यकमिति चेत्—सूत्रेष्वपि इति ॥

सूत्राणामपि वाक्यरूपत्वेन, सत्यामपि पदार्थप्रसिद्धौ वाक्यार्थसंशयपरिहाराय सूत्रव्याख्याप्यावश्यक्येवेति न प्रत्याख्यानं युज्यते ॥४५॥

प्रत्याख्यानपक्षानुकूल्यमपि भाष्यस्य न दृश्यत इत्याह— ॥ **न व्यख्यातव्यमित्यादि** ॥

भाष्यकारस्य व्याख्यासामान्यं प्रत्याख्येयमिति यदि समभिप्रेतं स्यात् तर्हि सामान्यतः न व्याख्येयानि इत्येवाख्यानं स्यात्। किं तु, **नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा**" इति अध्याहारपरिभाषादियुक्तदुष्टां व्याख्यां निषेधयन् एवं सूचयति। दोषापेताव्याख्या **न वार्यते** इति ॥४६॥

एवं निरूपितेषु त्रिषु पक्षेषु न पक्षस्य एकस्यापि स्वीकार्यता, दोषवत्त्वात्, चतुर्थस्य परिसंख्यापक्षस्यैव युक्ततां दर्शयति- ॥**अस्येति**॥

**अस्य दृष्टविरुद्धत्वात् फल्गुनत्वाच्चापि पूर्वयोः ।**
**मध्यमे चातिदौर्जन्यात् परिसंख्यैव युज्यते ॥४८॥**

**वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ।**
**यथाश्रुतगृहीतेऽर्थे तत्रेदं उपदिश्यते ॥४९॥**

---

प्रत्याख्यानपक्षस्य प्रत्यक्षदृष्टव्याख्यानविरुद्धत्वात् हेयत्वम् । सर्वव्याख्योपालम्भपक्षयोश्च निस्सारत्वम् ; तत्रापि उपालम्भपक्षस्य च दौर्जन्यसूचकत्वं इतरनिंदाकरणात् ; अतः नाध्याहारादिपरिग्रहः वेदवाक्येषु इत्यर्थप्रापकः परिसंख्यापक्ष एव ग्राह्यः ॥४७॥

तस्यैव च **परिसंख्या**पक्षस्य अनुक्तदुर्ज्ञातार्थकत्वमिति चाभिप्रयन् तमेव पक्षं परिगृह्णन्नाह— ॥ **अस्येति** ॥

दृष्टस्य सूत्रव्याख्यानस्य विरुद्धत्वं प्रत्याख्यानपक्षस्य अनेकेषां सूत्राणां भाष्यकारैरेव व्याख्यानकरणात् पूर्वयोः आदिमयोः, सर्वव्याख्यापक्षोपालम्भपक्षयोः फल्गुत्वात्— निस्सारत्वात् । मध्यमे निरूपितेषु त्रिषु पक्षेषु **मध्यमे**, उपालम्भपक्षे इति यावत् । **अतिदौर्जन्यात्**, इतरनिन्दाकरणं हि दुर्जनानां स्वभावः ; तदापादनात् इति यावत् । **परिसंख्यैव युज्यते** ॥४८॥

कीदृशी च परिसंख्या इत्यत्राह— ॥ **वैदिकमिति** ॥

यथाश्रुतार्थग्रहणे यत्र वेदवाक्यजैमिनिवाक्ययोः (सूत्रयोः) विरोधो भवति तत्र वेदं यथावत् अध्याहारादिकं वर्जयित्वा व्याख्याय, अध्याहारादियोगेन सूत्राणि व्याख्यायन्तामिति 'लोके इत्यादि भाष्यस्यार्थः ।

अध्याहारादिभिः सूत्रं वैदिकं तु यथाश्रुतम् ।
नेयं विरोधेऽन्योन्यस्य वैदिकानां भवन्तु ते ॥५०॥

यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ।
तदर्थनिर्णये हेतुः जैमिनीयं तथैव नः ॥ ५१ ॥

वाक्यसामर्थ्यतुल्यत्वात् तथापदतदर्थयोः ।
अध्याहारादिनिर्मुक्ता व्याख्या सर्वत्र युज्यते ॥५२॥

---

न च सूत्रवशेन वेदान्यथाकरणमपि 'वेदो वा प्रायदर्शनात्' (३-३-२) इत्यत्र ऋगादिशब्दानां मन्त्रवाचकानां लक्षणया वेदपरत्व-व्याख्यानात् दृश्यते इति वाच्यम् । तत्र वेदवक्येष्वेव उपक्रमविरोधात् उपसंहारवाक्यस्यान्यथानयनात्मकं (लक्षणाङ्गीकरणं) इति, न सूत्रानुरोधेन वेदान्यथानयनं, अपि तु वैदिकानामेव परस्परं विरोधे दुर्बलस्य लक्षणा-दयः । वेदसूत्रविरोधे तु सूत्रेष्वेवान्यथाभावः ॥ ४०-५० ॥

ननु सूत्राणां वेदवाक्यार्थनिर्णयोपयोगित्वेन गुणत्वाभ्युपगमात् प्रधान भूतवेदवाक्यविरोधे 'ग्यगुणत्वन्यायकल्पना' (१२-२-२३) इति न्यायेन सूत्रेष्वन्यथाभावस्य स्वत एव सिद्धतया सूत्रेषु व्याख्यापरिसंख्या-रूपचतुर्थपक्षोऽपि मन्दफल एव । किं च— परिसंख्या तत्र चान्यत्र च प्राप्तौ किल भवति वैदिकवाक्यैः सह सूत्राणां विरोधेनैव सूत्रेषु लौकिकार्थ ग्रहणस्य प्राप्तिर्भवति— पौरुषेयत्वेन दुर्बलत्वात् ; न वेदे । अतः कथं परिसंख्यापक्षः घटतां इत्याशङ्कायामाह— ॥ यथेति ॥

सत्यम् न्यायतः यद्यपि सूत्रेष्वन्यथाकरणं प्राप्नोति । परन्तु श्रोतृणां तावदेवं भ्रमो भविता— यथा धर्मावबोधे वेदवाक्यानां प्रमाणता, तथा वेदार्थ-

असम्भवादवश्यं या विरोधेऽन्यतरस्य तु।
अन्याय्यकल्पना सापि विकल्पेन प्रसज्यते ॥५३॥

प्राथम्येनावरुद्धत्वात् उपायवशतोऽथवा।
यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम्॥ ॥५४॥

---

निर्णये सूत्रमेवास्माकं प्रमाणमिति, न च कश्चित् मनागपि विशेषः वेदसूत्रयोः वर्णयितुं शक्यते; वाक्यत्वस्य उभयत्र समानत्वात् वाक्यघटकीभूतानां पदानां वाक्यार्थानुभूतपदार्थानां च उभयत्र समानत्वात्। अतः **अध्याहारादिनिर्मुक्ता व्याख्या** उभयत्र च युक्तेति परिसंख्याप्रयोजको-भयत्रप्राप्तिः अविकलैवेति ॥ ५१-५२ ॥

ननु सूत्रवेदवाक्ययोर्यथाश्रुतार्थग्रहणे यत्र परस्पर विरोधापरिहारः, तत्र सूत्राणां वेदार्थनिर्णयंप्रत्यङ्गत्वेन **गुणत्वेन्यायकल्पनेति** न्यायात सूत्राणा-मेवान्यथाकरणं युक्तमिति, '**व्याख्या सर्वत्र युज्यते**' इति वचः कथं घटतेति चेदाह– **विरोधेति**। **विरोधे** सूत्रवाक्ययोः यथाश्रुतार्थग्रहणासम्भवात् अन्यतरस्य– सूत्रस्य वा वेदवाक्यस्य वा या **अन्याय्यकल्पना**– अध्या-हारादिकल्पना **सापि** अगृह्यमाणविशेषत्वात् उभयोर्मध्ये यत्र कुत्रापि भवेत्। न सूत्रेष्वेति नियमः ॥ ५३ ॥

विपरीतं वा स्यादित्याह– ॥ **प्राथम्येनेति** ॥

वेदवाक्यार्थज्ञानं प्रत्युपायत्वेन प्रथमं प्रतीतेः सूत्राणां **असञ्जात विरोधन्यायेन** सूत्राणि यथाश्रुतार्थकानि स्वीकृत्य तदनुरोधेन वेदवाक्यमुप-लभ्यमानं उपसंहारस्थं पूर्वगृहीतसूत्रार्थविरुद्धत्वात् लक्षणाध्याहारादिना

**तेन वेदाविरुद्धस्य सति सम्भव इत्ययम् ।**
**विधीयतेऽर्थः शेषं तु यथा प्राप्तमनूद्यते ॥ ॥५५॥**

**शेषभाजां भवेल्लोपः इत्यध्याहारकल्पना ।**

---

अयथार्थतां प्रतिपद्यते ; इत्यपि स्यात् । **न्याय्यां** लक्षणाध्याहारादिरहितां यथाश्रुतार्थ बोधिकां **चोदनां यथाश्रुतेन सूत्रेण बाध्येत ;** इत्यन्वयः । तत्र हेतुः सूत्राणां उपायत्वात् ( वेदार्थनिर्णये ) प्राथम्येनावरुद्धत्वमिति ॥ ५४ ॥

अतश्च भवति परिसंख्या ; तत्र चान्यत्र च प्राप्तेरुपपादितत्वात् इति भाष्ययोजनापूर्वकमुपपादयति ॥ तेनेति॥

लोके इत्यादिभाष्ये, प्रयत्नगौरवभयात् प्रसिद्धार्थग्रहणं लक्षणापरि भाषादिवर्जनं चेत्येतत्— यत् (अनुवादः) तदिदं वेदविरोधासम्भवे सत्येव । न तत्सत्वे इति (विधानम् ) वेदाविरोधे इत्येतदुपलक्षणम् । न्यायविरोधेऽपि सूत्राणि अध्याहारादिना व्याक्रियन्त एव । अत्र भाष्ये **'सति सम्भवे' अध्याहारादिवर्जितव्याख्याकरणं इति कथनं असति नेति तात्पर्येणैव प्रवृत्तं,** यथाश्रुतार्थग्रहणस्य लोकत एव प्राप्तत्वात् । अत एव च निषेधपरत्वातत्त्र परिसंख्यात्वमपि ॥ ५५ ॥

यदुक्तं वेदविरोधे सूत्रेष्वन्यथाकरणं तदुदाहरणेन चतुर्भिः श्लोकैः स्पष्टयति । तत्राध्याहारं तावत् सदृष्टान्तमाह— ॥ **शेषभाजामिति** ॥

षष्ठे चतुर्थपादे इदं तावत् सूत्रितं **"अपि वा शेषभाजां स्यात्"** (६-४-३) इति । इदमत्र विचार्यते । अस्ति तावद्दर्शपूर्णमासात्मकं कर्म । तत्र प्रधानसम्बन्ध्यवदवदानस्य नाशे दोषे अपहारे वा जाते, शेषा-दवदानं स्यादिति पूर्वपक्षीकृत्य अन्यदेव हविरुत्पादनीयमिति सिद्धान्तितं

**विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते ॥ ॥५६॥**

---

पूर्वम्। शेषकार्यार्थं (प्रतिपत्तिकर्मार्थं) गृहीतं यदवदानं, तस्य यदि नाशो भवेत् तर्हि, कथमनुष्ठानम्? किं हविरन्तरोत्पादनम्; किं वा शिष्टादवदानम उत लोपः; इति सन्देहे— न प्रथमः प्रतिपत्तेः द्रव्यप्रयोजकत्वाभावात्। नापि द्वितीयः— शिष्टस्य प्रतिपत्त्यन्तरगृहीतत्वात् नष्टावयवपूर्वप्रतिपत्ति-सम्बन्धासम्भवात्। अतस्तृतीय एव कल्पः युक्तः; इति अनेन सूत्रेण उच्यते। **'अपि वा शेषभाजां स्यात्'** इति। अत्र **शेषभाजां किं** स्यादित्यनुक्तत्वात् **'लोपः'** इति पदमेवाध्याह्रियते। अत्र सूत्रे अध्याहारेण व्याख्यायाः इदमुदाहरणम्।

विपरिणामं केनचिदुदाहरणेन स्पष्टयति—॥ **विप्रकर्षादिति** ॥

ज्योतिष्टोमे प्रधानदिने (सौत्येऽहनि) सवनीयः पशुः सवनीयाश्च पुरोडाशाः समाम्नाताः। तत्र पशुतन्त्रमध्ये पुरोडाशाः विधीयन्ते; प्रसङ्गादेव पश्वङ्गजन्योपकारस्य पुरोडाशेषु सिध्यर्थं— **"पशोश्च विप्रकर्षः तन्त्रमध्ये विधानात्"** (१२-२-३२) इति भगवता **जैमिनिना** द्वादशाध्याये द्वितीयपादे सूत्रितम्। अत्र पशुतन्त्रमध्ये विधानं साध्यम्। तत्र हेतुः पशोश्च विप्रकर्षः, ततश्च पशोश्च विप्रकर्षात् **"वपया प्रातः सवने प्रचरन्ति पुरोडाशेन माध्यंदिने अङ्गैस्तृतीयसवने"** इति वचनेन विततेः सिद्धत्वात् पशुतन्त्रमध्ये पुरोडाशविधानं, तेन च पश्वङ्गानां पुरोडाशे प्रसङ्गसिद्धिः; सूत्रे चास्मिन् हेतुप्रकाशकविप्रकर्षपदं प्रथमान्तं पञ्चम्यन्ततया विपरिणम्यते, पञ्चम्यन्ततया श्रूयमाणं विधानपदं पञ्चम्यन्तं सत् प्रथमान्ततया विपरिणम्यते; ततश्च पशोश्च विप्रकर्षात् तन्त्रमध्ये पुरोडाशविधानमिति ॥ ५६ ॥

**पदेन व्यवधानं तु लोके सन्नियमादिति ।**
**"सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् ॥ ॥५७॥**

**पशुसामान्यविध्यादौ सूत्रमेवान्यथाकृतम् ।**

---

पदेन व्यवहितत्वमुदाहरणेन स्पष्टयति— ॥पदेनेति॥

प्रथमाध्यप्रथमपादान्ते श्रूयते— लोके **सन्नियमात्प्रयोगसन्निकर्षः स्यात्** (१-१-१६) इति । लोके अर्थस्य चक्षुरादिसन्निकर्षात् तद्विषयकः शब्दप्रयोगः सन्नियमः उपपद्यते ; वेदे तु तथा न सम्भवति ; तत्प्रतिपाद्यार्थस्य धर्मादेः अर्थस्यातीन्द्रियत्वात् इत्यर्थः । अत्र लोके इति पदस्य सन्नियमपदव्यवहितसन्निकर्षपदेन सम्बन्धस्वीकारेण अर्थवर्णनात् व्यवहितत्वं पदेन ।

सूत्रेण (वाक्येन) व्यवधानं प्रपञ्चयति— ॥सूत्रेणेति॥

'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति विहिता अश्वप्रतिग्रहेष्टिः लौकिकाश्वदाननिमित्तिकेति अथवा वैदिकाश्वदाननिमित्तिकेति सन्देहे **'दोषात्त्विष्टिर्लौकिके स्यात्'** (३-४-३४) इति पूर्वपक्षयित्वा **'अर्थवादो वाऽनुपपातात् तस्माद्यज्ञे प्रतीयेत'** इति वैदिकनिमित्तकत्वेन सिद्धान्तितम् । एतमेव न्यायमतिदिश्य सोमवमननिमित्तकर्मणि विचारे **"पानव्यापच्च तद्वत्"** (३-४-३८) इति सूत्रितम् । अत्र सूत्रव्यवधानेन "तद्वदिति" पदेन लौकिकपक्षः परिगृह्यते ॥५७॥

कुत्रचिच्च सूत्रस्यैवान्यथाकरणमपि दृश्यते ; इत्याह— **पशुसामान्यविध्येति॥**

**अग्नयश्च स्वकालत्वात् देयधर्मापयातनम् ॥ ॥५८॥**

**व्याख्यानं वाक्यभेदेन गुणकल्पास्त्वमी कृताः ।**
**औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति ॥ ॥५९॥**

---

तृतीयाध्यायषष्ठपादे– "**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्**" (३-६-२८) इति। इदं तावद्विचारितं ज्योतिष्टोमे पशुधर्मा विधीयन्ते – ते किं अग्निषोमीयादित्रयाणामपि पशुयागानां साधारणाः? उत सवनीयमात्रसम्बन्धिनः? अथवा अग्निषोमीय पशुयागमात्राङ्गभूताः इति संशये इदं 'सूत्रं प्रवृत्तम् । अस्य च अयमर्थः स्वाभाविकः प्रतीयते– सर्वेषां पशुयागानां तुल्यः समानः धर्मः प्रकरणाविशेषात् इति पूर्वोक्तपक्षत्रये आद्यपक्षप्रतिपादकमिति । परं तु भाष्यकारैः– '**स्थानाच्च पूर्वस्ये**'त्यादि सूत्रसङ्गत्यै, प्रथमपक्षमुत्सूत्रमेव स्वीकृत्य द्वितीयपक्षमात्रप्रतिपादकतया यदि शब्दाध्याहारेण– '**तुल्यः सर्वेषां पशुविधिः स्यात्**' यदि प्रकरणविशेषो न भवेत्, अस्ति तु प्रकरणविशेषः; तस्मात सवनीयमात्राङ्गमिति सिद्धान्तितम् ॥

अत्र सूत्रस्यैवान्यथाकरणम् । वाक्यभेदाभ्युपगमेन अर्थवर्णनमपि क्वचित्, क्वचित् गौणार्थत्वीकरणं चेत्येतदुदाहरणैः स्पष्टयति– ॥**अग्नयश्चेति** ॥

तृतीयसप्तमे– '**ते सर्वार्थाः प्रयुक्तत्वात् अग्नयश्च स्वकालत्वात्**' (३-७-३९) इति सूत्रे तावदेवं विचारितं– सत्रे नानाकर्तृके । किं अव्यवस्थितं तेषां कार्यम्? उत समाख्याबलाद्व्यवस्थितम्? इति संदेहे **ते सर्वार्थाः) प्रयुक्तत्वात्** इति पूर्वपक्षः; एव अग्नयोऽप्याहवनीयादयः किं प्रकृतिमात्रगामिनः पर्णतावत्, उत सर्वार्थाः इति विशये प्रकृतिमात्र-

**दर्शनाच्च विशेषस्य तथाभ्युदय इत्यपि ।**
**सूत्रकारप्रशंसा वा लोक इत्यादिनोच्यते ॥  ॥६०॥**

---

गामित्वं पूर्वपक्षीकृत्य, स्वतन्त्रकालकत्वात् प्रकृति-विकृतिसाधारण्येन सर्वार्थाः अन्वयः इति तावत् सिद्धान्तितम् । अत्र वाक्यभेदमाश्रित्याधिकरणान्तरं व्याख्यातम् । तथा '**अभ्युदये दोहापनयः सधर्मः स्यात् प्रवृत्तत्वात् श्रुतोपदेशाच्च** (९-४-४१, ४२) इत्यत्र अभ्युदितेष्टौ दधिपयसोः प्रदेयधर्माः अनुष्ठेया एवेति निरूप्य अनन्तरं सूत्रे '**अपनयो वा अर्थान्तरे विधानात् चरुपयोवत्** (९-४-४३) **लक्षणार्था श्रुतश्रुतिः** (९-४-४४) इति सूत्राभ्यां पूर्वोक्तापवादतया देयधर्मराहित्यं प्रतिपाद्यते; इत्युक्तम् । पूर्वसूत्राभ्यां साकं एतत्सूत्रयोः स्वरसतः एकवाक्यत्वस्वीकारेण अभ्युदितेष्टाविव देयधर्मायत्तनं प्रतिपाद्यते इति प्रतीयमानमपि तथा नाङ्गीक्रियते किन्तु सूत्रद्वय पृथक्कृत्य पशुकामेष्टिपरतया योजितम् ।

एवं '**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः**— इत्यत्र औत्पत्तिक शब्देन लक्षणया स्वाभाविकार्थाभिधानं, एवं अष्टमे '**गव्यस्य च तदादिषु** इत्यत्र गोविकारतदवयववाचिना गव्यशब्देन गवामयनाभिधानं, पञ्चमे '**उष्णिक्ककुभोरन्ते दर्शनात्**' इत्यत्र उष्णिक्ककुप्शब्देन कारणे कार्योपचारं 'देवो वर्षति तण्डुलान् इतिवत् स्वीकृत्य त्रिष्टुभाभिधानं, ऋत्विजां दक्षिणाविभागप्रतिपादकसूत्रे - '**दर्शनाच्च विशेषस्य तथाऽभ्युदये**' इत्यत्र अभ्युदयशब्देन अभ्युदयसाधनद्वादशाहो लक्ष्यते; इति स्वीकरणं च तत्र तत्र दृश्यते । अत एव सूत्रव्याख्यानस्यापि अनेकधा तत्र तत्र भाष्यकारैरेव करणात परिसंख्यापक्षस्य पूर्वोक्तस्य न सम्भवः इति ॥ ६० ॥

प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ।
भवितव्यं च तेनेति प्रागस्मादेकवाक्यता ॥ ॥६१॥

वेदाध्ययनवाक्याद्वा तेनाधेयस्य दूषणम् ।
प्रसिद्धार्थपदैः शक्यः सूत्रैः वेदार्थनिर्णयः ॥ ॥६२॥

न च सोऽस्त्यथशब्दस्य विना ते पूर्वकर्मणा ।

---

अनन्तरं पञ्चमं स्तुतिपक्षं निरूपयितुमुपक्रमते– ॥सूत्रकारेति॥

प्रसिद्धार्थकपदैः सूत्रैः सिद्धान्तस्थापपात् शिष्याणां न बुद्धि-क्लेशो भवेदिति महत्या कृपया भगवान् जैमिनिः सूत्राणि प्रसिद्धार्थक-पदयुक्तानि रचयामासेति अहो! पाणिन्याद्यपेक्षया महाकृपालुः किल भगवान् जैमिनिरिति सूत्रकारप्रशंसेति भाष्यकारः प्राह– ॥प्रसिद्धेति॥

अस्मिन्पक्षे नातीव प्रयोजनं परिदृश्यते ; यतः सूत्राणां पठनादेव सूत्रकारुण्यं ज्ञायते; एवेति भाष्ये तत्कथनं निष्प्रयोजनमिति मत्वा वार्तिककारः षष्ठमथशब्ददूषणपक्षं परिगृह्णाति– ॥ भवितव्यमिति ॥

लोके येष्वर्थेषु प्रसिद्धानित्यादिभाष्यस्य, 'भवितव्यं तु तेन' इति भाष्यात् प्राक् एकवाक्यतामाश्रित्य अथऽशब्ददूषणं, अथवा' 'तत्तु, वेदाध्ययनं' इति भाष्यात्पूर्वमेकवाक्यतास्वीकारेण वा अथशब्ददूषणं इति द्वेधा चाथशब्दार्थदूषणं कर्तुं शक्यते ॥ ६३ ॥

तत्रादौ प्रथमावधिस्वीकारेण भाष्यं योजयति– ॥प्रसिद्धेति॥

प्रसिद्धार्थकपदघटितैः सूत्रैः वेदार्थनिर्णयः शक्यः कर्तुम् । न चास्मिन् सूत्रे तथा भवति ; प्रथमपठितस्य अथशब्दस्य आनन्तर्ये प्रसिद्धस्यत

**प्रसिद्धार्थपदं युक्तं तच्च नास्तीति दूषणम् ॥ ॥६३॥**

**प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्ण्यते ।**
**प्रदर्शनार्थमित्येके केचिन्नानार्थवादिनः ॥ ॥ ६४ ॥**

**समुदायादवच्छिद्य भवदासेन कल्पितात् ।**

---

प्रतियोगिभूतपूर्वकर्मणः अत्र प्रथमसूत्रे अभावेन चानन्तर्यार्थकत्वासम्भवात् अप्रसिद्धार्थ एवाथशब्दस्य वर्णनीय इति त्वाक्षेपः ॥ ६३ ॥

द्वितीयावधिमाश्रित्याथशब्दाक्षेपं प्रदर्शयति— ॥**प्रसिद्धार्थपदमिति**॥

सूत्रेषु अध्याहारादिकं विनैव प्रसिद्धार्थग्रहणं किल युक्तम्; अन्यथा वेदवाक्यव्याख्यानसूत्रव्याख्यानाभ्यां गौरवप्रसङ्गात् । लोके चाथशब्दः वृत्तादनन्तरप्रक्रियार्थो दृष्टः ; न चेह किञ्चिद् वृत्तमुपलभ्यते । भवितव्यं तु तेनेत्याक्षेपः । **प्रसिद्धार्थं पदं युक्तमिति** वार्तिकम् तु भवितव्यं तेनेत्यस्यार्थकथनात्मकम् । तच्च नास्त्यनेति तु पूरणीयम् ॥ ६४ ॥

नन्वत्राथशब्दव्याख्यानं नावश्यकम्; प्रसिद्धत्वात् इति शङ्कते— ॥ **प्रसिद्धोप्यथ इति** ॥

शंकायाश्च पूर्वोक्तायाः चतुर्धा परिहारमाह— **प्रथमं समाधानं** तावत्— ॥ **प्रदर्शनार्थमिति** ॥

**द्वितीयं तु,** भवदासो हि **अथातः**शब्दयोर्मिलितयोः आनन्तर्यार्थकत्वमाह । तन्न युक्तमिति स्पष्टयितुं— **अथ विशेषलक्षण** (८-१-१)

शक्तितोऽवयवं चैव वर्णयन्त्यष्टमादिवत् ॥ ॥ ६५ ॥

न चात्र चोदनाव्याख्या गौरवं तत्र चोदितम् ।
यद्वाक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात् ॥ ॥६६॥

यदि लोकप्रसिद्धार्थग्रहणं क्रियते वदे ।
स नास्त्यत्राथशब्दस्येत्यध्याहारादिकल्पनम् ॥ ॥६७॥

---

मित्यष्टमाध्यायादिमसूत्रे यथा केवलस्याथशब्दस्यैवानन्तर्यार्थकत्वं, तद्वदेवात्रापि, इति दर्शयितुं प्रसिद्धस्याप्यर्थस्य निरूपणमिति ॥

**तृतीयं च समाधानं**— वेदसूत्रयोरूभयोरपि व्याख्याने किल गौरवं, नचात्रादिमसूत्रे किञ्चिदपि वेदवाक्यं व्याख्यायते । यदि सूत्रमपि न व्याख्यायेयेत तर्हि सूत्रं निर्विषयमेव स्यात् इति, अथशब्दव्याख्यानं युक्तमेवेति ।

**चतुर्थं च समाधानं**— सूत्रस्थानां पदानां प्रसिद्धार्थग्रहणं न सम्भवति; वृत्ताभावेनानन्तर्यार्थत्वासम्भवात् । प्रथममेव हि पदमप्रसिद्धार्थकं **'प्रणव एव विस्वरः'** इति न्यायात् । अतः सूत्राण्यप्रसिद्धार्थकाण्येवेति 'लोक' इत्यादि भाष्येणाक्षेपे प्राप्ते, तत्समाधानाय अथशब्दादीनां पदार्थकथनं युक्तमेवेति ॥ ६५—६६ ॥

भाष्यारम्भे विद्यमानं **'लोके येष्वर्थेषु'** इत्याक्षेपभाष्यं व्याख्याति—
॥ **यदि लोकेति** ॥

लोके प्रसिद्धार्थग्रहणं यदि सूत्रस्थपदानां क्रियते इत्युच्यते, तर्हि तत्प्रथमसूत्र एव नास्ति अथ शब्दस्येत्याध्याहारं कृत्वा भाष्यं व्याख्येयम ॥

**वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ।**
**ना व्याख्यातेऽथ शब्दार्थे ज्ञायते तेन वर्ण्यते ॥ ॥६८॥**

**अनर्थके वाऽन्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ।**
**तस्मात् श्रुतार्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ॥ ॥६९॥**

---

**पञ्चमं प्रकारमाह— ॥ वेदाध्ययनवृत्वत्तमिति ॥**

भाष्ये— अथशब्दव्याख्यानस्यायमाशयः— यद्यपि आनन्तर्ये प्रसिद्धि-रथशब्दस्येति न स व्याख्यातव्यः ; तथाऽपि वेदाध्ययनस्यैव पूर्ववृत्तत्वम् , **'अधीत्य स्नायात्'** इति विहितस्नानस्य [समावर्तनस्य] उत्कर्षकल्पनं च यत् सिद्धान्तसम्मतं तत् नाव्याख्याते अथ शब्दे भवतीति तत्सिद्ध्यर्थं वर्ण्यते इति ॥६८॥

पूर्वनिरूपितावधिद्वयमध्ये प्रथमावधिपक्षे **'भवितव्यं तु तेने'**त्यादि-भाष्यस्य परिहारपरस्य योऽर्थः सः वर्ण्यते- ॥ **अनर्थकेति** ॥

योऽयं सूत्रस्थः अथ शब्दः, अथ किं स अनर्थकः ? अथवा आनन्तर्यव्यतिरिक्तार्थकः ? नाद्यः— प्रसिद्धेर्बाधात् , कथं ? अर्थवत्त्वेन प्रज्ञातत्वात् । न द्वितीयः ; आनन्तर्ये एव सर्वलोकप्रसिद्धत्वात् । एवं चानन्तर्यमेव यद्यर्थः अथशब्दस्य, तर्हि तदुपपादकं पूर्ववृत्तं किञ्चित् कल्पनीयम् । तदेवोच्यते— **"भवितव्यं तु तेने"**ति भाष्येण सामान्यतः । **'निर्विशेषं न सामान्यम्'** इति न्यायेन, विशेषरूपपूर्ववृत्तपदार्थापेक्षायां तत्तु वेदाध्ययनमित्युत्तरभाष्यप्रवृत्तिः ।

यदि चोक्तरीत्या **'भवितव्यं तु तेने'**ति भाष्यमपि चाक्षेपभाष्य-कोटिप्रविष्टमिति विभाव्यते तदा तस्योत्तरं— **तत्तु वेदाध्ययन'मित्येव ।**

**विशिष्टलिङ्गविज्ञानात् विशिष्टे लिङ्गिनीक्षिते ।**
**सूत्रेणासम्भवं मत्वा नैतदित्यब्रवीत्परः ॥** ॥७०॥

**आनन्तर्योपदेशेन तद्-दृष्टार्थतयापि च ।**
**वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ॥** ॥७१॥

---

वेदाध्ययनमेव पूर्ववृत्तमिति ; कुतः ? अन्यस्यापि कर्मणो अनन्तरं धर्मजिज्ञासा युक्ता, वेदाध्ययनात प्राग्वा । अतश्च **तत्तु वेदाध्ययनमिति** न घटते ; इति भाष्ये यत् आक्षिप्यते तन्न युक्तम् । उत्तरत्र वेदार्थ-रूपधर्मविचारबलादेव धर्मप्रतिपादकवेदस्य यदध्ययनं तस्यैव पूर्ववृत्वसम्भवात् नान्यस्य पूर्ववृत्तता युज्यतेति शङ्कामनूद्य परिहरति– ॥**विशिष्टेति**॥

अत्र लिङ्गशब्दः ज्ञापकपरः ; तच्च ज्ञापकं, धर्मविचाररूपं (विशिष्टं) विशेषरूपम् । लिङ्गि च पूर्ववृत्तं तच्च विशिष्टं विशेषात्मकं वेदाध्यनात्मकम् । यद्यपि नान्यस्य वेदाध्ययनभिन्नस्य पूर्ववृत्तत्वसम्भवः । अन्यस्य धर्मविचारं प्रत्यनुपयोगित्वेन पूर्ववृत्तत्वाघटनात् । तथापि नैव सूत्रेणास्यार्थस्य लाभो भवति ; इत्याक्षेप्तुराशयः ॥७०॥

एतदेव च विशदयितुं पृच्छति– ॥**आनन्तर्योपदेशेनेति**॥

यदुक्तं सूत्रकारैः वेदाध्ययनस्य पूर्ववृत्तता नैवोक्तेति । तदयुक्तम् ; अथशब्दस्य प्रसिद्धेरानन्तर्यपरत्वं, अन्यकर्मानन्तर्योक्तौ विचारस्य अदृष्टार्थ-त्वापत्तेश्च वेदाध्ययनस्यैव पूर्ववृत्तता अनिवार्येति कुतो वा असूत्रित-त्वाशङ्का ॥७१॥

येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ।
तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ॥ ॥७२॥

क्रियमाणा च जिज्ञासा नियमाद्यस्य कस्यचित् ।
क्रियेतानन्तरं वेति व्यर्थं तदुपदेशनम् ॥ ॥७३॥

---

दृष्टार्थत्वलाभाय वेदाध्ययनस्यैव पूर्ववृत्तत्वं नान्यस्येति यदुक्तं तदुपपादयति– ॥येनवृत्तेनेति॥

जिज्ञासा यस्य पूर्ववृत्तत्वं विना नैवोपपद्यते, तस्यैव जिज्ञासापूर्वकालिकत्वं चेत् तदानन्तर्यं जिज्ञासायां दृष्टार्थं भविष्यति: यथाकर्मभेदविचारानान्तय शेषत्वनिरूपणं प्रति । अन्यथा हि जिह्वाद्यवयवावदानानन्तर्यस्य वक्षआद्यवदानं प्रतीवादृष्टार्थत्वं हि नियमतः स्यात् । अतः वेदाध्ययनस्यैव प्रकृते पूर्ववृत्तत्वमनिवार्यम् ॥७२॥

आनन्तर्यपराथशब्दोपदेशादपि वेदाध्ययनस्यैव पूर्ववृत्तत्वाक्षेपः इत्यमुमंशं दर्शयति– ॥क्रियमाणेति॥

लोके सर्वस्यापि कर्मणः क्रियमाणस्य यत्किञ्चिदानन्तर्यं हि सर्वथा वर्तत एवेति धर्मजिज्ञासायामानन्तर्यं कथ्यमानं हि सूत्रकाराणां वैयर्थ्यकलङ्कितम् । क्रियाविशेषानन्तर्यं कथ्यतेति चेत् तादृशक्रियानन्तर्यमेव वक्तव्यं यत्र दृष्टार्थता लभ्येतेति वेदाध्ययनात्मकं निश्चितमेव पूर्ववृत्तमिति न सूत्रकारस्य अनुक्तत्वोपालम्भः ॥७३॥

सङ्कल्पादिभिरप्येषा विना सत्यं न सिद्ध्यति ।
साधारण्यात्तु तेऽप्यत्र नोपदेश्याः कथञ्चन ॥ ॥७४॥

तस्माद्धर्मबुभुत्सायां यदसाधारणकारणम् ।
निर्वृत्तं सूत्रकारेष्टं तच्च नाऽध्ययनादृते ॥ ॥७५॥

अन्यस्यापीत्यनेनैव वेदपाठे प्रबाधिते ।
प्रागपीति न वक्तव्यं तत्राप्यन्यस्य सम्भवात् ॥ ॥७६॥

---

ननु सङ्कल्पपूर्वकत्वात् कर्मणां तदानन्तर्यं दृष्टार्थमेवेति न नियमेन वेदाध्ययनपूर्वकत्वाक्षेपसम्भवः; इति चेदाह— ॥**सङ्कल्पादिभिरिति**॥

सर्वक्रियासाधारणत्वात् सङ्कल्पादेः न तदानन्तर्योपदेशेन जिज्ञासायां कश्चनातिशयः; इति न तदानन्तर्यं स्वीक्रियते; अपि त्वसाधारणत्वात् वेदाध्ययनानन्तर्यमेवेति ॥

तदेतदुपसंहरति— ॥**तस्माद्धर्मेति**॥

धर्मजिज्ञासां प्रति **यदसाधारणकारणं** पूर्ववृत्तं, तदेव अथ-शब्दार्थानन्तर्यप्रतियोगित्वेन **सूत्रकारेष्टं** तादृशं च पूर्ववृत्तं नाध्ययनं विना भवत्यन्यत् किञ्चित् ॥७५॥

अध्ययनान्तर्याक्षेपपरं भाष्यं यत् **'प्रागपि च वेदाऽध्ययनात्'** इति; तदनुपपन्नमित्याक्षिपति— ॥**अन्यस्यापीति**॥

पूर्वं **'अन्यस्यापि कर्मणोऽनन्तरं'** इति यद्भाष्यं तेनैव, वेदा-ध्ययनस्य पूर्वभावित्वनियमत्यागः ज्ञातः। तदैव वेदाध्ययनभिन्नकर्मणः जिज्ञासापूर्वभावित्वे वेदाध्ययनात् प्राक् धर्मजिज्ञासा तुल्यावित्तिवेद्यतया

पूर्वेणैव हि लब्धेऽर्थे तादृशीं त्वित्यनेन किम् ।
वक्ष्यमाणमनालोच्य सम्भवेत् परिचोदना ॥ ॥७७॥

न तावत्साध्यतेऽद्यापि चोदना धर्मसाधनम् ।
इह वा कानि वाक्यानि विचारिष्यति जैमिनिः ॥ ॥७८॥

---

ज्ञातैवेति किमर्थमिदं **'प्रागपि च वेदाध्ययनात्'** इति भाष्यं, पुनरुक्तेः ॥७६॥

न केवलमिदं भाष्यं परं गतार्थं, अपि तु **'तादृशीं तु धर्मजिज्ञासामधिकृत्ये'**त्यादिभाष्यं च। कुतः? **"तत्तु वेदाध्ययनम्"** इत्यनेन पुनरुक्तत्वात् इति शङ्कते— ॥**पूर्वेणैवेति**॥ पूर्वं हि **"तत्तु वेदाध्ययनम्। तस्मिन् हि सति सा अवकल्पते"** इति भाष्ये जिज्ञासानुपपत्त्यैव वेदाध्ययनस्यैव पूर्ववृत्तत्वं आक्षेपाल्लभ्यते; इत्युक्तम्। अत्रापि **'वेदाध्ययनमन्तरेण न सम्भवतीति** तावन्मात्रमेवोच्यते। अतः पुनरुक्तत्वमपरिहार्यमिति ॥

एवमाक्षेपे समाधत्ते— ॥**वक्ष्यमाणेति**॥

**'अन्यस्यापि कर्मणः'** इत्यादि भाष्यं यदाक्षिप्तं तत्समाधानमाह—**नतावदिति** आदिमसूत्रत्वादस्य नैतावत्पर्यन्तं वेदार्थ **एव** धर्मः; वेद**वाक्यान्येव** विचारयिष्यति **जैमिनिः** इत्यादिकं न ज्ञातम्। धर्ममात्रं श्रुत्वा चैत्यवन्दनादीनामपि धर्मत्वात् अन्यस्यापि बुद्धवाक्यादेरनन्तरं धर्मजिज्ञासा युक्तेति शङ्का भवेदेव; अतश्च धर्मजिज्ञासायाः न नियमेन वेदाध्ययनानन्तर्यम्। **'प्रागपि च वेदाध्ययनात्'** इति भाष्ये अपि शब्दं प्रथमतः आकृष्य

धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ।
पठित्वा धर्मजिज्ञासा इत्यन्यस्यापि चोदना ॥ ॥७९॥

यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य तु ।
जिज्ञासाऽनन्तरं कार्या इत्यत्र द्वयमीप्सितम् ॥ ॥८०॥

नानधीत्य न चाप्यन्यत् कृत्वेत्येतन्न लभ्यते ।
वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः ॥ ॥८१॥

---

**'अपि च प्राग्वेदाध्ययनात् धर्मजिज्ञासा कर्तव्या'** इति योज्यते अतश्च नाध्ययनानन्तर्यं धर्मजिज्ञासायाः । कुतः ? लोके जिज्ञासा हि हानोपादानप्रयोजनवती । अन्यथा विचारवैयर्थ्यात् । सा च हानोपादानाभ्यां प्रागेव कर्तव्या, तत्साधनत्वात् । अतः धर्मं जिज्ञासित्वा वेदार्थ एव धर्मः इति निर्णीय पश्चात् धर्मज्ञानाय वेदाध्ययनं कार्यमिति, **'प्रागपि च वेदाध्ययनात्'** इति भाष्येणोच्यते । इदं च सर्वं वक्ष्यमाणमनालोच्य ॥ ७७–७९ ॥

वक्ष्यमाणालोचने वा चोद्यसम्भवमाह— ॥ **यद्वेति** ॥

वक्ष्यमाणालोचने वा वेदवाक्यानामेव विचार्यमाणत्वात् सूत्रमेवं भवति- **'वेदमधीत्य अथातो धर्मजिज्ञासा'** इति । अत्र विधेयार्थद्वयं प्रतीतिविषयोभवति । **अधीत्यैव** नानधीत्य धर्मजिज्ञासेत्येकोऽर्थः । अनन्तरमेव धर्मजिज्ञासा नान्यत्कृत्वा इत्यपरः । तदुभयमपि नैकेन वाक्येन लभ्येत । प्रथमकल्पे हि आनन्तर्यमनूद्य वेदमधीत्यैव नानाधीत्येति विधीयते । अन्यस्मिन्कल्पे तु आनन्तर्यं विधीयते एवं विरुद्धयोरनयोः एकेनैव वाक्येन विधानासम्भवात् वाक्यभेदः स्यात् । अतः

अधीत्यैवेनि हि विधौ स्नानादेरप्यनन्तरा ।
भवेत् धर्मस्य जिज्ञासा नानन्तर्यविधिस्तदा ॥ ॥८२॥

आनन्तर्यविधाने तु या वेदाध्ययने कृते ।
इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते ॥ ॥८३॥

बुद्धवाक्यादिपाठस्य तादृशीं त्वित्यपाक्रिया ।

---

एकस्मिन्नेव विधातव्ये यदि प्रथमकल्पमाश्रित्य **'अधीत्यैवेति विधीयते'** तदा आनन्तर्यस्याविधानात् **'अन्यस्यापि कर्मणः स्नानादेरनन्तरं धर्मजिज्ञासा स्यादिति'** इति भाष्यं युक्तमेव । यदि च द्वितीयपक्षमाश्रित्य आनन्तर्यविधिः स्वीक्रियेत, तर्हि या वेदमधीत्य जिज्ञासेति वेदाध्ययनपश्चाद्भाविनीं जिज्ञासामनूद्य तस्यामेवानन्तर्यस्य विधानात् प्राक् वेदाध्ययनात् धर्मजिज्ञासा न वारितेति प्रागपि च वेदाध्ययनात् धर्मजिज्ञासा स्यादिति **'प्रागपि च वेदाध्ययनात्'** इति चोद्यं भाष्योक्तं समीचीनमेवेति न मनागपि भाष्यानुपपत्तिः ॥८०—८३॥

एतावता चोद्यभाष्यानुपपत्तिं परिहृत्येदानीं **'तादृशीं तु'** इति परिहारभाष्यानुपपत्तिं वारयितुं उपक्रमते—॥**बुद्ध-वाक्यादिपाठस्येति**॥

पूर्वं **'अन्यस्यापि कर्मणो अनन्तरं'** इति भाष्यस्य वक्ष्यमाणानालोचनेन शङ्कापरत्वमित्युक्तं, तस्य परिहारः **'तादृशीं तु धर्मजिज्ञासा-**मिति भाष्येणाभिप्रेतः । तदिदं स्पष्टं **वेदवाक्यानामनेकविधो विचारः इह वर्तिष्यते'** इत्युत्तरभाष्येण । अन्यच्च चोद्यं, हानोपादानार्थं किल जिज्ञासा । सा च अध्ययनात् प्रागेव कर्तव्या इति । तदपि इदमेव भाष्यं परिहरति । कथं अनेकविधवेदवाक्यार्थविचारः न प्रागध्ययनात्

प्रागपीति च चोद्यस्य सामर्थ्यात् वेदलाभतः ॥८४॥

---

कथमपि भवितुमर्हति। ननु वेदार्थस्य धर्मत्वे ज्ञाते एव हि धर्मजिज्ञासवः धर्मप्रतिपादकवेदाध्ययने प्रवर्तेरन् तदेव कथं ज्ञातं; इति चेत्— उपनेतारः ये हितकारिणः पित्रादयः तैः प्रवर्तिता बालाः वेदाध्ययने प्रवर्तेरन्निति न चोद्यावकाशः ।

**'वेदमधीत्य अथातो धर्मजिज्ञासा'** इति सूत्रमङ्गीकृत्य तत्रार्थद्वयस्य विधित्सितत्वात वाक्यभेदोऽपरिहार्यः ; अन्यतरपक्षाश्रयणे च **'वेदमधीत्यैवे'**त्यस्य विधाने स्वीकृते आनन्तर्याविधानात् **अन्यस्यापि कर्मणः'** इति चोद्यमिति यदाशङ्कितम् तत्रेदमुच्यते— आनन्तर्यविधानपक्ष एव स्वीक्रियते । तदा च अन्यकर्मानन्तर्यं धर्मजिज्ञासायाः इति चोद्यस्यैव नैवावकाशः । तर्हि वेदमधीत्यैवेत्यस्याविधानात **प्रागपि च वेदाध्ययनात्'** इति चोद्यमपरिहृतमेवेति चेत् तत्राह— ॥**प्रागपीति**॥

अस्यापि चोद्यस्य **तादृशीं तु धर्मजिज्ञासा**मिति भाष्येणैव परिहारः लभ्यते कथं ? अध्ययनविधेः दृष्टार्थत्वेन तद्विधिप्रयुक्तस्य विचारस्य अध्ययनात् पूर्वं प्रयोजनाभावेन प्रसक्तेरभवात् यतः वेदवाक्यविचारः अध्ययनाभावे न भवति ; अत एव सामर्थ्येन लाभात् अध्ययनस्य अधीत्यैवेत्यविधावपि न विचारस्य पूर्वप्रसक्तिः ; जिज्ञासासामर्थ्येन वेदाध्ययनस्य पूर्ववत्तात्वलाभात् ।

एतेन **'अध्ययनात पूर्वमेव धर्मजिज्ञासा युक्ते'**ति यदुक्तं तदप्यपास्तम् ॥८४॥

नैवैतयोर्वचोभङ्ग्योरेकोप्यर्थो विधीयते ।
अपिवेत्यादिकेनोक्तं किन्त्वित्येतद्विधीयते ॥८५॥

आनन्तर्यं पुरस्ताच्च नापि शिष्म इतीह तु ।
केचित् अध्याहरन्त्यस्य सूत्रस्य अन्यपरत्वतः ॥८६॥

---

अत्रापरं भष्यं **"अपि च नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः परस्ताच्चानन्तर्यम्"** इति । तस्यार्थमुपन्यस्यति ॥**नैवैतयोरिति**॥

**'अयातो धर्मजिज्ञासे'**त्यस्मिन् सूत्रे हि नाथशब्दार्थस्य विधानम् , न वानधीतवेदस्य प्रतिषेधः समाश्रीयते ; किं तर्हि वेदाध्ययनानन्तरं हि उभयमापतति १)**अर्थविचारः**, २)**अधीत्य स्नायादिति'** स्मृतिवचनबलात् गुरुकुलात्समावर्तनरूपं स्नानं इति । तत्र स्मृतिप्राप्तगुरु-गुरुकुलान्निवृत्तिरूपस्नानव्यावृत्तिर्विधीयते । तथा च गुरुकुलादसमावृत्तः कथं नाम वेदार्थं विचारयेत् ; इत्येवमर्थं इदं सूत्रम् । अयमर्थः— **"अपि चैव नैव वयामिह"** इति भाप्यादारभ्य **इत्येवमन्तोऽयमुपदेशः"** इत्यन्तभाप्येणोक्तः ॥ ८५ ॥

पूर्वोक्तभाप्यं न्यूनं विवक्षितार्थाबोधकं मन्यमानाः केचित् अध्याहारेण व्याकुर्वन्ति । तत्प्रदर्शयति- ॥**आनन्तर्यमिति**॥

सूत्रं चेदं गुरुकुलवासावसाननिवृत्तिमात्रपरं, अध्ययनमानन्तर्यं चेत्युभयमपि नात्र विवक्षितम् । यथाश्रुतं च भष्यं अध्ययनविधाननिषेधमात्रपरं चोपलभ्यते । ततः **"नापि परस्ताद्दानन्तर्यं शिष्मः"** इत्यध्याहारेण उभयवचननिषेधार्थतया व्याख्यातव्यमिति । अध्याहारे चेदमेव कारणं सूत्रस्य पूर्वोक्तरीत्या अन्यपरत्वात् इति ॥८६॥

न वार्यते अनधीतत्वं नानन्तर्यं विधीयते ।
सामर्थ्यसिद्धव्यदृष्टार्थप्रसङ्गात्तेन लक्षणा ॥८७॥

आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ।
श्रुतार्थं तु परित्यज्य लक्षणार्थो विधीयते ॥८८॥

---

ननु सूत्रमिदं कथं च गुरुकुलवासनिवृत्तिव्यावृत्तिं दर्शयेत् ? न हि सूत्रे प्रथने तादृशार्थबोधकपदानां उपलंभो वर्तते । प्रत्युत अध्ययनानन्तर्ययोरेव श्रुत्या विधानं दृश्यते । अतस्तदेव युक्तमिति चेदाह-- ॥ **न वार्यते इति** ॥

योह्यनधीतवेदः स सर्वकर्मस्वशक्तः । अत एवचानधिकारीति तस्य जिज्ञासा सामर्थ्यादेव वारिता । किं तन्निवृत्त्यर्थ-ध्ययनविधिना फलम् । गुरुकुलवासनिवृत्तिव्यतिरेकेण आनन्तर्यबोधनं तु अदृष्टार्थत्वप्रसंगात् न युज्यते ; अतः दृष्टार्थाध्ययनानन्तर्यबलेन गुरुकुलवासावसान-निवृत्तिरूपलाक्षणिकार्थ एव स्वीक्रियते इति ॥८७॥

तमिममध्याहारपक्षं निराकुरुते-- ॥**आनन्तर्यइति**॥

सर्वत्राजहत्स्वार्थलक्षणास्थले, श्रुतार्थानुपपत्त्यैव हि लक्षणा भवति । यदि च सूत्रे अथ शब्दे आनन्तर्यरूपश्रुतार्थः नाश्रितः तर्हि लक्षणा-बीजाभावः ; ततश्च न लक्षणेति स्यात् । अतः आनन्तर्यवचनव्यक्ति-माश्रित्यैव श्रौतार्थपरिग्रहे अदृष्टार्थत्वप्रसङ्गात्तत्परिहाराय गुरुकुलवासनिवृत्ति-व्यावृत्तिरूपलाक्षिणिकार्थस्वीकरणमावश्यकमिति ॥८८॥

**प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ।**
**तत्कालस्यावरुद्धत्वात् स्नानाभावं हि लक्षयेत् ॥  ॥ ८९ ॥**

**विरोधो युगपत्प्राप्तेः दौर्बल्यं वेदबाधनात् ।**
**स्नानस्य तेन बाधः स्यात् धर्मजिज्ञासया बलात् ॥  ॥ ९० ॥**

---

कथं पुनरथशब्दः गुरुकुलवासनिवृत्तिन्यावृत्तिं लक्षयेदित्यत्र आह– ॥ **प्रतीतेति** ॥

स्नानजिज्ञासे हि परस्परविरुध्दे । तयोरन्यतरस्य सद्भावः अन्यतरनिवृत्त्यैव हि भवेत् । यदा अध्ययनविधिना अध्ययनानन्तरं आक्षिप्ता जिज्ञासा (विचारः) प्राप्ता भवति तदैवाध्ययनान्तरकालस्य तया अवरुद्धत्वात् तद्विरोधि स्नानं गुरुकुलवासनिवृत्तिरूपं स्मृतिप्राप्तं अध्ययनानन्तरकालिकं निवर्तते । न हि गुरुगृहादनावृत्तः स्नातो भवति । न वा समावृत्तः धर्मविचारं कर्तुं प्रभवेत् । यथा च अध्ययनं गुरुसन्निधिं विना न सिध्यति । तथैव अर्थज्ञानफलको विचारोऽपि न गुरुसन्निधिं विना सिद्ध्येत् । एवं च अध्ययनविधिना अध्ययनानन्तरं धर्मजिज्ञासा कार्येत्युक्ते आनन्तर्ये दृष्टार्थत्व प्रसक्तेः स्नानाभावलक्षणा युक्तैव ॥

ननु च विरोधे किल लक्षणा स्नानविचारयोर्नैव विरोधः, अध्ययनानन्तरं हि 'अधीत्य स्नायादि' ति स्मृत्यनुरोधेन स्नास्यति । ततः विचारं च करिष्यति; पर्यायेणोभयसंभवात् न लक्षणायाः प्रसक्तिः इति चेदाह– ॥ **विरोध इति** ॥

यदि पर्यायः स्यात् अविरोधः । अत्र तु युगपदुभयप्राप्तेः विरोधः न परिहार्यः । कथं ? दृष्टार्थाध्ययनविधिबलेन अध्ययने प्रवृत्तः अर्थज्ञानानु-

स्नानस्य तेन बाधः स्यात् धर्मजिज्ञासा बलात् ।

---

कूलव्यापारात्मकमीमांसाश्रवणात प्राक्नैव गुरुकुलात् विरमन्तुमर्हति । स्मृत्या च (ल्यपा) अध्ययनानन्तरमेव स्नानं प्राप्तमिति उभयोर्युगपदुपनिपातात् अपरिहार्य एव विरोध: इति ॥ ९० ॥

ननु च विरोधिनो: सहानवस्थानात् एक: बाध्यते चेत् प्रमाण प्राप्तत्वात स्नानस्य तद्बाधायोगात् न्याय (युक्ति) प्राप्तदुर्बलजिज्ञासैव ( विचारः ) बाध्यत इति चेत् आह- । "दौर्बल्यंवेदबाधनात्" ॥ स्नानस्यैवात्र दौर्बल्ये, प्रमाणप्राप्तत्वमात्रेण अध्ययनानन्तरं स्नानकरणे च समस्तस्यैव वेदस्य 'स्वाध्यायोऽध्येतव्यः' इति श्रुतिबलात् अर्थ-ज्ञानप्रयोजनकतया अवगतस्य बाधापत्तेः । कुतः ? गुरुकुलात् निवृत्त: विचारकरणेन अर्थज्ञानं न प्राप्नुयात् । स्वाध्यायेन अर्थं जानीयात, इति किलअध्ययनविधेरर्थः तद्बाधापत्तेः । तद्यध्ययनानन्तरं स्नायात् स्वाध्यायाम्नायमतिक्रामेत्, तच्चायुक्तम ; स्मृत्या वेदबाधप्रसङ्गात् ; मूलमूलि-बलाबलविपर्ययप्रसङ्गाच्च । अतः बलवद्धर्मजिज्ञासामनुसृत्य स्मार्तस्य अत एव दुर्बलस्य स्नानस्य बाध एव युक्तः ॥

तदिदमाह- ॥ स्नानस्येति ॥

तदिदं सर्वं भाष्ये 'वेदमर्थवन्तं सन्तं अनर्थकम-वकल्पयेम ; इति । दृष्टो हि तस्यार्थः कर्मावबोधनं नामेति च स्पष्टम्। विरोधाधिकरणन्यायेन एकवेदवाक्यविरोधेऽपि स्मृतेरप्रामाण्यं; किमुत समस्तवेदवाक्यानर्थक्यापत्तौ । अत स्नानस्यैव धर्मजिज्ञासया बलवत्या

दृष्टार्थत्वादिसंयुक्तं वाक्यं लक्षणयात्विति ॥ ॥ ९१ ॥

पुनरुक्त्या गतार्थत्वात् त्यक्तं कैश्चित्तदुच्यते ।
यद्यप्यस्य भवेद्वाच्यं आनन्तर्यमसंशयम् ॥ ९२ ॥

तथापि पूर्वतामात्रं लक्षयेदविरोधतः ।

---

बाधः सिद्ध्यति । भाष्ये ' **दृष्टार्थता वा अध्ययनस्यानन्तर्ये व्याहन्येत** ' "**लक्षणयात्वेषोऽर्थः स्यात्** " इति भाष्यद्वयमुपलभ्यते ।

तत्राद्यं '**वेदमर्थवन्तमनन्तं अनर्थकं**' इति भाष्येण पुनरुक्तं, उपरितनं च अविज्ञायमानार्थकत्वात्— कैश्चिद्व्याख्यातृभिरुपेक्षितम् ; तदाह—॥**दृष्टार्थ-त्वादीति**॥

अत्र **तदुच्यते** इति तदुभयमपि भाष्यं स्वयं समर्थयितुमारभते ।

प्राच्य ग्रन्थेषु तद्भाष्योपलब्धेः तदेव स्पष्टयति—**यद्यपीति**

अयमभिप्रायः— पूर्वस्मिन् भाष्ये हि "क्त्वा" प्रत्ययस्य आनन्तर्यं न वाच्यमित्युक्तम् । इदानीं यद्यपि "क्त्वा" प्रत्ययस्यानन्तर्यमर्थः ; तथापि तस्य श्रौतत्वलोभेन परिग्रहे अध्ययनविधिविरोधो भवति ; अध्ययनस्य दृष्टार्थताभङ्गात् । अतस्तत्परिहाराय लक्षणया पूर्वकालमात्रं क्त्वाप्रत्ययस्य अर्थत्वेन स्वीक्रियते । तदा विचारानन्तरं स्नानकरणेऽपि स्नाने अध्ययनपूर्वकत्वस्य न विरोधः ; इति । अत्र 'क्त्वा' प्रत्यये लक्षणा नाम उभयक्रियाविनाभूतक्त्वेतिप्रत्ययार्थैकदेशवृत्तिरभिप्रेता ॥

ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ॥ ९३ ॥

अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।
यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ ॥ ९४ ॥

अदृष्टायाथवाप्यन्यं संस्कारं तस्य चोत्तरम् ।

---

इदानीं अपरमपि विरोधप्रकारं स्पष्टयति ॥ **ग्रन्थग्रहणेति** ॥

'अधीत्ये'ति स्मृतिस्थपदे इङो रूपे किल विरोधः; वयं तु 'इण् गतौ' इत्यस्य रूपं अङ्गीकुर्मः, तथा च **'अधिगम्ये'** त्यर्थः- सिद्ध्यति । अधिगमश्च ज्ञानं तथा च **"अर्थज्ञानं लब्ध्वा स्नायात्"** इति स्मृत्यर्थः पर्यवसन्नः । एवं च गुरुकुले स्थित्वा विचारं कृत्वा ज्ञानमधिगम्य स्नायादिति पूर्वोक्तस्मृतेः अर्थलाभात् न विरोधो मनागपि ॥

वस्तुतस्तु अधिशब्दः इङः नित्यसहचरितः तदेकदेशभूतः । न हि तस्य केवलस्य कुत्रापि प्रयोगः दृष्टचरः । अतः इङः रूपे समुदायप्रसिद्धिः इवणस्त्ववयवप्रसिद्धिः । **रथकाराधिकारन्यायेन** समुदायप्रसिद्धेः प्रबलतया दुर्बलावयवप्रसिद्धिः बाध्येतेति अधिगम्येति व्याख्यानं नातीव शोभते । स्वाध्यायध्ययनप्रकरणे श्रुतत्वादधीत्येत्यस्य प्रकरणविरोधश्च भवेदधिगम्येति व्याख्यानकरणेऽइति पूर्वोक्तप्रकार एव समंजसो भवति ॥

**'न चेदं स्नानमदृष्टार्थं विधीयते'** इति भाष्यं स्मृत्यर्थ- व्याख्यानपरं, तस्यार्थं विवृणोति— ॥ **यस्त्वेवमिति** ॥

विरोधपरिहाराय यो हि **'अधीत्यस्नाया'**दिति स्मृतौ स्नाया- दित्यस्य स्वतन्त्रफलार्थं स्नानं आप्लवनं, अथवा दीक्षितस्नानवत्

**इहास्नानादिनियमः यः कृतो ब्रह्मचारिणः ॥ ९५ ॥**

**अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ।**
**ततोऽपेक्षावशात् स्नानमस्नानादिनिवर्तनम् ॥ ॥ ९६ ॥**

**विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।**

---

संस्काररूपं आप्लवनात्मकं स्नानं वदे । तस्योत्तररूपं इद भाष्यम् ।

तदेवोत्तरं स्पष्टयति श्लोकद्वयेन– ॥ **इहास्नानादीति** ॥

उपनयनानन्तरं गुरुकुलप्रवेशवेलायां यच्चेदं अस्नानादिनियमजातं ब्रह्मचारिणा स्वीकृतम् तच्चावधिमपेक्षते; अनिर्दिष्टावधित्वात् । अतः कियन्तं कालं एतन्नियमजातं अनुसार्यमित्यवधिसमपेक्षायां **अधीत्यस्नायादि**'ति तत्रावधिं समर्पयति । ततश्च स्मृतौ स्नानशब्दस्य लक्षणया अस्नानादिनियमनिवृत्तिरित्यर्थः । एवं च अधीत्य वेदं स्नायात अस्नानादिकं वर्जयेत् ; इत्यर्थः । स्नानशब्दः स्वविरुद्धास्नानं तत्सहचरितधर्मजातं च लक्षयति । अस्नानादिनियमपरिपालनस्य अवधिसाकांक्षस्य अवधिः अध्ययनमिति **'अधीत्यस्नाया'**दिति स्मृत्या बोधितमिति दृष्टार्थत्वविधानं भवति । आप्लवनात्मकस्नानविधाने तु अदृष्टार्थत्वप्रसंगः इति तत्स्वीकारः अयुक्तो भवति ।

नन्वत्र **'स्नायादि'**त्यनेन स्वविरुद्धास्नाननिवृत्तिः कामं लक्ष्यताम् । गुरुकुलवासादेर्धर्मजातस्य कुतो लक्षणा ? श्रूयमाणस्नानमन्त्र-

तस्मादध्ययनस्नानजिज्ञासाक्रमवाचिनाम् ॥ ॥ ९७ ॥

दृष्टार्थत्वाय शब्दानां एवं व्याख्येयमाश्रिता ।
स्नात्वा जिज्ञासमनोऽपि ननु वेदं न बाधते ॥ ९८ ॥
तेनाविरोधिता तस्येत्येवं वदत उत्तरम् ।

---

धर्मजातलक्षणायोगात् । प्रमाणवाक्ये श्रुतव्यतिरेकेणार्थस्वीकारे अतिप्रसक्त्यापत्तेः । लोकप्राप्तविषयत्वे तु यथामति अर्थवर्णनं न दोषाय इति ।

उच्यते– **'अधीत्यस्नाया'** दिति स्मृतिरपि न्यायमूलैव । न्यायश्च सकलब्रह्मचारिधर्मनिवृत्तौ समानः । कः पुनरयं न्यायः ? इति चेत्- श्रूयताम्- अङ्गानां सर्वेषामपि अङ्गिसाद्गुण्यार्थत्वात इष्टिसमाप्तौ, व्रतसमाप्तिरिव ब्रह्मचारिधर्माणां गुरुकुलवासादीनां अध्ययनाङ्गत्वात अङ्गिभूताध्ययनसमाप्तौ, गुरुकुलवासादयोऽपि निवर्तन्ते इति (अयमेव न्यायः) । इदं च भाष्ये– **"किं तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमाकालमाहुः'** इत्युक्तम् ।

प्रकृतमर्थमुपसंहरति– ॥**तस्मादिति**॥

अयमर्थः– **'स्वाध्यायोऽध्येतव्यः'** इत्यत्र-अध्ययनवाचिनः शब्दस्य अर्थावबोधनार्थत्वं, स्नायादित्यस्य अस्नानादिनियमनिवृत्तिपरत्वं यच्च **'अथातो धर्मजिज्ञासे'** ति सूत्रस्थाथशब्दस्य जिज्ञासाक्रमवचनस्य अध्ययनान्तरोपनिपातिस्मार्तगुरुकुलवासनिवृत्तिव्यावृत्तिपरत्वं च यदुक्तं तत्र सर्वत्र दृष्टार्थत्वमेव हेतुः इति ॥

अत्रशङ्कते– ॥ **स्नात्वेति** ॥

पूर्वं हि **'दौर्बल्यं वेदबाधना'** दिति स्मृतिदौर्बल्ये वेदबाध एव कारणमित्युक्तम् । तदयुक्तम । स्मृत्यनुसारेण स्नानं (गुरुकुलवास-

**यथैवाध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ॥ ९९ ॥**

**तथा ततः परोप्यन्य पदार्थोऽन्यः परस्ततः ।**
**ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्यचित् ॥ ॥१००॥**

**योग्यत्वादागते काले प्राथम्यात् स्नानबाधनम् ।**

---

निवृत्तिं अध्ययानानन्तरं कृत्वा अध्ययनविध्याक्षिप्तविचारे प्रयत्य ताम । ततश्च न कश्चिदपि वेदविरोधः इत्येवं यो ब्रूयात् तस्योत्तरं वदति उत्तरत्र– ॥**यथैवेति**॥

भवेदेवं यद्येवं आश्रीयमाणे शास्त्रोपरोधो न स्यात्, स्नानान्तरं अनेकानि नित्यानि नैमित्तिकानि च कर्माणि शास्त्रैरेव प्राप्यन्ते । यदि तानि तथैव (स्नानाव्यहितोत्तरमेव) कर्तुं स्वीक्रियन्ते– तदा अत्यन्तं वेदबाधः स्यादेव । कानि तानि इति चेत **'स्नात्वा भार्यामुपेयात्** इति स्मृत्या गार्हस्थ्यम् ; ततः **'जातपुत्रो अग्नीनादधीत'** ति श्रुत्या आधानं, ततः यावज्जीवादिवाक्यैः नित्यकर्माणि चेति प्राप्यन्ते । न च तानि अकृतवेदविचारः (ज्ञानरहितः) कर्तुमीष्टे ; अविदुषोऽधिकाराभावात् **'न चाविद्वान् विहितोस्ती'** त्युत्तरत्र वक्ष्यमाणत्वात् ।

एवं चास्याः स्मृतेरनुग्रहकरणे अन्येषां स्मृत्यादिप्रमाणानां बाधः आवश्यकः आपतति ; अतः वरमधीतवेदत्वेन अपि तार्थप्रतीतिमान् अत एव विचारयोग्यः माणवकः अध्ययनानन्तरं विचारमेव स्वीकृत्य अध्ययना

सोऽयं पाठक्रमस्यार्थाद्बाध इत्यवगम्यते ॥ ॥१०१॥

---

व्यवहितप्राप्तं स्मार्तं स्नानं बाधितं मनुते । न चाध्ययनानन्तरं कर्माकरणात् माणवकः प्रत्यवैतीति वाच्यम् । अनधीतवेदत्वेनाधिकाराभावात् प्रत्यवाया प्रसक्तेः । अर्थज्ञानजनकतया वेदस्वीकरणमेव हि अध्ययनम्, विचारात् प्राक् चाध्ययनापरिसमाप्तेर्नाधिकारः कर्मसु माणवकस्य । न चाविद्वान् कर्मण्यधिकारी । नैव चाविचार्य विद्वान् भवेत् । अतः अध्ययनानन्तरमेव धर्मजिज्ञासा (धर्मविचारः) युक्त इति सिद्धम् ॥

वस्तुतस्तु अध्ययनविधिरेव (श्रुतिः) स्मार्तं स्नानं बाधते, विरोधाधिकरणन्यायात् । कथं? न हि इतिकर्तव्यताभूतमीमांसाश्रवणात् प्राक् अध्ययनविधिः परिसमाप्यते अङ्गत्वात् (इतिकर्तव्यतात्वात) विचारस्य, अनङ्गमनुतिष्ठितं प्रधानं भाव्याय न प्रभवति । वक्ष्यति हि साङ्गम्प्रधान- मैकशब्द्यात्' इति ।

अध्ययनस्य स्नानबाधकत्वे अधिकरणन्यायमुदाहरति - ।सोयमिति।।

अत्र इतिः इवार्थकः । अर्थक्रमात् पाठक्रमस्येव अत्र अर्थात् श्रुतक्रमस्य बाधः उक्त हि पञ्चमचतुर्थाद्य 'क्रमकोपोऽर्थशब्दाभ्याम्' इति । अग्निहोत्रहोमयवागूपाकयोः यथपाठं करणे यवागूनैष्फल्यापत्तः प्रयोजनानुसारेण पूर्वं पाकः ततः होमः इति यथा पाठक्रमबाधः, तद्वत् अध्ययनविधिनैष्फल्यापत्तेः अत्र स्नाने क्रमबाधः, इति ।

**गुणप्रधानयोर्वापि विरोधात् गुणबाधनम् ।**
**स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ॥ ॥ १०२ ॥**
**विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।**
**तस्मात् गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् ॥ ॥१०३॥**

---

अत्रैवान्यमपि अधिकरणन्यायं प्रदर्शयति— ॥ **गुणप्रधानयोरिति** ॥

द्वादशाध्यायद्वितीयपादे " **अङ्गगुणविरोधे च तादर्थ्यात्** " इत्यत्र प्रधानभूतसुत्याकालानुग्रहमुररीकृत्य अङ्गभूतदीक्षणीयाकालबाधः स्वीकृतः लक्ष्यते । तद्वत् अत्र क्रमः अध्ययनस्नानयोः यद्यनुगृह्येत तर्हि प्रधान-भूतमध्ययनमेव दृष्टार्थं बाध्येत । अतस्तदनुरोधेन **गुणभूतक्रम एव बाध नीय** इति; '**क्रमपदार्थविरोधे क्रमबाध एव**' इति न्ययात् ।

एतावता स्मृतेरत्यन्तबाधः इत्यभिहितम् । संप्रति बाध्यबाधक-भावस्य विरोधनिमित्तकतया यावन्मात्रं विरुध्यते तत् बाध्यतां, न स्मृत्यर्थः सर्वोऽपि इति निरूपयति— ॥ **स्नानोपलक्षितेति** ॥

"**अधीत्य स्नायात्**" इति स्नानशब्देन गुरुकुलवासनिवृत्तिमेव स्नानशब्दार्थैकदेशभूतां लक्षयित्वा तस्या एव धर्मजिज्ञासा(विचार)विरु-द्धत्वात् बाधः, न तु मध्वादिभक्षणस्य, तेषां विचारविरोधाभावात् न ते बाधितव्याः इति ।

एवं स्वाध्यायाध्ययनविधेः स्मृतेश्चार्थं ('**अधीत्यस्नायादिति**') व्याख्यायाधुनानुष्ठानप्रकारं विशदयति— ॥ **तस्मादिति** ॥

अतः अर्थज्ञानसंपादनार्थं विचारोपयोगितया गुरुकुले तिष्ठन् मधुमांसाद्यवर्जनेन स्मृत्यर्थमप्यनुगृह्णन् गुरुकुलवासनिवृत्तिनिवर्त्तविरोधा-

जज्ञासेताविरुद्धत्वात् धर्ममित्यवगम्यते ।
गुरुगेहनिवृत्त्यंशो यावच्च न समाप्यते ॥ ॥१०४॥
तावत् सकलवाचित्वात् न स्नानं पर्यवस्यति ।
गुरुगेहादनावृत्तः स्नातको न हि कथ्यते ॥ ॥१०५॥

---

भावात् धर्मविचारं कुर्यादित्यर्थः पर्यवसन्नः सर्वप्रमाणाविरोधीति सिद्धम् ॥

यद्येवं परित्यक्ताग्नीन्धनादि (समिदाधानादि) ब्रह्मचारिधर्मः स्नातक एव हि जातः । तथाच– **स्नातको नित्यं शुचिः सुगन्धिः स्नानशीलः**" इति प्रमाणप्राप्तं धर्मजिज्ञासाविरोधिदारसंग्रहणादिकमपि क्रियतामिति चेदाह– ॥ **गुरुगेहेति** ॥

सर्वेषां ब्रह्मचारिधर्माणां निवृत्तावेव हि **'स्नातक'** इति कथ्यते; न कतिपयाग्नीन्धनमधुमांसादिभक्षणनिवृत्तिमात्रेण । एवं च गुरुगेहनिवृत्तिः **यावन्न समाप्यते तावत्** अयं **स्नातको** न भवति इति **न स्नानं** अस्नानादि नियमनिवृत्तिः **पर्यवस्यती**तिति । ततश्चायमस्नातक एव भवति ॥

तथाच –

गुरुगेहनिवृत्त्याद्यनेकधर्मसमुदायवद्वाचित्वात् स्नातकशब्दस्य गुरुगेहे तिष्ठन्नयं माणवकः न स्नातकशब्दवाच्यो भवेत । मास्तु स्नातक-

**तत्परत्वविधानाच्च न तावद्दारसंग्रहः ।**
**व्याख्याय कीर्तिता चात्र स्नायाद्दिति पुनः स्मृतिः ॥१०६॥**

**समावर्तिष्ट मेत्यादि स्मृतेर्यद्यप्यनन्तरम् ।**
**विपरीतार्थमित्यस्मात् तद्वाक्यादपनीयते ॥१०७॥**

---

पदवाच्यत्वमस्य ; दारसंग्रहं कुतो न कुर्यात् ? उपात्तदारोऽपि गुरुगृहे तिष्ठन् विचारं कर्तुं प्रभवेत किल ? इति चेत् उच्यते– आचार्यकुलात् निष्क्रान्तस्य कृतमन्त्राद्युपेतस्नानस्य स्नानात्परो हि स्मर्यते विवाहः (दारसंग्रहः) **'स्नातकः सदृशीं भार्यां विन्देत' 'स्नात्वा भार्यां अधिगच्छेत्'** इति । अतः अकृतस्नानस्य न दारसंग्रहः इति न पूर्वोक्तशंकायाः मनागप्यवकाशः इति ।

अत्र भाष्यं **' अधीत्य स्नायात् ' गुरुकुलान्मा समावर्तिष्ट इत्यदृष्टार्थतापरिहारायैव** इति परिदृश्यते यथाश्रुतं चेदमसंगतमिव भाति । अतः तद्भित्वत व्याचष्टे– ॥ **व्याख्यायेति** ॥

**'पूर्वं हि न चेदं स्नानमदृष्टार्थं विधीयते'** इत्यादिभाष्येण अस्नानादिनियमपर्यवसानं यद् व्याख्यानं कृत तदस्याः एव स्मृतेरिति निगमनं कृतं **'अधीत्यस्नायात् '** इति ॥

**'गुरुकुलान्मास समावर्तिष्ट'**इति भाष्यं तु विपरीतार्थबोधकत्वेन पूर्व भाष्येणासंगतत्वात ततोऽपनीय व्याख्याति– ॥**समावर्तिष्टेति**॥

यद्यपि **'गुरुकुला'**दित्यादिभाष्यं **''अधीत्ये''**त्यादिस्मृतेरनन्तरं उपलभ्यते ; तथापि असंगतार्थकत्वात् पूर्ववाक्यात् भिद्यते इत्यर्थः ॥१०५॥

अथ शब्देन यो बोधः पुरस्तादुपवर्णितः ।
तन्मात्रस्यैव बाधोऽत्र दृष्टार्थत्वात् प्रदर्शितः ॥ ॥१०८॥

स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।
प्रतिषेधन्नदृष्टार्थं सूत्रकारो न शोभते ॥ ॥ १०९ ॥

---

अपनीतं कथं व्याख्येयमित्याह— ॥ **अथ शब्देनेति** ॥

पूर्वं गुरुकुलवासनिवृत्तिबोधार्थकः **अथ शब्दः** इति '**गुरुकुलात्' मासमावर्तिष्ट** । '**कथं नु वेदवाक्यानि विचारयेत्**' इत्यादिभाष्येण व्याख्यातम् । कारणं तु तत्र नैवावोचि । तदत्र प्रदर्श्यते । अथशब्दश्चानन्तर्यार्थत्वे अदृष्टार्थत्वः स्यात् । अतः तत्परित्यज्य '**गुरुकुलान्मासमावर्तिष्ट** । इत्यर्थकः ; इति दृष्टार्थत्वमेव तत्रकारणमिति । '**अधीत्य स्नायात्**' इति स्मृतेः न कृत्स्नार्थोऽपि बाध्यते, किं तु गुरुकुलवासनिवृत्तिरूपार्थ एव ; तत्कारणं च दृष्टार्थत्वमिति भावः ॥१०८॥

विचाराविरुद्धानि मधुभक्षणादिनि बाधमानः सूत्रकारः अदृष्टार्थोपदेशकः स्यात । अतः स्मृत्यर्थेषु गुरुकुलवासनिवृत्तिमात्रं बाधते इत्याह— ॥ **स्मृतिप्राप्तेति** ॥

इदानीं अध्ययनानन्तरं स्मृतिप्राप्तं '**अधीत्य स्नायात्**' इति स्मृतिप्रमाणेनावगतं मधुमांसाद्यवर्जनरूपस्नानपदार्थं धर्मजिज्ञासा प्रत्यविरुद्धं प्रतिषेधन् **जैमिनिः** अदृष्टार्थत्वायैव प्रतिषेधतीति वक्तव्यम् । न चैतद्युक्तमिव ; एकदेशार्थपरित्यागेऽपि दृष्टार्थत्वस्वीकरणस्यैव युक्तत्वात् स्वाध्यायविधेः अर्थज्ञानार्थत्वेन अध्ययनविधायकत्वात् ॥ १०९ ॥

**निवृत्त्य गुरुगेहाच्च जिज्ञासार्थः पुनर्भवेत् ।**
**प्रवेशः सोऽप्यदृष्टार्थः इति नैवेह सूत्रितः ॥ ॥११०॥**

---

ननु अध्ययनविधिस्नानस्मृत्योरुभयोरप्यविरोधाय, अध्ययनानन्तरं स्मृत्यनुरोधेन स्नात्वा, अर्थज्ञानार्थं च पुनः गुरुकुलं प्रविश्य विचार्यताम्—नेदानीं कस्यापि प्रमाणस्य बाधो भविता; इति चेत् आह— ॥ **निवृत्त्येति** ॥

स्मृत्यनुरोधेन गुरुकुलात् निवृत्तः माणवकः विचारार्थं पुनः गुरुकुलं प्रविशेत ; इत्युक्तौ इयं निवृत्तिः न किञ्चित् दृष्टप्रयोजनवतीति अदृष्टमेव फलं परिकल्पनीयं भवेत् । इदं च न युक्तम् ।

यद्यपीदं आक्षेपकरणं पूर्वमासीत् ; तच्चान्यथा परिहृतमभूत् । इदानीं तु परिह्रियते— अदृष्टार्थतापत्तेरिति । अत्रादृष्टार्थत्वाभिधानं उभयविधेयेति भाव्यम् । कथं ? गुरुकुले स्थितस्य माणवकस्य अर्थज्ञानालाभात् अकृतार्थस्य गुरुकुलात् निवृत्त्यभिधानं अदृष्टार्थं ; एवं पुनःप्रवेशाभिधानं चादृष्टार्थमेवेति महद्धि गौरवम् । न च प्रवेशस्य कथमदृष्टार्थत्वं भवेत् तस्य विचाररूपदृष्टप्रयोजनसद्भावादिति वाच्यम् । अत्रेदमभिप्रेतम् , निर्गत्य प्रवेशो ह्यदृष्टार्थः : प्रकारान्तरेणापि ज्ञानलाभसंभवात् । नियमस्वीकारे अदृष्टार्थत्वमपरिहार्थं तस्य प्रवेशविधायकप्रमाणाभावाच्च नियमविधिस्वीकारासंभवश्च, अध्ययनविधिविरोधश्चेत्यादि दूषणजातमपरिहार्यम् ॥ ११० ॥

निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।
स्मर्यते तस्य नार्थः स्यात् अकृतार्थस्य निर्गमे ॥ १११ ॥

अथशब्दप्रसिद्ध्यैव वेदग्रहणहेतुता ।
अनन्तर्योपदेशित्वादतश्शब्देन किं पुनः ॥ ॥ ११२ ॥

---

अथ **'अधीत्य स्नायात्'** इति स्नानस्य वाचनिकत्वात् वाचनिकानां प्रयाजादीनां अदृष्टार्थत्वस्वीकारवत् स्नानस्याप्यदृष्टत्वाङ्गीकरणं न दोषायेति कथं दोषोद्भावनमिति चेदाह— ॥ **निर्गमेति** ॥

न हि वाचनिकत्वमात्रेण अदृष्टार्थत्वस्वीकरणमिति नियमः संभवति; अवघातोपभृताज्यग्रहणादेः अदृष्टार्थतापत्तेः । किं तर्हि ? कस्यापि दृष्टप्रयोजनस्यालाभे हि अदृष्टार्थतास्वीकारः । प्रकृते चायं निर्गमः नादृष्टार्थः गुरुगेहात् , अयं तु कृतार्थस्य आश्रमान्तरनिवेशाय गुरुकुलान्निर्गमः दृष्टार्थः स्मर्यते । अतः अकृतार्थस्य निर्गमस्वीकारो अनर्थकः । पूर्वोक्तरीत्या स्वीकारे च न कोऽपि दोषः इति ॥ १११ ॥

एतावत्पर्यंतं अथशब्दार्थं निरूप्य संप्रति सूत्रघटकीभूतमतश्शब्दं व्याख्यातुं **'अतश्शब्दोवृत्तस्यापदेशको हेत्वर्थः'** इति भाष्यमाक्षिपति ॥ **अथ शब्देति** ॥

अध्ययनानन्तर्यं दृष्टार्थमिति पूर्व **'आनन्तर्योपदेशेन तद्दृष्टार्थं तयापि च'** इति प्रत्यपादि । ततश्च आनन्तर्योपदेशतद्दृष्टार्थत्वाभ्यां वेदस्य (अध्ययनस्य) जिज्ञासां प्रति हेतुत्वं सिद्धमेव, अहेत्वानन्तर्योपदेशो हि अदृष्टार्थो भवेत । अतः अतश्शब्दः व्यर्थः इत्याक्षेपः ॥ ११२ ॥

योग्यत्वमथशब्देन यद्यपि प्रतिपादितम् ।
तदेव हेतुरेति नातश्शब्दाद्विना भवेत् ॥ ॥ ११३ ॥

लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते ।
जिज्ञासायाश्च हेतुत्वे फलार्थित्वादि संभवेत् ॥ ११४ ॥

---

एवमाक्षिप्ते उभयोरपि अथातश्शब्दयोः विविक्तार्थप्रदर्शनम कुर्वन् परिहारमाह श्लोकद्वयेन ॥ **योग्यत्वमथेति** ॥

अथशब्देन आनन्तर्योपदेशात् वेदाध्ययनेन धर्मजिज्ञासायां (विचारे) अयं योग्यः इति परं प्रदर्शितं भवेत् ; विचारहेतुत्वं च अध्ययनस्य अतश्शब्देन हेतुवाचकेन विना न भवेत् । अतः अतश्शब्दः आवश्यक एव । 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिरेव इतिकर्तव्यताभूतधर्मविचारस्योत्पादकः अनुष्ठापकश्च भवति । तत्रोत्पत्तौ अध्ययनस्य हेतुत्वं अथशब्देनोक्तम ; प्रदर्शितं चैतत् भाष्ये एव 'तस्मिन् हि सति सा अवकल्पते' इति । अध्ययनविधेरेव धर्मविचारप्रयोजकत्वरूपानुष्ठापकत्वं तु अतश्शब्दे स्थित एव लभ्येतेति ।

ननु अकारणादानन्तर्यस्यायुक्तत्वात् कारणत्वेऽत्र थिनेऽपि आनन्तर्यादेव कारणत्वं लभ्यत एवेति व्यर्थ एवातश्शब्द इति चेत , ब्रूमः आनन्तर्यकथनमात्रेण हेतुत्वमपि लभ्यते ; इति नायं नियमः 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यादौ आनन्तर्यकथनेऽपि हेतुत्वाऽभावात् । लोकेऽपि भुक्त्वा व्रजतीत्यादौ भोजनादेर्गमनहेतुत्वाभावात् । अध्य

अतश्शब्दं गृहीतं वा तत्राध्ययनमाश्रितम् ।

---

मनवान् धर्मजिज्ञासायामधिकारी इत्येतावन्मात्रमथशब्देन लभ्येत । फलकामनादिकं च विचारहेतुः इति स्यात् । कामश्रुतयो हि ज्ञानापेक्षावत्यः ज्ञानसिद्ध्यर्थं विचारं ज्ञानसाधनमाक्षिपेयुरिति संभाव्येत । तथासति कामनावतां सर्वेषां स्वर्गादिसाधनेषु कर्मस्वधिकारः स्यात् इति शूद्रादीनामपि कर्माधिकारापत्तिः इति महाननर्थः प्रसज्येत । तद्वारणार्थं अतश्शब्दः आवश्यक एवेति ।

इदमत्राकूतम् - अतश्शब्दसत्वे हि सूत्रस्यायमर्थः— वेदाध्ययनानन्तरं अत एव अधीतवेदत्वात् कारणात् 'धर्मजिज्ञासा कर्तव्या इति । 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिर्हि दृष्टे संभवति इतिन्यायात् अर्थज्ञानार्थं अध्ययनं विधदत् इतिकर्तव्यताभूतविचारमन्तरा अर्थज्ञानात्मभाव्यासंभवात् विचारमाक्षिपति । अध्ययनविधिश्च उपनीताधिकारिकः त्रयाणामेव वर्णानां ब्राह्मणक्षत्रियविशां अध्ययनं इतिकर्तव्यताभूतं च विचारं च विधत्ते । तेषु च विद्वत्सु अधिकारिषु लब्धेषु कामश्रुतयः नान्यान् अविदुषः स्वीकृत्य तेषां विद्यां प्रयुंजीरन्निति न शूद्रादीनामधिकारप्रसक्तिः । अतः सफलः अतश्शब्दः इति सिद्धम् ॥ ११३-११४ ॥

अन्यं परिहारं प्रदर्शयति—

अथशब्दः अध्ययनानन्तर्यं वदतीति यदुक्तं तत् अतश्शब्दस्य हेतुवाचककस्य सद्भावादेवेति भाव्यम् । अन्यथा केवलाथशब्दस्य मङ्ग-

**हेतावकथ्यमाने हि मङ्गलाद्यप्यसौ वदेत् ॥ ॥ ११५ ॥**

**स्नानबाधस्य वा हेतुः अत इत्युच्यते पुनः ।**
**योग्यस्याधीतवेदत्वात् नावस्थार्तु हि लभ्यते ॥ ११६ ॥**

---

लाद्यर्थकत्वमित्यपि स्यात् । स्थिते त्वतश्शब्दे कारणानन्तर्यं कार्यभूतजिज्ञासाया इति आनन्तर्यार्थ एवाथशब्दः इति वा अतश्शब्दार्थनिर्णयस्य अथशब्दार्थनिर्णयाधीनत्वाभावात् नान्योन्याश्रयदोषप्रसक्तिः । ॥ ११५ ॥

व्याख्यानान्तरमाह– ॥ 'स्नानबाधस्ये'ति ॥

यद्यप्यथशब्देनैवानन्तर्यवाचकेन अकारणादानन्तर्यस्यायुक्तत्वात धर्मजिज्ञासां प्रति अध्ययनं हेतुरिति लभ्येत । तथाऽपि स्नानबाधहेतुत्वं अतश्शब्द एव ब्रवीति । अनन्तरमेव स्मृत्यर्थस्नानबाधेन विचारः कर्तव्यः इत्यभिधातुं अतश्शब्दः इति । अधीतवेदो हि माणवकः कर्मानुष्ठानयोग्यो जातः विद्वत्तामन्तरा अनुष्ठानासम्भवात् ज्ञानार्थं विचारे यतेत इति, अन्यथा कर्मानुष्ठानाभावे प्रत्यवेयात, प्रयोगविधिप्राप्तयौग पद्यपर्यालोचनायां अध्ययनस्यैव स्नानबाधं प्रति हेतुत्व अयमतश्शब्दः प्राह– 'अध्ययनानन्तरं न स्नानं कर्तव्यम् ; तदाक्षिप्तविचारकरणविरोधा इति ॥ ११६ ॥

**सन् वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता ।**
**ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते ॥ ११७ ॥**

**इषेस्तु कर्म बाह्यः स्यात् धर्मः सा वाऽथवा द्वयम् ।**
**समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः ॥ ११८ ॥**

**एवं विषयनानात्वात् न काचित् पुनरुक्तता ।**

---

एवं अथातश्शब्दौ व्याख्याय भाष्ये **'धर्मजिज्ञासा'** इति सूत्रस्थपदव्याख्यानावसरे **'धर्मं जिज्ञासितुं इच्छेत्'** इत्युक्तम् । तत्र सनः, तुमुनः, इषेः, लिङश्च पौनरुक्त्यं समानार्थकत्वात् इति शङ्कां परिहरन् व्याख्याति— ॥ **सन्वाच्येच्छान्तरमिति** ॥

' **जिज्ञासितुं** ' इत्यत्र सन्प्रत्येन इच्छा या बोध्यते तस्यां **आन्तरं** समानपदोपात्तं ( प्रकृत्युपात्तं) **ज्ञानं कर्म** ( विषयः ) ज्ञानविषयिणी (ज्ञान कर्मिका) इच्छा इत्यर्थः । नान्यः **'इच्छेत्'** इत्यत्र इषिधातुना या इच्छा बोध्यते सा पूर्वं सन्प्रत्ययोपात्तेच्छापेक्षया भिन्ना; तस्यां च सन्वाच्येच्छायाः कर्मत्वं, अथवा पदान्तरोपात्त (धर्म) धर्मस्य वा कर्मत्वं उत धर्मज्ञानेच्छायोरुभयोर्वा कर्मत्वम् । एवं च कर्मभेदात् इच्छाभेदात् न सन्धात्वोः पौनरुक्त्यशङ्का युज्यते । तुमुन्-प्रत्ययेन तु समानकर्तृकत्वं बोध्यते । लिङा च विधिः प्रत्याय्यते । एवं चतुर्णायपि विभिन्नार्थकत्वात् न पुनरुक्तत्वदोषशङ्कावकाश इति भाष्यकाराणामाशयः ॥

सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र दर्शिता ॥ ११९ ॥

---

ननु सूत्रकारैः **'धर्मजिज्ञासा'** इत्यत्र एकैव किल ज्ञानेच्छा सूत्रिता- तदनुसृत्य भाष्यकारैरपि **'धर्मजिज्ञासेत'** इति किल व्याख्यातव्यमासीत; तद्विहाय **'धर्मजिज्ञासितुं इच्छेत्'** इति असूत्रितद्वितीयेच्छोपादानं कथं कृतमिति चेत्— ॥ **सूत्रितेच्छेति** ॥

सूत्रकारः यथा शिष्यस्य बालस्य प्रेषणायामयोग्यस्य धर्मज्ञाने प्रवृत्तिसिध्यर्थं इच्छां प्रवृत्तिकारणीभूतां उत्पादयति; धर्मजिज्ञासेति वदन् तया भाष्यकारोऽपि सूत्रकारगतिमेवानुसरन् सूत्रितेच्छा कथं संपद्यतेति मन्वानः असूत्रितामपि द्वितीयेच्छां **'इच्छेदि'**ति निर्दिदेश। इच्छो- पदेशोऽयं कर्तव्योपदेशपर एव; कर्तव्यपूर्वभावित्वादिच्छायाः।

न च जिज्ञासा इच्छैवेति तद्विषयकेच्छान्तरस्यासंभवात् कथं इच्छाविषयकेच्छान्तरमाह भाष्यकारः इति वाच्यम्। इच्छाविषयकेच्छाया अपि संभवात्। लोके कश्चन पुरुषः क्षुधालुः (बुभुक्षमाणः) भुङ्क्ते; पार्श्वस्थः कश्चन मन्दाग्निः; अत एव अबुभुक्षुः बुभुक्षामपेक्षते। अत एव च वैद्यात् बुभुक्षार्थं औषधं स्वीकरोतीति च प्रसिद्धमेव। अतश्च बुभुक्षाविषयकेच्छावत् जिज्ञासाविषयकेच्छाया अपि संभवात् न भाष्यस्य काप्यनुपपत्तिः ॥ ११७—११९ ॥

**प्रकृत्या विकृतिर्यस्मात् चतुर्थ्यंता समस्यते ।**
**तादर्थ्ये यूपदार्वादौ तेनास्मिन्नसमासता ॥ १२० ॥**

**सा हि तस्येत्यनेनोक्तः धर्मस्येत्येष विग्रहः ।**
**धर्मायेति तु तादर्थ्ये षष्ठी वृत्तौ कीर्त्यते ॥ १२१ ॥**

---

अथातश्शब्दौ विस्तरेण व्याख्याय '**धर्मजिज्ञासा**'शब्दं व्याख्यन् भाष्यकारः '**धर्मजिज्ञासा**'शब्दं विगृह्णाति– **धर्माय जिज्ञासा- धर्मजिज्ञासा**' इति तदाक्षिपन्नाह– ॥ **प्रकृत्येति** ॥

पूर्वोक्तभाष्यं हि '**धर्मजिज्ञासापदे**' विग्रहप्रदर्शनपरं भाति । इदं च न युज्यते । तादर्थ्ये हि चतुर्थीसमासः यत्र भवति तत्र प्रकृतिविकृतिभावोप्यावश्यकः । विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते- यथा '**यूपाय दारु**' इत्यादौ '**प्रकृतिविकृतिग्रहणं कर्तव्यम्**'। इति हि वार्तिककारेणोक्तम् । न चेदं वार्तिकं सामर्थ्यप्रदर्शनपरम् । **समर्थःपदविधिः** इत्यनेन सूत्रेणैव सिद्धेः वार्तिकस्य वैय्यर्थात । न च धर्मः जिज्ञसा विकारः । अतः अप्रकृतिविकारयोस्तु न समासः । यथा '**रन्धनाय स्थाली' अवहननाय उलूखलम्**' इति । तेनात्र न समासः घटते इति ( आक्षेपः ) ॥ ११८ ॥

एवमाक्षिप्य समाधानं प्रदर्शयते– ॥ **सा हि तस्येति** ॥

नात्र चतुर्थीसमासः इष्यते, अपि तु अश्वघासादिशब्दवत् षष्ठीसमास एव । कथं ? उत्तरत्र भाष्यकार एव '**सा हि तस्य ज्ञातु-**

प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः ।
सामान्यस्य विवक्षायां चतुर्थी कथ्यते कथम् ॥ १२२ ॥

संबन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।
विशेषनिष्ठता तस्य भाष्यकारेण वर्ण्यते ॥ १२३ ॥

---

मिच्छा' इति स्वयमेव हि विगृह्णाति । 'धर्माये'ति भाष्यं तु षष्ठ्यन्त्य-र्थविशेषपरमेवेति न भाष्यानुपपत्तिः । एवमेव हि 'ब्रह्मजिज्ञासा' शब्दे ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति तत्तद्भाष्यकारैः प्रदर्शितम् ।

ननु तादर्थ्यसंबन्धविशेषविवक्षायां हि 'तादर्थ्ये चतुर्थ्युपसंख्यानम्' इति चतुर्थ्येव हि प्राप्नुयात् न षष्ठी इत्याक्षिपति— ॥ प्राप्नोत्यत्रेति ॥ संबन्धसामान्यविवक्षायामेव हि षष्ठी अनुशिष्टा विशेषविवक्षायां (तादर्थ्य रूपायां) चतुर्थ्येव भवेदिति ॥ १२२ ॥

तत्र समाधत्ते— ॥ संबन्धमात्रेति ॥

सूत्रकारैः संबन्धसामान्यविवक्षयैव 'धर्मजिज्ञासा' इति षष्ठीसमासः प्रयुक्तः । 'निर्विशेषं न सामान्यम्' इति न्यायं मन्वानः भाष्यकारस्तु विशेषे तादर्थ्यरूपे पर्यवसानं प्रदर्शयति । तादर्थ्यं तु न विग्रहे विवक्षितं अपि तु पर्यवसितकथनमिति न दोषः ॥ १२३ ॥

साधनाभासता चात्र पूर्वपक्षार्थगोचरः ।
अन्यसाधनमन्यस्य साधनाभास उच्यते ॥ १२४ ॥

क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।

---

भाष्यकारो हि उत्तरत्र वक्ष्यमाणस्य समस्तस्यार्थस्य प्रतिज्ञासूत्रक्रियमाणप्रतिज्ञायामन्तर्भावमभिप्रयन्नाह– '**स कथं जिज्ञासितव्यः ? को धर्मः ? कथं लक्षणः ? कान्यस्य साधनानि ? कान्यस्य साधनाभासानि ? किंपरश्च ?** इति । साधनाभासपदं व्याख्याति– ॥ **साधनाभासता चेति** ॥

अत्र साधनाभासपदं तत्तदधिकरणपूर्वपक्षाभिप्रेतमर्थ बोधयति ; न त्वभासं किंचित् साधनं वर्तते ; तदस्मिन् शास्त्रे निरूप्यते इति । पूर्वपक्षाभिप्रेतार्थस्य कथं साधनाभासत्वं ? इति चेत् , अन्यस्य फलस्य उद्देश्यस्य वा साधनं अन्योद्देश्यसाधनत्वेन वर्ण्यते तत्तदधिकरणपूर्वपक्षेषु । तस्मात् तन्निरूपणस्य साधनाभासत्वमिति ॥ १२४ ॥
तमिममुदाहरणेन स्पष्टयति– ॥ **क्रत्वर्थं इति** ॥

यस्य '**पर्णमयी जुहूर्भवति**' इत्यादिवाक्यैः विधीयमाणपर्णतादेः क्रत्वर्थस्य पुरुषार्थत्वेन वर्णनं एवं '**गोदोहनेन पशुकामस्य प्रणयेत्**' इत्यादिवाक्यैः विहितगोदोहनादेः क्रत्वर्थतया वर्णनं च साधनाभासः । इदं च तत्तदधिकरणेषु स्पष्टम ।

शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२५ ॥

---

भाष्यकारेण 'को धर्मः ? कथं लक्षणः ? इति चोदनासूत्रेण व्याख्यातमित्युक्त्वा अवशिष्टं 'शेषलक्षणेन व्याख्यातं' इत्युक्तम् । इदं च न युक्तम् । शेषलक्षणशब्दो हि 'अथातः' शेषलक्षणमित्यारभ्य अङ्गत्व-निरूपणपरे तृतीयाध्याये प्रसिद्धः परिदृश्यते । तत्र च न पूर्वोक्तार्थनिरूपण वर्तते । अतः भाष्यमनुपपन्नमिति शङ्कायामाह— ॥ शेषलक्षणेति ॥

पूर्वोक्तभाष्ये शेषशब्दः अवशिष्टार्थकः ; न तु अङ्गत्वापरपर्यायशेष-त्ववाचकः, तथा च अवशिष्टसकलाध्यायवाचकः ( कृत्स्नशास्त्रवाचकः ) इत्यर्थः पर्यवस्यति । तथा च, चोदनासूत्रव्यतिरिक्तेन द्वादशाध्यायपरिमित-शास्त्रेणेति बोध्यम् । तृतीयाध्यायमात्रपरत्वे शेषलक्षणशब्दे तत्पुरुष-समाश्रयणं स्यात् ; तच्च लक्षणास्वीकारप्रसंङ्गादयुक्तम् । शेषं च तत् लक्षणं चेति कर्मधारयः कृत्स्नशास्त्रपरत्वे भवेत । निषादस्थपत्य-धिकरणन्यायेन इत्थमेव युक्तमिति च बोध्यम् । शास्त्राभिप्रायेणैकवचन-मपि नानुपपन्नम् ।

भाष्यकारेण शबरस्वामिना शास्त्रारंभाक्षेपावसरे एवमभिहितं— 'धर्मः प्रसिद्धो वा स्यात् अप्रसिद्धो वा स्यात् प्रसिद्धः न जिज्ञासितव्यः, अथाप्रसिद्धो न तराम् ।' इति ।

भाष्यस्यास्य अयमाशयः— विचारात्मकस्यास्य शास्त्रस्य (मीमांसायाः ) प्रयोजनं— धर्मज्ञानम् , इति किल सूत्रकाराणामाशयः वक्तव्यः भवति । शास्त्रस्यास्य प्रयोजनेन सह संबन्धश्च प्रतिपाद्यप्रतिपादक एव

**प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात्तु नेष्यते ।**
**अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत् ॥ १२६ ॥**

---

भवेत् । स एव शास्त्रावतारहेतुभूतानुबन्धिचतुष्टयघटकीभूतसंबन्धः इति च वक्तव्यम । स्पष्टं चेदं—

**शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।**
**तदुक्त्यन्तर्गतस्तस्मात् भिन्नो नोक्तः प्रयोजनात् ॥ (१७)**

इति **आरंभवार्तिके** पूर्वम् । इदानीं तत्राक्षेपः— एवं शास्त्रावतारहेतुभूतः पूर्वोक्तसंबन्धः न घटते ; अजिज्ञास्यत्वात धर्मस्य । तत्र च कारणं प्रसिद्धत्वाप्रसिद्धत्वे एव । प्रसिद्धत्वे प्रयोजनासंभवादजिज्ञास्यता स्पष्टैव । अप्रसिद्धत्वे नतरां जिज्ञास्यो भवेत् इति । तत्र '**अप्रसिद्धो न तरां**' इति भाष्ये अभाववाचकत्वान्नञः अभावे चातिशयस्य कस्याप्यसंभवात नञोऽनन्तरं तरप्-प्रत्ययोऽतिशयवाचकः कथं घटेत इति तरप्-प्रत्ययस्यासाधुतैवेति शंकते— ॥ **प्रसिद्धेति** ॥

सत्यं यद्यप्यभावे न कश्चनातिशयोऽस्ति, तथाऽपि '**न तरां जिज्ञास्यः**' इति निषेधे, अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् (निषे-

**जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयापि च ।**
**असन्दिग्धो ह्यजिज्ञास्यः यो वा स्यान्न विप्रयोजनः ॥ १२७ ॥**

---

ध्याधीनत्वात् निषेधस्य ) निषेध्यातिशये निषेधेष्वप्यतिशयो भवत्येव । प्रकृते निषेध्यं जिज्ञास्यत्वम् । जिज्ञासाशब्दे च प्रकृत्या ज्ञानं प्रत्ययेन सना इच्छा अभिधीयते । तत्र प्रसिद्धे ज्ञानं भवितुमर्हति । इच्छामात्रं तु न भवति । अप्रसिद्धत्वे तु ज्ञानं इच्छा चेत्येतदुभयमपि न भवति; इति अप्रसिद्धत्वकल्पे उभयाभावापत्तिरूपातिशयः तरपा द्योत्यते; इति न शङ्काभाष्ये पूर्वोक्ताकाप्यनुपपत्तिः । अशक्यत्वात् नेष्यते न ज्ञायते चेत्यर्थः ॥ १२६ ॥

एवमाक्षेपभाष्यं व्याख्याय तत्परिहारभाष्यम् “ **धर्मं प्रति विप्रतिपन्नाः बहुविदः, केचिदन्यं धर्ममाहुः, केचिदन्यं,** ” इत्यारभ्य ‘**स हि निश्रेयसेन पुरुषं संयुनक्ति इति**’ इत्यन्तं भाष्यं तद्व्याचष्टे– ॥ **जिज्ञास्यः इति** ॥

अत्र धर्मस्य जिज्ञास्यत्वे कारणद्वयमुच्यते– संदेहः, प्रयोजनवत्त्वं चेति । मतिमन्तो हि पुरुषाः संदिग्धं, सप्रयोजनं च निर्णेतुं प्रयतन्ते । धर्मश्च तादृशः, तस्मादयमपि जिज्ञास्य एवेति पूर्वोक्ताक्षेपस्य भाष्यकारैस्समाधीयते । अविचारे तु कारणं असंदिग्धत्वं अथवा निष्प्रयोजनत्वम् । प्रकृते चोभयस्यापि विचारकारणस्य सत्त्वात् किं धर्मविचारः सुतरां करणीय एव भवेत् ॥ १२७ ॥

**स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते ।**
**पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः ॥ ॥ १२८ ॥**

**स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।**
**मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२९ ॥**

---

कीदृशः संशयः धर्मे- तन्मूलभूता विप्रतिपत्तिः कीदृशी इति चेदाह- ॥ **स्वरूपादिष्विति** ॥

धर्मस्वरूपादिषु प्रथमतः प्रमाणस्वरूपाभ्यां विप्रतिपत्तिः क्रियते। धर्मे प्रमाणं किम्? धर्मस्य स्वरूपं च कीदृशम्? इति । वादिविप्रतिपत्तिश्च संशये निमित्तमिति दार्शनिकेषु प्रसिद्धम्। अतश्च किं प्रत्यक्षं धर्मे प्रमाणं? (योगिप्रत्यक्षं) उतचोदना? (वेदः) इति प्रमाणसंशयः। तदनु च किं यागादिर्धर्मः अथवा चैत्यवन्दनादिः? तदत्र आद्यस्य प्रथमपादे निर्णयः क्रियते। प्रत्यक्षादीनां धर्मे प्रामाण्यनिराकरणेन चोदनाप्रमाणको धर्मः। एवं साधिते चोदनागम्याग्निहोत्रादेरेव धर्मत्वं न चैत्यवन्दनादेरिति धर्मस्वरूपमपि शिक्षितं भवति । अत्र **'पादेनाद्यस्य निर्णयः'** इति निरपेक्षप्रामाण्याभिप्रायेणोक्तम्। चोदनैव हि निरपेक्षप्रमाणम्। अनन्तरत्रिपाद्यां तु चोदनैकवाक्यतया तन्मूलकत्वेन अर्थवादस्मृत्यादीनां प्रामाण्यं निरूप्यते। अतस्समस्तोऽपि प्रथमाध्यायः प्रमाणाध्याय एव ॥ १२८ ॥

**एवं आद्यविप्रतिपत्तिं प्रमाणविषयिणीं तत्र निर्णयं चोक्त्वा द्वितीयां विप्रतिपत्तिं तत्र निर्णयप्रकारं उत्तरश्लोकद्वयेन प्रदर्शयति । प्रथमपादप्रयोजनं प्रदर्श्य उपरितनशास्त्रस्य प्रयोजनं प्राह- ॥ स्थिते इति ॥**

आद्ये अध्याये प्रमाणत्वे विध्यर्थवादमन्त्रनामात्मना विभक्तस्य वेदस्य सामान्यतः सिद्धे, अनन्तरं द्वितीयाद्यध्यायेषु अर्थभेदाभेदादिसंशयः शब्दान्त

केचिदाहुरसावर्थः केचिन्नासवयं त्विति ।
तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते ॥  ॥ १३० ॥

इति भट्टकुमारिलकृतौ श्लोकवार्तिके
प्रतिज्ञासूत्रं समाप्तम्

---

रादिप्रमाणनिरूपणमुखेन परिह्रियते । संशयस्तावत् अज्ञानामपि न संभवति; एवं एकमार्गदृशामपि अपि तु बहुविदामेवेत्युक्त 'मतिर्बहुविदां पुम्साम्' इति । वाक्यार्थनिर्णयज्ञानं प्रति संशयस्य प्रतिबन्धकत्वात् तन्निर्णयार्थं उत्तरशास्त्रभागप्रारंभः क्रियते । केचिदित्यादिना विप्रतिपत्तिं प्रदर्शयति । असावेवार्थः अस्य वाक्यस्येति केचित् ; अन्ये केचित् नासौ-अपितथममेवेति । एवं विप्रतिपत्तौ जातायां तत्परिहारपूर्वकं तत्तद्वाक्यार्थ-निर्णयार्थं उत्तरं शास्त्रं प्रणेतव्यमिति विचारात्मकमीमांसाशास्त्रारंभः नितरामारंभणीय एवेति सिध्यति ॥

इति मीमांसकशिरोमणिना, मीमांसवाचस्पतिना, 'पण्डितरत्नेन'
मीमांसचूडामणिप्राध्यापकेन उभयवेदान्तकेसरिणा
ई. श. वरदाचार्येण
विदुषा विरचिते
श्लोकवार्तिकभूषणे
प्रतिज्ञासूत्रम् समाप्तम्

श्रीः

श्रीलक्ष्मीहयग्रीवाय नमः

# कुमारिलभट्टविरचितम्

# श्लोकवार्तिकम्

## श्री वरदाचार्यविरचित-

## भूषणव्याख्यासमलंकृतम्

शास्त्रारम्भसूत्रम्

## ॥ चोदनालक्षणोऽर्थो धर्मः ॥१-१-२॥

धर्मे सामान्यतःसिद्धे प्रमाणं चोदनोच्यते ।

---

पूर्वं शास्त्रारंभं प्रतिज्ञाय संप्रति शास्त्रमारभते **'चोदनालक्षणोऽर्थो धर्मः'** इति। इदं च शास्त्रारंभसूत्रम्। सूत्रे चास्मिन् एवमुद्देश्य-विधेयभावाङ्गीकारेण वाक्यार्थः स्वीकर्तव्यो भवति- **'यो धर्मः स चोदनालक्षण'** इति। तथा च धर्मोद्देशेन चोदनालक्षणत्वं विधीयते। प्रसिद्धत्वाच्च धर्मस्य ( ज्ञातत्वात ) उद्देश्यता घटते। स च चोदना प्रमाणक इति चोदनागम्यत्वस्य विधेयत्वं युज्यते।

ननु नेदं घटते तथाहि- धर्मः प्रमाणान्तरगम्यो वा उत नावगम्यः ? नान्त्यः, अनुवादानर्हत्वात् तर्हि तस्योद्देश्यत्वायोगात् । नाद्यः चोदनैव प्रमाणमिति एतत्सूत्राविवक्षितार्थासिद्धेः । न च लोकतः सामान्यतः धर्मस्य सिद्धौ चोदनाप्रमाणकः सः इति सूत्रे चास्मिन् विधीयते । अतो नानुपपत्तिः इति वाच्यम् । मूलाभावेन एतादृशोक्तेरयोगात् । न हि तावदास्त्रीबाललोकप्रसिद्धिर्मूलं भवेत् । न च प्रत्यक्षादिव्यतिरिक्ता, काचन लोकप्रसिद्धिर्नाम वर्तते । **'न चैतानि परित्यज्य पृथग्लोके प्रमाणता'** इति हि वक्ष्यति । अस्तु वा सा प्रसिद्धिः तथापि तस्याः विरुद्धानेकप्रकारत्वात् न तया धर्मसिद्धिर्भवति । नाप्यर्थापत्तिः प्रमाणम्; कर्मशक्तेः वैचित्र्यं स्वाभाविकं यथा, तथा जगद्वैचित्र्यस्यापि स्वाभाविकत्वेनाप्युपपत्तेः, तदर्थं धर्मकल्पनायोगात् । वार्तिककार एव हि उत्तरत्र वक्ष्यति- **'स्यादेवं यदि शक्येत स्वाभाविकनिराकृतिः'** इति । अस्तु वा प्रमाणान्तरतः सामान्यतः धर्मस्य सिद्धिः । तथात्वे चोदनायाः प्रमाण्यं न घटेत ; तदा तस्याः अनुवादकत्वापत्तेः । सूत्रकार एवेदं स्पष्टयिष्यति- **'अर्थेऽनुपलब्धे तत् प्रमाणं ।'** इति ।

अथ स्यात् **'योऽयं निष्प्रमाणकत्व-प्रत्यक्षादिप्रमाणकत्व-चोदनाप्रमाणकत्ववादीनां'** विप्रतिपत्तिविशेषाणां विषयभूतः साधारणात्मा धर्मपदार्थः, सः चोदनाप्रमाणकः, चोदनैव तत्र प्रमाणं, नान्यत , चोदना तत्र प्रमाणमेव नाप्रमाणमिति धर्मोद्देशेन प्रमाणविधिरिति वाक्यार्थस्वीकारात् न कोऽपि विरोधः इति ।

न स्यात्- न हि चोदना धर्मसामान्यं बोधयति; किं तर्हि अग्निहोत्रादीनेव विशेषरूपान् शब्दान्तरादिप्रमाणावगम्यान् । चोदनासूत्रं चेदं विशेषणरूपेणैव धर्मबोधकमिति स्वयमेव वक्ष्यति-

'प्रवृत्त्यङ्गं च यत् ज्ञानं तस्य मूलं परीक्ष्यते' इति (प्रमू. १०७)। अपि च सामान्यतः प्रीतिसाधनत्वेन प्रसिद्धं धर्मं उद्दिश्य चोदनालक्षणत्वविधौ च सूत्रस्यार्थशब्दस्यानन्वयप्रसक्तिश्च। अनर्थस्याप्रीति साधनत्वेन धर्मत्वप्रसिध्द्यभावादेव, तद्वारणार्थं अर्थपदस्यावश्यकत्वाभावात्। अतः सूत्रमिदमनुपपन्नमिति चेत्—

ब्रूमः

**'धर्मो सामान्यतः सिद्धे'** इति वदन्नत्र वार्तिककारः परिहारमत्र स्पष्टमाह। कथं ? अस्मिन्नेव सूत्रे उत्तरत्र भाष्यकारः **'यो यागमनुतिष्ठति तं धार्मिकः इति समाचक्षते'** इति हि वक्ष्यति। तदिदं निर्मूलमिति चार्वाकाः मन्यन्ते।

वैशेषिकादयस्तु योगिप्रत्यक्षं मूलमत्रेति। तदेवमनेकधा विप्रतिपत्तौ सत्यां, प्रत्यक्षादीनि प्रमाणत्वेन निराकृत्य, तत्राप्रामाण्यशंकां च व्यपोह्य सूत्रेणानेन प्रतिज्ञायते धर्मे चोदनैव मूलं, चोदना मूलमेवेति च। यस्मादत्र प्रमाणं विधीयते, अत एव प्रमाणान्तरसिद्धता निरस्यते। 'चोदनैव प्रमाणमत्र' इत्युभयथापि विधानस्वीकारात् विरोधात् व्याहतत्वाच्च प्रमाणान्तरात् सिद्धिः व्याहतैवेति ज्ञेयम्।

एव च दर्शपूर्णमासादयः क्रियाविशेषाः धर्मत्वेन स्मर्यमाणाः धर्मरूपाः भवन्ति। यथा मन्वादिमहर्षिस्मरणविषयाष्टकादौ चोदना मूलमिति स्मृत्याधिकरणे वक्ष्यति सूत्रकारः तथा इहापि इति। एवं च 'धर्मो सामान्यतः सिद्धे' इति मूलविशेषनिश्चयाभावाभिप्रायमिति द्रष्टव्यम्।

स्वरूपादेः ततः सिद्धिः स्वरूपं चेह सूच्यते ॥ १ ॥

---

औत्पतिकसूत्रारंभे च वार्तिककारः चोद्यपूर्वकं प्रत्यक्षादौ निषिद्धेऽपि इत्यारभ्य 'निर्मूलासंभवादत्र प्रमाणैः सैव मृग्यते । कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितमिति ।' एतच्छ्लोकार्थं स्पष्टयति । एवं चैतत्सूत्र न पूर्वोक्तानुपपात्तिशङ्कायाः मनागप्यवकाशो भविता । एव मस्य श्लोकस्यान्वयः- सामान्यतः धर्मे सिद्ध इति अनूद्य (तत्र) चोदनाप्रमाणं उच्यते इति विधिः इति ।

नन्वेवं अग्निहोत्रादधर्मे निष्प्रमाणकत्वं कामं निषिद्धं स्यात् चैत्यवन्दनादेः धर्मत्वं तु न निषिद्धं इति तेषामपि धर्मत्वं स्यात् । एव स्वरूपविशेषे अपेक्षिते प्रमाणविशेषविधानमसंगतं च स्यात ; इति चेदाह- ॥ स्वरूपादेः ततः सिद्धिः इति ॥

धर्मप्रमाणे चोदनात्मके निर्णीते सति चोदनाप्रमाणगम्यं आग्निहोत्राद्येव धर्मस्वरूपमित्यवगम्यते । स्वरूपस्य प्रमाणनिश्चतव्यत्वात् चैत्य वन्दनादेश्च चोदनागम्यत्वाभावात् न धर्मत्वमिति तेषां धर्मत्ववारणं च भवति ।

एतावता प्रकरणेन यो धर्मः स चोदनालक्षणः इति उद्देश्यविधेयभावस्वीकरणेनसूत्रार्थः वर्णितः ; धर्मस्वरूपस्य अर्थात् सिद्धिरिति

द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।

---

च । इदानीं वार्तिककारः सूत्रेऽस्मिन् पूर्वोक्तविपरीतां वननव्यक्तिमङ्गीकृत्य स्वरूपस्य कण्ठोक्ततामेव स्थापयति— ॥ **स्वरूपं चेह सूत्र्यते इति** ॥

अस्यायमाशयः— "**यश्चोदनालक्षणः स धर्म एव नाधर्मः**" स एव धर्मः न चैत्यवन्दनादिः ; इत्येवं धर्मस्वरूपतद्विशेषसिद्धिरिति ॥

अथवा नेदं चोदनाप्रतिज्ञापरं सूत्रम ; किं तु चोदनालक्षणकः कार्यरूपोऽर्थः स एव धर्मः नत्विन्द्रियादिलक्षणः क्रियाकारकसंसर्गः इति ये मन्यन्ते तेषां मतस्य निरासार्थमाह— ॥**'स्वरूपं चेह सूत्र्यते'** इति ॥ न चेद युक्तमिव विचारकारणात् पूर्वं अध्ययनमात्रवतः कथं चोदना प्रमाणत्वेन ज्ञाता भवेत् ? येन अनूद्येत । यदि चेदं सूत्रं चोदनाप्रामाण्यप्रतिज्ञापरं न स्यात् तर्हि **'चोदना हि भूतं'** इत्यादिभाष्यप्रतिज्ञास्थापकं '**उक्तं अस्माभिः चोदनानिमित्तं धर्मस्य ज्ञानमिति तत्प्रतिज्ञामात्रेणोक्त**'-मित्यादि '**प्रथमेऽध्याये प्रमाणलक्षणं वृत्त**'मित्यादि च भाष्यं सर्वथा असंगतमेव हि स्यात् । अतः पूर्वोक्तार्थ एव समंजसः इति ॥ १ ॥

पूर्वं '**को धर्मः कथं लक्षणः**' **इत्युभयमपि एकेनैव सूत्रेण व्याख्यातं** इति भाष्यकारेणोक्तम् । तदिदानीं विरुध्येत ; अन्यतरविध्यङ्गीकारे अन्यतरस्या श्रौतत्वापत्तेः; इति भाष्यविरोधं परिहरन्नाह— ॥ **द्वयमेकेन** इति ॥

नात्र एक एवार्थः विधीयते ; इति भ्रमः ; किं तु द्वावर्थौ वेवेति । तौ च शब्दादेकः अर्थाच्चापरः, इति बोध्यते । इति प्रमाणविधिपक्षस्वीकारे

**स्वरूपेऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥**

**किमाद्यपेक्षितः पूर्णः समर्थः प्रत्ययो विधौ ।**

---

तत्प्रमाणवेद्यस्वरूपस्यार्थादेव सिद्धिः ; स्वरूपविधिपक्षे समाश्रिते प्रमाणसिद्धिरर्थात । एकस्यैव वाक्यस्यार्थद्वयसमर्पकत्वे संभवति वाक्यद्वयकल्पनं न युज्येत । प्रमाणविधिपक्षे श्रुत्या समाश्रिते यथा अर्थात स्वरूपसिद्धिः तथा पूर्वश्लोकं व्याख्यन् प्रदर्शयामास । इदानीं स्वरूपविधौ अर्थात् प्रमाणसिद्धिं स्पष्टयति **स्वरूपेऽपि हि तस्योक्तेति** ॥

यदा च चोदनागम्यस्य धर्मत्वं इति स्वरूपं धर्मस्योक्तं तदा चोदनायाः प्रामाण्यं, तद्भिन्नस्य प्रत्यक्षादेरप्रामाण्यं च अर्थात् सिद्ध्यतीति ।

ननु तर्हि पुनरुक्ततादोषः स्यात ; इति चेत् न— एकस्य श्रौतत्वात् (शब्दगम्यत्वात्) अन्यस्य च अर्थात् सिद्धत्वाच्च तद्दोषाप्रसरात् । शब्देनैव द्विवारं बोधने किल पुनरुक्ततादोषः; तदत्र नास्तीति न दूषणं भवेत् ॥ २ ॥

अत्र भाष्ये चोदनापदव्याख्यानावसरे एवमुक्तं— **चोदनेति क्रियायाः प्रवर्तकम् वचनं' इति** । तादद न घटते; अत्र हि **वचन**पदं प्रवर्तकं वाक्यमभिधत्ते । तच्च न प्रवर्तकम् । लिङादिप्रत्ययमात्रस्यैव प्रवर्तनायां (विधौ) स्मरणात् । अतः भाष्यमिदं कथं घटतामित्यत्राह-- ॥ **किमाद्यपेक्षितः इति** ।

**यद्यपि प्रत्ययमात्रस्यैव** विधिः (प्रवर्तना) अर्थः, तथाऽपि नतन्मात्रस्य पुरुषप्रवर्तकत्वं घटेत । व्यापाररूपभावनावाचकत्वा प्रत्ययस्य व्यापारस्य

तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥ ३ ॥

---

च भावनारूपत्वेन, तस्याश्चांशत्रयोपेतत्वेन च अंशत्रयविशिष्टार्थीभावनापरिरंभो विधिः तदीयनिखिलांशलाभात् पूर्वं न पुरुषं प्रवर्तयितुं समर्थो भवेत् । निखिलांशलाभोऽपि न विना वाक्यात् भवेत् इति प्रवर्तकं वाक्यमेवेति मत्वा भाष्यकारः प्राह– ॥ **'प्रवर्तकं वचनमिति'** ॥

अयमाशयः - प्रत्ययेन हि भावनाद्वयं अंशभेदेनाभिधीयते । शाब्दीभावना (विधिः) आर्थीभावना चेति । समानाभिधानश्रुत्या च, अर्थीभावनाशाब्दीभावनायां भाव्यतामश्नुते । भाव्यकरणेतिकर्तव्यतारूपांशत्रयवती च भावना । तत्रांशत्रयोपेतार्थीभावनारूपसाध्यांशलाभ एव विधिप्रत्ययार्थपरिपूर्णता । तल्लाभश्च वाक्यघटकस्वर्गकामादिपदसत्वे इति वाक्यमेव चोदनेति प्रोक्तं भाष्ये । एतद्विस्तरस्त्वन्यत्र । **'वार्तिके किमाद्यापेक्षितै'**रित्यत्रादिपदेन साधनेतिकर्तव्यताकांक्षयोर्ग्रहणम् ॥ ३ ॥

**चोदनासूत्रे**–चोदना प्रमाणमेव, चोदनैव प्रमाणं इत्यर्थद्वयं विवक्षितमिति पूर्वमुक्तं । तत्साधकं च भाष्यं– **'चोदना हि भूतं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकं अर्थं शक्नोत्यवगमयितुं नान्यत् किंचनेन्द्रिय'** मिति एतद्भाष्यं हि अतीन्द्रियार्थे चोदनासामर्थ्य प्रत्यक्षाद्यसामर्थ्यं प्रदर्श्य पूर्वोक्तार्थद्वयस्थापकं भवति । परंत्विदं न युक्तम ; सूत्रेऽस्मिन् – प्रतिज्ञापरे असंगतत्वात् । उत्तरत्र सूत्रकारैरेव प्रत्यक्षसूत्रौत्पत्तिकसूत्रे वक्ष्यमाणत्वात् पुनरुक्तत्वापत्तेश्च । भाष्यका

**चोदनैव प्रमाणं चेत्येतद्धर्मेऽवधारितम् ।**
**साकांक्षमिति मन्वानः युक्तिलेशं द्वयेऽस्पृशत् ॥ ४ ॥**

---

रस्य अत्र क्लेशस्वीकरणं नैव घटते इत्याशङ्कायामाह– ॥ **चोदनैवेति** ॥

उत्तरत्र वक्ष्यमाणोऽप्यर्थः प्रतिज्ञासमर्थनार्थं पूर्वमुच्यमानः न दोषाय भवति । **'चोदनैव प्रमाणं, प्रमाणमेव चोदना'** इत्यर्थद्वयप्रतिज्ञानं न घटते ; कुतः ? असंभावितार्थकत्वात् ; कुतः ? संभावितो योऽर्थःप्रतिज्ञातश्च, स एव हि हेतुना साध्येत । शब्दस्य (चोदनायाः) नित्यं प्रत्यक्षादिप्रमाणान्तरपराधीनस्य प्रमाणत्वं स्वतन्त्रस्य प्रत्यक्षादेः अप्रमाणत्वं इति हि पूर्वकृतप्रतिज्ञाद्वयार्थः ; तदत्यन्तमनुपपन्नमिति शंका भवेत् । यथा रूपे श्रोत्रमेव प्रमाणं प्रमाणमेवेति प्रतिज्ञाद्वयमनुपपन्नमेव भवेत् तद्वदिति । **तद्वारणमाह– ॥ चोदनैवेति** ॥

अथवा चोदनालक्षणशब्दः सूत्रघटकीभूतः समस्तपदम् । समासस्तु सामर्थ्ये सत्येव भवेत् । अत्र सामर्थ्यं च पदानां विशेषणविशेष्यार्थवचनत्वरूपमेव । विशेषणत्वं च व्यवच्छेदकत्वं, व्यवच्छेद्यत्वं च विशेष्यत्वं, एतद्रूपमन्तरा न पदानां विशेषणविशेष्यभावः युज्यते । एवं च चोदनालक्षणत्वयोः इतरेतरव्यवच्छेदात् चोदनैव प्रमाणं चोदना प्रमाणमेवेति पूर्वोक्तरीत्या च अवधारणद्वयं विवक्षितम् । तच्चावधारणं

**संभाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि ।**

---

युक्ति (उपपत्ति) अपेक्षते इति भाष्यकारः सूत्रकारस्य अनुपपत्तिकार्थवचनं सुतरामसहमानः संभावनाप्रसिद्धिसिद्ध्यर्थं चोदनाहीत्यादिभाष्येण युक्तिद्वयं प्रदर्शयामास । अतः संभावितार्थप्रदर्शनद्वारा पूर्वप्रतिज्ञार्थसमर्थनार्थं वक्ष्यमाणमपीह पूर्वमेव परामृष्टम् । उत्तरत्र प्रत्यक्षौत्पत्तिकसूत्रादौ प्रपञ्चस्तु प्रतिज्ञातार्थसिद्ध्यर्थः इति नासंबद्धता न वा पुनरुक्तता ; इदं च निमित्त सूत्र वार्तिके स्पष्टम् ।

**प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि।**
**वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥**
**प्रतिज्ञामात्रमित्येतत् जैमिनेर्मतमुच्यते ।**
**वृत्तिकारोऽधिकं वाऽपि भूतादिद्वारमब्रवीत् ॥**

इति ।

**'चोदनाप्रमाणमेवे'**ति अवधारणायां युक्तिलशं विशदयति ॥ **संभाव्यते इति** ॥

अतीन्द्रियेष्वर्थेषु भूतादिष्वपि च शब्दस्य प्रामाण्यं संभाव्यते ; तद्विषयकज्ञानजनकत्वात् । धर्मश्च भूतादीनामन्यतम एवेति प्रतिज्ञार्थः नानुपपन्नः ।

इन्द्रियादेः असामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥

अत्यन्तासत्यपि ज्ञानं अर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात् प्रमाणता ॥ ६ ॥

---

**'चोदनैव प्रमाणं'** इति प्रतिज्ञायां युक्तिलेशमाह- ॥ **इन्द्रियादेरिति** ॥

उत्तरसूत्रे **सत्संप्रयोगे + + + प्रत्यक्षमनिमित्तं विद्यमानोपलंभनत्वात्'** इति भूतादिषु प्रवृत्तौ इन्द्रियादेरसामर्थ्यात् धर्मादौ प्रत्यक्षस्य अनिमित्तत्वं यद्वक्ष्यते तदत्र अतिदिदेश । प्रत्यक्षाप्रवृत्तौ अनुमानादीनामपि धर्मे सुतरां न प्रवृत्तिरिति **'चोदनैव प्रमाणं'** इति प्र॰ज्ञा निर्बाधं सिद्ध्यतीति ॥ ५ ॥

शब्दस्य प्रामाण्यं संभाव्यते इति पूर्वश्लोके यदुक्तं तदेव द्रढयितुमाह– ॥ **अत्यन्तासत्यपीति** ॥

ज्ञानोत्पादकत्वमेव प्रामाण्याङ्गीकारे कारणं, तच्च यदि शब्दे वर्तेत तत्र प्रामाण्यमपि उत्सर्गतः अक्षतमेव । **शब्दश्च अत्यन्तासत्यपि** पदार्थे शशविषाणगगनकुसुमसंसर्गादौ **ज्ञानं** जनयत्येवेति युक्तं तस्य प्रामाण्यं धर्मेऽपि ।

ननु तर्हि गगनकुसुमादिविषयकज्ञानवत् धर्मविषयकज्ञानस्यापि स्यादप्रामाण्यमिति चेत्, अत्र दोषाभावात् नाप्रामाण्यशङ्कायाः प्रसक्ति-

**चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया ।**

---

र्भवेत् । उत्सर्गतः ज्ञानजननेन प्राप्तं प्रामाण्यं अपवादाभावात् तथैवावतिष्ठते इति नाप्रामाण्यप्रसक्तिर्भवति ।

ननु अत्यन्तामत्यप्यर्थे शब्दः कीदृशं ज्ञानं जनयति ? किं सद्रूपं ? उतासद्रूपं ?

नाद्यः— उपक्रमविरोधात् , चोदनाप्रमाणं , असतिसद्रूपज्ञानजनकत्वात् इति विरुद्धाभिधानात् , असति सदवगाहि चेत् तद्वति तदभावावगाहित्वात् , शुक्तिरजतादिज्ञानवदप्रामाण्यस्यैवापत्तेः ।

न द्वितीयः , प्रकृतानुपयोगात् ; इति चेत्— ब्रूमः—

अग्निहोत्रादिचोदनाः अनुष्ठेयार्थप्रतिपादकाः । अनुष्ठेयश्चार्थः तदानीमत्यन्तासन् प्रत्यक्षादिप्रमाणाविषयश्च । परं तु (शास्त्रस्य) चोदनारूपशब्दस्य तत्र प्रामाण्यमक्षतं, यतस्तत्रापि चोदनया ज्ञानं जायते । तस्मात् बोधकत्वादौत्सर्गिकं प्रामाण्यं प्राप्तं , तत्र चापवादकारणीभूतकारणदोषज्ञानादेरभावात् सुस्थिरं तथैवावतिष्ठते इति चतुरश्रम् ॥ ६ ॥

अथ चोदनायाः अनुष्ठेयविषयकत्वात् न कालसंबन्धिवस्तुबोधकत्वं संभवति । ततश्च **चोदना हि भूत भविष्यन्तं अर्थं शक्नोत्यवगमयितु** इति भाष्यं कथं घटताम् । यदि च वस्तुस्थितिमवलम्ब्योच्येत तदाऽपि '**भविष्यन्तं**' इत्येवमेव हि वाच्यं भवेत् । उत्तरत्र वक्ष्यति च **भविष्यंश्चैषोऽर्थः**' इति । भूतवर्तमानग्रहणं तु न घटत एवेति भाष्यं पूर्वोक्तमनुपपन्नमेवेति शङ्कायामाह— ॥ **चोदनेत्यब्रवीच्चात्र** इति ॥

**चोदना**पदं चात्रत्यं अन्यत्र विशेषरूपविधायकवाक्यवाचकमपि प्रकृते शब्दसामान्यमेव लक्षयति । तत्र च कारणं विरुद्धपदसमभिव्याहारः इति चाह— ॥ **नहीति** ॥

न हि भूतादि विषयः कश्चिदस्ति विधायकः ॥ ७ ॥

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य कुतो वावसरो भवेत् ॥

निमित्तमात्रं वोच्येत प्रमाणं चेह लक्षणम् ।

---

भूतादिविषयकविधेरेवासंभवात् । इति । यथा घोषपदसमाभिव्याहारात् गङ्गापदं तीरलक्षकम् ; यथा वा **स्वर्गलोके न भयं किञ्चनास्ति'** इत्यत्र स्वर्गशब्दः मोक्षबोधकः तद्वत् ॥ ७ ॥

ननु सूत्रकारः **'चोदनालक्षणोऽर्थो धर्मः'** इति शब्दविशेषरूपविधिघटितं हि सूत्रयामास । **भाष्यकारेण** कुतः शब्दमहिमा कथ्यते ? इति चेदाह– ॥ **इन्द्रियादीति** ॥

प्रमाणविशेषस्य प्रत्यक्षानुमानादेः धर्मे प्रामाण्यं न संभवतीति साधिते प्रमाणविशेषान्तरभूतशब्दस्य भूतादौ प्रामाण्यं स्थापयितव्यं, न शब्दविशेषभूतचोदनायाः, सामान्यप्रामाण्यस्थापनमन्तरा विशेषप्रामाण्यस्थापनायोगात् । यदा च शब्दसामान्यस्य भूतादौ सामर्थ्यं समर्थितं तदा शब्दविशेषस्य चोदनायाः धर्मे सामर्थ्यं सूत्रोक्तं समर्थितं भवत्येवेति धिया भाष्यकारः शब्दसामान्यस्य धर्मे प्रामाण्यमाह ॥ ८ ॥

एवं सूत्रघटकीभूतं चोदनाशब्दं व्याख्यायेदानीं सूत्रघटकलक्षणशब्दं व्याचष्टे– ॥ **निमित्तमात्रं इति** ॥

भाष्ये **'लक्ष्यते येन तल्लक्षण'**मिति लक्षणपदार्थः प्रदर्शयते । तत्र प्रमितेः कारणमात्रं सन्निकर्षविप्रकर्षापेक्षारहितं लक्षणशब्देनोच्यते । प्रमितेः

प्रमाणं चापि शब्दो वा तज्ज्ञानं वा निरूप्यते ॥ ९ ॥

पदार्थस्तन्मतिर्वा स्याद् वाक्यार्थाधिगमोपि वा ।
पूर्वेषां तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥

---

कारणमात्रं इत्यर्थः। अथवा करणव्युत्पत्तिं समाश्रित्य प्रमाणं लक्षण शब्देन प्रोच्यते। प्रमाकरणं लक्षणं इत्यर्थः। करणत्वं च साधकतमत्वरूपं, तमप्प्रत्ययार्थश्चातिशयः इति लोके प्रसिद्धम्। अतिशयश्च सर्वत्रापेक्षिक इति च। तत्र शब्दादिः वाक्यार्थज्ञानपर्यंतः प्रमाणविकल्पः पञ्चधा वार्तिके प्रदर्श्यते। निमित्त(कारण)मात्रपक्षे तु नैव विकल्पः, तस्य अपेक्षिकत्वाभावात् सर्वेषामेव निमित्तत्वात्।

तत्र पञ्चापि विकल्पान् प्रदर्शयति– ॥ प्रमाणं चापीति ॥

प्रमाणं प्रमितिकरणं तच्च कारकविशेषः। विवक्षातः कारकाणि भवन्ति; इति च लोके शास्त्रे च प्रसिद्धमेव दृश्यते। अतश्च यदा पूर्वोक्तेषु पञ्चसु विकल्पेषु शब्दमारभ्य वाक्यार्थज्ञानपर्यन्तेषु यत् विवक्षावशात प्रकृष्टसाधनतया विवक्ष्यते ( प्रमाकरणतया ) तत् प्रमाणं भवति।

प्रमाणप्रस्तावात् फलमपि तावत् प्रदर्शयति- ॥ पूर्वेषांत्विति ॥

प्रथमं निर्दिष्टानां शब्दादीनां प्रमाणत्वेन स्वीकारे कृते वाक्यार्थज्ञानस्य फलत्वं गम्यते। अत्र तस्येतिशब्देन पूर्वं अन्तिमतया निर्दि

ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।
चोदनोक्तिस्तदा कार्यं तत्कार्यं वापि लक्षयेत् ॥ १२ ॥

---

ष्टस्य वाक्यार्थाधिगस्य परामर्शः क्रियते । स एव च शब्दादीनां प्रमाणत्वे फलम् । अन्तरा विद्यमानं सर्वं करणापेक्षितव्यापाररूपमिति ज्ञेयम् व्यापारवदसाधारणकारणस्यैव करणत्वात् । यदा तु वाक्यार्थाधिगमः (ज्ञानं) करणं विवक्ष्यते, तदा किं फलमिति चेत्– हानोपादानादिबुद्धिः फलमिति विभाव्यम् ।

एतावता चोदनालक्षणसूत्रघटकलक्षणशब्दार्थं व्याख्याय चोदनाप्रमाणकः धर्मः इति साधितम् ।

एवं सूत्रघटकीभूतपदार्थौ व्याख्याय संप्रति चोदनालक्षणशब्दे समासानुपपत्तिशंकापरिहारार्थं प्रयतते । एवं तत्रानुपपत्तिशङ्का भवति । पूर्वोक्तरीत्या शब्दभिन्नज्ञानादीनामपि प्रमाणत्वेन स्वीकारपक्षे शब्दविशेषार्थक चोदनापदेन लक्षणपदस्य सामानाधिकरण्यासंभवात् चोदनालक्षणं अस्येति समासानुपपत्तिरेव । **'बहुव्रीहिः समानाधिकरणानां'** इति किल शास्त्रविदः वदन्ति ।विभिन्नार्थकयोश्च चोदनालक्षणपदयोः कथं समानाधिकरण्यं घटेतेति । ॥ ०८–९ ॥

तत्र परिहारं प्रदर्शयति– ॥ **ज्ञाने इति** ॥

अत्र ज्ञानपदं शब्दभिन्नचतुष्टयस्याप्युपलक्षकं इति ज्ञेयम । ज्ञानादिप्रमाणवाचिना लक्षणशब्देन सह श्रूयमाणशब्दविशेषवाची चोदना

**निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।**
**सामानाधिकरणं स्यात् चोदनालक्षणत्वयोः ॥ १२ ॥**

---

शब्दः तद्गोचरं ज्ञानं लक्षणया बोधयेत् । लक्षितलक्षणायावा तत्कार्यं चेति न सामानाधिकरणभङ्गः प्रसज्यते । अस्ति हि कार्यकार्यस्याऽपि परंपरया संबन्धो लक्षणाबीजमिति ; यथा द्विरेफादिशब्दे ॥ ११ ॥

अथ च निरर्थकतया लक्षणापरिग्रहो न युक्त; इति मुख्यार्थभूतनिमित्तार्थकत्वमेव लक्षणशब्दस्य समाश्रित्य मुख्यमेव सामानाधिकरण्यं युक्तमित्याह– ॥ **निमित्तमात्रे इति** ॥

**निमित्तमात्रे** प्रसिद्धः लक्षणशब्दः, **शब्दे च** प्रसिद्धः चोदनाशब्दः । प्रमां प्रति निमित्त ( प्रमाणं ) तयोश्च मुख्यार्थकयोः सामानाधिकरण्ये न काप्यनुपपत्तिः । ज्ञानादीनामपि यद्यपि निमित्तत्वं अक्षतमेव । तथाऽपि चोदनाया अपि निमित्तत्वानपायात् श्रुत्यैव (मुख्यमेव) सामानाधिकरण्यं संभवेत । यदा च लक्षणशब्दो भवेत् प्रमाणार्थकः तदाऽपि शब्दस्यापि प्रमाणत्वेन न मुख्यसामानाधिकरण्ये किञ्चिदपि बाधकं समस्ति ।

वस्तुतस्तु– चोदनापदस्याऽपि लक्षणपदवत् चोद्यत अनयेति व्युत्पत्तिसमाश्रयणेन ज्ञानादिष्वपि मुख्यत्वसंभवात् पूर्वोक्तं **'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः'** इति भाष्याभिप्रायेणैव । **वार्तिके** चोत्तरत्र–

द्रव्यक्रिया गुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ १३ ॥

---

प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ।
सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ॥

चो सू श्लो-वा--२१

वक्ष्यति अन्यत्र च-

प्रवर्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
सा चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥

इत्युक्तम् ।

ननु चोदनैव प्रमाणमित्यवधारणं नैवोपपद्यते, यागादिक्रियायाः गोदोहनादिद्रव्यस्य, आरुण्यादेर्गुणस्य समादेर्देशस्य च धर्मत्वस्य साधयिष्यमाणत्वात्, तेषां च प्रत्यक्षादिचोदनाभिन्नप्रमाणविषयत्वेन पूर्वोक्तावधारणस्यानुपपत्तेः इति चेदाह- ॥ द्रव्यक्रियेति ॥

द्रव्यक्रियागुणादीनामित्यत्र आदिशब्देन आकृतेर्ग्रहणम् । यद्यपि द्रव्यादीनां प्रत्यक्षादिप्रमाणगोचराणां धर्मत्वं संमतमेव । परं तु तेषां न स्वरूपेण धर्मत्वम् । किं तर्हि श्रेयस्साधनताकत्वेन रूपेणैव तदिष्यते ? श्रेयस्साधनता चेन्द्रियगोचरो न भवतीति न धर्मस्येन्द्रियगोचरत्वापत्तिरिति न पूर्वोक्तावधारणानुपपत्तिः ॥ १३ ॥

श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥

प्रदर्शनार्थमत्रोक्त इन्द्रियं सूत्रकारवत् ।
नान्यत् किंचेति वा छेदः सामान्यार्थः प्रयुज्यते ॥१५॥

---

तदेव च स्पष्टयति– ॥ श्रेयस्साधनतेति ॥

एषां गोदोहनादिद्रव्यादीनां श्रेयसाधनता हि '**गोदोहनेन पशुकामस्य प्रणयेत्**' इत्यादिशास्त्रादेव च प्रतीयते । तथा च द्रव्यादिनिष्ठश्रेयसाधनताशक्तिः इन्द्रियाद्यविषयः अपि तु शास्त्रमात्रविषयः इति न धर्मस्येन्द्रियगोचरत्वं, अतः चोदनैव प्रमाणमिति पूर्वोक्तार्थस्य न काप्यनुपपत्तिरिति ॥ १४ ॥

ननु भाष्ये '**नान्यत् किंचनेन्द्रिय**'मिति धर्मे इन्द्रियमशक्तमित्युक्तम् । न तावन्मात्रेण चोदनैवेत्यवधारणं सिद्ध्येत् । अनुमानादीनांमप्रतिषेधात् इति शङ्कायामाह– ॥ **प्रदर्शनार्थमिति** ॥

यथा **जैमिनिः सूत्रकारः प्रत्यक्षसूत्रे** चोदनाभिन्नसर्वप्रमाणानां धर्मे अनिमित्ततां विवक्षन्नपि '**प्रत्यक्षमनिमित्तमिति**' प्रत्यक्षमात्रस्यानिमित्ततामाह तद्वत् सूत्रकारमार्गानुयायी भाष्यकारोऽपि प्रदर्शनार्थं (उपलक्षणार्थं) इन्द्रियमात्राशक्ततामाह **अथवा नान्यत् किंच नेन्द्रियमिति**

तदसामर्थ्यसिद्ध्यर्थं च पुनरिन्द्रियकीर्तनम् ।
किञ्चेति मध्यमच्छेदः हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥

---

पदच्छेदः स्वीक्रियते । तदा, नान्यत् **किञ्चेति** पदच्छेदं स्वीकृत्य प्रमाण सामान्यनिषेधः ॥ १५ ॥

तत्र हेतुः नेन्द्रियमित्याह– ॥ **तदसामर्थ्येति** ॥

चोदनाभिन्नं सर्वमपि प्रमाणजातं धर्मप्रमाया जननं प्रत्यसमर्थं, कुतः ? इन्द्रियस्य तत्र असमर्थत्वात् तद्धेतुकत्वाच्चान्यस्येति ।

हेतुप्रश्नस्याऽपि शाब्दत्वसिद्ध्यर्थं व्याख्यानान्तरमाह – ॥ **किञ्चेति** ॥

पूर्वोक्ते '**नान्यत् किञ्च नेन्द्रिय**'मिति भाष्ये '**किञ्च इति**' मध्यमपदच्छेदः । तस्य च हेत्वर्थकत्व, कुतः इत्यर्थः । तत्र चोत्तरं '**नेन्द्रियमिति**' । किञ्च कारणं अन्यत् न प्रवर्तते ; इति प्रश्ने अन्यस्यानुमानादेः प्रवृत्तौ प्रत्यक्षमेव ( इन्द्रियम् ) हि मूलं ; यस्मात् तन्न प्रवर्तते ; अतः तदुपजीव्यनुमानादिकं नैव प्रवर्तितुमर्हति इति चोत्तरं '**नेन्द्रियमिति**' **भाष्येण** कथ्यते । ॥ १६ ॥

यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना संबन्धबोधेन न तु तस्योद्भव क्वचित् ॥ १७ ॥

न सामान्यविशेषाभ्यां धर्मसंबन्धदर्शनम् ।
लिङ्गस्य कस्यचित् सिद्धं येन स्यादनुमानता ॥ १८ ॥

---

ननु च 'नान्यत् किञ्च'ति भाष्यमनुपपन्नमेव। अनुमानस्यापि भूतभविष्यद्विप्रकृष्ट सूक्ष्मव्यवहितादिषु प्रवृत्तिदर्शनात् । यथा नदीप्रवाहेन भूतवृष्टेरनुमानं, अग्नीन्धनसंयोगात् भविष्यदङ्गारानुमितिः, धूमाच्च विप्र कृष्टादग्निः, कुडयादिव्यवहितोऽपि भृत्यादिः स्वरेण, सूक्ष्मं च मकर न्दादिद्रव्यं गन्धेनानुमीयते; इति च लोके प्रसिद्धं किल । अतः 'नान्यत्' इति कथं सर्वसामान्यनिषेधः क्रियते इति शङ्कायामाह -
॥ यद्यपित्वनुमानस्येति ॥

नूनं भूतभविष्यदादौ अनुमानं प्रवर्तते । परं तु नैव संबन्ध ग्रहणं ( व्याप्तिग्रहं ) विना अनुमानस्य प्रवृत्तिः दृश्यते । संबन्धग्रह श्च द्वेधा सामान्यरूपेण विशेषरूपेण वा । यथा अग्निसामान्येन धूम सामान्यस्य । यथा वा कृत्तिकास्तमयरोहिण्युदययोः । उभयविधं च संबन्धग्रहणं धर्मे नैव भवति । धर्मस्य सर्वथा अतीन्द्रियत्वात् अतश्च'नुमानकारणीभूतव्याप्तिग्रह (संबन्धग्रह) कारणीभूतेऽन्द्रियस्याप्रवृत्तेर्नानु मानस्य धर्मे प्रवृत्त्यर्हतेति 'नान्मत् किञ्चे'ति भाष्योक्तिः युज्यतएवेति ।
॥ १७–१८ ॥

ननु शब्दोऽपि संबन्धबोधानन्तरं प्रवर्तते ।
पदं तत् न तु तद्वाच्यो धर्मो वाक्यार्थ एव सः ॥ १९ ॥

वाक्यस्यावाचकत्वं च पदार्थानां च हेतुता ।
संबन्धानपेक्षाणां वाक्यार्थं स्थापयिष्यते ॥ २० ॥

---

ननु यद्येवं धर्मे अनुमानप्रवृत्तिः निराक्रियेत तर्हि भवदभिमात-शब्दात्मकप्रमाणेप्ययमेव प्रसङ्गः अपरिहार्यो भवेदिति चेदाह - ॥ नन्विति॥

शब्दोऽपि हि विना संबन्धज्ञानं नैव बोधं जनयति, प्रथम श्रवणे बालानां च शब्दे श्रुतेऽपि अर्थज्ञानाजननात् ! अतः अनुमाने चोक्तदोषः भवतोप्यपरिहार्यः भवेत् । इति शङ्का । तत्र परिहार-माह पदमिति । पदस्यैवार्थज्ञानजनने संबन्धग्रहणापेक्षा दृश्यते। न तु वाक्यादर्थज्ञानजनने । स्वल्पैरेवपदैः अनन्तवाक्यरचनेन संबन्ध-ग्रहणसंभवात् धर्मश्च वाक्यार्थ एव, न तु पदार्थः, वाक्यं च न संबन्ध-ग्रहणाधीनतया बोधकमिति नात्रपूर्वोक्तानुपपत्तिः प्रसज्यते । अतः पूर्वो-क्तावधारण प्रतिज्ञायाः नैव काचित् क्षतिरस्ति ।

ननु भवतु कामं वाक्यार्थ एव धर्म इति । तथापि पदसमुदायरूप-त्वाद्वाक्यस्य वैय्याकरणदर्शन इव अतिरिक्तत्वस्वेनानङ्गीकारात् पदवत् तत्स मुदायरूपवाक्यमपि वाक्यमपि संबन्धग्रहसापेक्षमेव हि वाक्यार्थरूपधर्मधियं जनयेदिति न पूर्वोक्तदोषपरिहारस्संभवेदिति शङ्कां परिहरन्नाह—॥वाक्यस्येति॥

स्यादेवं यदिवाक्यं वाक्यार्थयाचकं भवेत् तत्तु नैववाचकं । कथं तर्हि वाक्यार्थावगमः ? इति चेत्— पदार्थैः इति ब्रमः । भवतु

नित्यत्वादेरसिद्धत्वात् अभ्युपेत्येत्यथवा ।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥

---

च पदार्थानामेव वाक्यार्थहेतुता, ते च पदार्थाः संबन्धग्रहणसापेक्षा एव हि वाक्यार्थहेतुभावमश्नुवीरन्निति अतीन्द्रिये च धर्मे संबन्धग्रहणासंभवात् न पदार्थानामपि हेतुतेति चेत् न, पदार्थानां वाक्यार्थहेतुत्वे न संबन्धग्रहणापेक्षा, तदभावेऽपि अपूर्ववाक्यार्थबोधोदयस्यानुभाविकत्वात् । न च तर्हि अतिप्रसङ्गः संभवति । अपेक्षासंनिधियोग्यतानां नियामकत्वस्वीकारात् । सर्वमिदं वाक्यार्थनिरूपणपरे तत्भूताधिकरणे गुनतपादान्ते विस्तरशः स्थापयिष्यते ॥ २० ॥

अत्र भाष्यं '**ननु अतथाभूतमप्यर्थं ब्रूयात् चोदना यथा यत् किञ्चन लौकिकं वचनं, नद्यास्तीरे पञ्चफलानि सन्तीति । तत् तथ्यमपि भवति वितथमपि भवतीति** । इदं च न युक्तं, कुत इति चेत्, लौकिकवचनं संभवद्दोषमूलं, चोदनात्मकं तु वेदवाक्यं न तथा, अपौरुषेयत्वाद्वेदवाक्यानां, पुरुषसंबन्धनिबन्धनदोषसंबन्धस्येहाप्रसक्तेः अतश्चातथाभावशङ्का कथमित्यत्राह— ॥ **नित्यत्वादेरसिद्धत्वादिति** ॥

बाह्यानां ह्याक्षेप्तॄणां, वेदनित्यत्वं, वाक्यार्थस्य पदार्थपूर्वकत्वं, प्रत्यक्षानुपलब्धेरबाधकत्वं, भोक्तुः कालान्तरस्थायित्वं चेत्यादिकं असिद्धमिति मत्वा त तावदाक्षिपन्तीह '**नन्वतथाभूत**'मित्यादिना वेदवाक्यानामपि

**प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत् सदा ।**
**स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥**

---

पौरुषेयत्वमेवेति धिया । अथवा उत्तरत्र नित्यत्वप्रतिपादनमुखेन समाधानानभिधानात् पूर्वोक्तपरिहारे तृप्तिमलाभमानः प्रकारान्तरेण परिहारमाह— ' **अभ्युपेत्योच्यतेऽथवा** ' । इति त्रिपाद्या । यदि नित्याः वेदाः अपौरुषेयाः, तर्हि सुतरामप्रमाणत्वम् । कुतः पौरुषेयत्वाङ्गीकारे च वक्तृज्ञानप्रामाण्याधीनतया कामं प्रामाण्यं सिद्ध्येदपि, यदि तदवधार्येत । यदात्व पौरुषेयत्वं तदा वक्तृप्रामाण्यस्य त्यागात् सुतरां प्रामाण्यासंभव एव भवेत् । अत्र ' सुतरा'मिति प्रामाण्यासंभवदृढीकरणार्थं उक्तम् । तथा वेदस्य नित्यत्वाङ्गीकरणं वेदप्रामाण्यव्याहत्यै एव हि भवेत् । तथा चाहुरन्ये— 'किं हि नित्यं प्रमाणं दृष्टम् ? प्रत्यक्षादि वा यदनित्यं तस्य प्रामाण्ये कस्य वा विप्रतिपत्तिरिति । अतः न पूर्वोक्ताक्षेपभाष्यस्य मनागप्यनुपपत्तिः ।

ननु मा भूत् वक्तृप्रामाण्यं, तन्निरपेक्षतयैव शब्दप्रामाण्यस्य संभूतेः । स्वभावादेव प्रामाण्यसंभवादिति यावत् । उत्पन्नं ज्ञानं, अविपर्यस्तं असंदिग्धं च अप्रमाणं कथं भवेत । अतः अपौरुषेये वेदे स्वीकृते सुतरां अप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् इति पूर्वोक्तं नैव घटते इति शङ्कायामाह— ॥ **प्रमाणान्तरदृष्टं इति** ॥

लोके यथा प्रमाणगतिः तथैव किल अङ्गीकर्तव्यम् । लोके च पुरुषवचनं सर्वमपि प्रमाणान्तप्रमितार्थविषयकमेव दृश्यते । अतः न शब्दः स्वम-

नूनं तत्रानुभूतोऽसौ इत्याप्तोक्तिनिबन्धना ।
बुद्धिः साक्षाददृष्टेऽपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥

---

हिम्ना ( स्वभावादेव ) प्रमाणं भवेत् । तत्र दृष्टान्तः स्मृतिः । यथा स्मृतिः मूलभूतप्रमाणान्तरपरतन्त्रैव सती स्वतःप्रमाणं न भवति तद्वत् । अथवा स्मृतेः पूर्वानुभवनिरपेक्षायाः स्वतएव स्मृतित्वं यथा नैव भवति । तद्वत् पूर्वानुभवनिरपेक्षस्य शब्दस्य नैव प्रमाण्यं लोके कुत्रापि दृश्यते इति तथा च एवं प्रयोगः— शब्दः, न स्वतः प्रमाणं, प्रमाणान्तर-प्राप्तार्थप्रापणात् , स्मृतिवत् इति ॥ २२ ॥

एतावता शब्दस्य प्रामाण्ये प्रमाणान्तरदृष्टार्थविषयकत्वं कारण-मित्युक्तम् । नैतावन्मात्रं किं तर्हि परमाप्तप्रयुक्तत्वमपीति प्रदर्श्य अदृ-ष्टोऽप्यर्थः स्वेन, पुरुषवचनात् प्रतीयते दूरदेशवार्तासु, तत्कथं शब्दस्य अस्वतः प्रमाणत्वमिति शंकां परिहरति— ॥ **नूनं तत्रानुभूतोऽसौ इति** ॥

आप्तोक्तवाक्यं श्रुत्वा स्वेनादृष्टेऽप्यर्थे ज्ञानभाक् श्रोता एवं हि निश्चिनोति, अयमर्थः वक्त्रा अनुभूतः, इति । तथा च तत्रापि वक्तुः योऽनुभवः तत्पुरस्सरमेव हि शब्दः अर्थप्रमापकः , न स्वतन्त्रतया, कथं हि वक्तुः अनुभवकल्पनेति चेत् तत्र लिङ्गं उक्तिरिति । उक्तिर्नाम उच्चा रणं तच्च न नानुभवाभावे; अर्थं बुद्ध्वा शब्दरचनेति न्यायात् । तथा च वक्त्रनुभवानुमानद्वारा पुरुषवचनार्थबुद्धिरिति ।

नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥ २४ ॥

तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि ।
स्वातन्त्र्यात् न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥

---

यश्चार्थः न श्रोतुः प्रत्यक्षादिगोचरः, नैव च वक्तुः तत्र वाक्यस्य प्रामाण्यं नैव लोके दृष्टचरं इति वेदेऽपि तथैव स्यादिति चाह— **नात्मीयादन्यदीयाद्वादिति** ॥

स्वस्य वा परस्य ( वक्तुः ) प्रत्यक्षादिविषयत्वाभावे न तत्र शब्दस्य सत्यत्वं (प्रामाण्यं) दृष्टमिति शब्दरूपचोदनास्वपि तथैव स्यात् । चोदनार्थः न कस्यापि प्रत्यक्षग्राह्यः, न वा वक्ता आप्तः समस्ति । ततश्च चोदनैव धर्मे प्रमाणमिति प्रतिज्ञा न घटते ॥ २४ ॥

ननु कथं वाक्यादुत्पन्नं ज्ञानं असन्दिग्धं अविपर्यस्तं च प्रमाणान्तरेण, संवादाभावमात्रेणाप्रमाण्यं भवेत् इति चेदाह— ॥ **तेन सत्यपि विज्ञाने इति** ॥

यद्यपि वेदवाक्या अन्यस्माद्वा शब्दात् ज्ञानं जायते । न हि विज्ञानं ज्ञानमित्येतावन्मात्रेण प्रमाणम् । ज्ञानरूपत्वस्य प्रमाणतदितरसाधारणत्वात्, शब्देन ज्ञानमात्रं जायते नार्थसद्भावाद्भावमपेक्षते तथा च प्रतिभा-

**स्वर्गयागादिसंबन्धविषयाचोदना मृषा ।**
**प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥**

---

स्वतन्त्रा अनियतनिमित्ताच ज्ञानरूपापि न प्रमाणं स्वतन्त्रत्वात् तद्वदेव वेदादुत्पन्नमपि ज्ञानं भवेदप्रमाणमेवेति । स्वातन्त्र्यं नाम प्रत्यक्षादिरहितत्वं तथा च एवं प्रयोगः, वेदादुत्पन्नं ज्ञानं अप्रमा, स्वातन्त्र्यात्, प्रतिभावत् ? इति ॥ २५ ॥

एवमुपपादितमर्थं प्रयोगणान्येन दर्शयति– ॥ **स्वर्गयागादिसंबन्ध इति** ॥

स्वर्गयागादिसंबन्धबोधक चोदना(वेदः), इति पक्षनिर्देशः, मृषेति साध्यांशः, तत्र हेतुः प्रत्यक्षाद्यगतार्थत्वादिति । प्रत्यक्षादिचोदनाभिन्नप्रमाणैः योऽर्थो अनवगतः तद्बोधकत्वात् इत्यर्थः । तत्र च दृष्टान्तः, ईदृग्बुद्धादिवाक्यवत्, इति, अलौकिकार्थबोधकबौद्धादिवाक्यवत् । इति ।

अत्र चेदं विचारणीयं– प्रत्यक्षाद्यगतार्थत्वादिति हि हेतुः, स च पक्षत्वेनाभिमतचोदनायां नैव वर्तते इति स्वरूपासिद्धिः । भावना पदवाच्यस्य स्पन्दस्य यत्नस्य वा प्रत्यक्षादिभिरवगम्यमानत्वात्, अतः दुष्टमिदमनुमानमिति चेन्, न क्रियादिरूपभावनायाः प्रत्यक्षत्वेऽपि, स्वर्ग यागादिसंबन्धविषयकत्वस्य तत्राप्रत्यक्षत्वात । शब्दस्य च चोदनारूपस्य

साध्यसाधनसंबन्धएव विषयः, न हि केवलं भावयेत् इति वाक्यार्थः प्रसिद्ध्यति। संबन्धश्च प्रत्यक्षाद्यनवगत एवेति न पूर्वोक्तदूषणं घटते।

ननु चात्र पक्षवाचकचोदनापदेन, किं वैदिकचोदनामात्रं विवक्ष्यते उत चोदनासामान्यं, नाद्यः पक्षविशेषणस्य '**स्वर्गयागा**'दीत्यस्य व्यर्थत्वात् सर्वासामपि वैदिकचोदनानां स्वर्गयागादिभावनाविषयकत्वेन व्यावर्त्याभावात्। संबन्धस्य पुरुषव्यापारविषयत्वाभावेन पक्षस्याप्रसिद्धविशेषणत्वं, चोदनानां स्वर्गयागादिभावनाविषयकत्वात्।

नान्त्यः, चोदनासामान्ये वैद्याचार्यचोदनानामपि घटकीभूतत्वेन, तासां प्रमाणत्वस्य प्रत्यक्षदृष्टत्वेन च प्रतिज्ञायां प्रत्यक्षादिप्रमाणविरोधः अत एव च हेतुरयं भागासिद्धः, अनाप्तचोदनांशेन सिद्धसाधनता, सर्वासां चोदनानां पक्षीकृतत्वेन '**ईदृग्बुद्धादिवाक्यवत्**' इति दृष्टान्ताभावश्चेति प्रयोगोऽयमयुक्तः इति चेत्।

ब्रूमः–

प्रयोगेऽस्मिन् वैदिक्य एव चोदनाः पक्षवाचक चोदनापदेनाभिधीयन्ते न चोदनासामान्यं यथा व्याकरणे '**वृद्धि**'शब्देन आदैचः। न च तर्हि पक्षविशेषणवैयर्थ्यं, प्रत्यक्षविरोध, भागासिद्धिसिद्धसाधनत्वादिदोषवारणार्थं तस्य विशेषणस्यावश्यकत्वात कथं? '**वायुर्वैक्षेपिष्ठादेवता**'

यद्वा आप्तेनाप्रणीतत्वात् बालोन्मत्तादिवाक्यवत् ।

इत्यादेरपि पक्षत्वात्, तत्राप्रमात्वसाधने प्रत्यक्षविरोधः, प्रत्यक्षाद्यगतार्थत्वाभावेन (वायुगतक्षेपिष्ठत्वादेः हेतोर्भागासिद्धत्वं, 'आदित्योयूपः' इत्यादेः यथावस्थितार्थस्वीकारे अप्रमात्वस्य सिद्धसाधनत्वं च । तन्माभूदित्येतदर्थं स्वर्गयागादीत्यादिविशेषणं दीयते । तद्दाने च, स्वर्गादिसंबन्धबोधक चोदनासु नैव पूर्वोक्तदोषप्रसक्तिरिति, न चाप्रसिद्धविशेषणत्वदोषः पूर्वोक्तः प्रसज्यते । यागावच्छिन्नभावनाविषयकचोदना अपि आक्षेपतः स्वर्गयागादिसंबन्धविषया एव भवन्तीति पूर्वोक्तदोषाप्रसक्तेः । न च हेतोः अत्यन्तागृहीतार्थविषयकप्रत्यक्षादिभिरनेकान्त्यमिति वाच्यम् । प्रत्यक्षावगमानर्हार्थविषयकत्वात इति हेतुवाचकपदस्यार्थस्वीकारे दोषाभावात् । शब्दत्वे सतीति विशेषणदानेन वा पूर्वोक्तदोषपरिहारात् । दृष्टान्ते च ईदृगिनिपदं व्याप्तिग्रहणप्रतिपादनाय, न च अग्निहोत्रचोदनावाक्यार्थे दर्शपूर्णमासादिचोदनानां मृषात्वे सिद्धमिति सिद्धसाधनरूपदोषप्रसक्तिरिति वाच्यम् । 'स्वार्थे'इति तु विशेषणं न दत्तं, वाक्यान्तरार्थे च वाक्यान्तरस्य न चोदनात्वं, तदसंबन्धिशब्दत्वात् । चार्वाकप्रयोगाभिप्रायेणायंदृष्टान्तः, शाक्यप्रयोगे तु आदिशब्दोक्त अर्हदादि वाक्यं दृष्टान्तः इति न दोषः ।

पूर्वोक्तप्रतिज्ञायामेव हेत्वन्तरंदृष्टान्तान्तरं चाह— ॥ यद्वेति ॥

चोदनामृषात्वे आप्तेनाप्रणीतत्वं हेतुः, बालोन्मत्तवाक्य दृष्टान्तः । मीमांसकस्य प्रतिवादिनः मते वेदस्य केनाप्यप्रणीतत्वात आप्तेनाप्रणी

व्योमादिवच्च नित्यत्वात् प्रामाण्यस्य निराकृतिः ॥ २७ ॥

---

तत्वहेतुस्सिद्ध एव । वादिनस्तु अनाप्तप्रणीतत्वात् आप्तेनाप्रणीतत्व-हेतुरविकल एवेति उभयसिद्धत्वं, ननु च प्रत्यक्षादिभिरनेकान्त्यं इति चेत् शब्दत्वे सति इति विशेषणेनादोषात् ।

न च बालोन्मत्तवाक्यादिष्वपि किञ्चित् सत्यमप्यस्तीति दृष्टान्तः साध्यविकलः इति वाच्यम् । बालादीनामेव वाक्यमित्यभिप्रायात् । यथा 'राजयज्ञः' इति अश्वमेधादिरेवोच्यते तद्वत् ।

पूर्वोक्तपाध्ये हेत्वन्तरं दृष्टान्तान्तरं चाह— । 'व्योमादिवच्च इति' ॥

वेदाः अप्रमाणं नित्यत्वात् व्योमवदिति प्रयोगः अत्राभिप्रेतः, ये तावत् बौद्धाः व्योम्नः नित्यत्वं अभ्युपगच्छन्ति तन्मतानुसारेणायं प्रयोगः इति विभावनीयम् । अतः न प्रतिवाद्यसिद्धिदोषः ।

वस्तुतस्तु नात्र साधनमभिप्रेतम् अपि तु दूषणम् । अन्यथा वादिना चोदनाकाशयोः नित्यत्वानभ्युपगमादेव हेतोरसिद्धिः, दृष्टान्तश्च साधनविकल इति दूषणस्यापरिहारात् । मीमांसकेन यत् चोदनाप्रामाण्यं प्रतिज्ञातं तत्र तत्सिद्धेन नित्यत्वेनैव स्वयमनुमानविरोधं प्रदर्शयति, अथवा मीमांसकेन चोदनाप्रामाण्यसिद्धौ यो हेतुः प्रदर्श्यते, नित्यत्वादिति तस्य विरुद्धत्वं प्रदर्शयन्ति । अत एव वार्तिके अत्र 'प्रामाण्यस्य निराकृतिः' इति प्रोच्यते । निराकृतिः दूषणमेव, न तु साधनम् दूषणं च परसिद्धमपि भवति । इति न दोषः ।

**यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।**
**स्वतो वा न प्रमाणं स्युः वाक्यत्वात् पुरुषोक्तिवत् ॥ २८ ॥**

---

अथ वादी नास्तिकोऽपि नैयायिकमतानुज्ञया ( श्रावगहकन्नह-क्रमेण ) मीमांसकानिष्टसाध्यान्तरे प्रयोगान्तरं प्रदर्शयति— ॥ **यदि वा इति** ॥

अत्र सर्वचोदना इति पक्षनिर्देशः । पुरुषाधीनप्रामाण्याः इति साध्य-निर्देशः । अयं भावः यद्यवश्यं वेदाः प्रमाणमिति वक्तव्यमित्याग्रहः तर्हि **'तद्वचनादाम्नायस्य प्रामाण्यं'** इति वैशेषिकोक्तदिशा पुरुषाधीन-तया प्रामाण्यं स्वीक्रियताम् । न पुनः नित्याः वेदाः प्रमाणं इति मीमां-सकसंमतरीतिः घटते । इति ।

नन्वयुक्तमिदं— वेदत्वावच्छेदेनाप्रामाण्यवादिनः बौद्धस्य पुरुषाधीन प्रामाण्यसाधने स्वाभ्युपगमविरोधः, परतः प्रामाण्यवादिनः नैयायिकस्य अप्रामाण्यप्रस्तावे अवसर एव नास्ति । यदि च प्रकृतानुमाने साध्य-वाचकपदस्य स्वतः प्रामाण्याभावः अर्थः इत्युच्येत, तर्हि **'स्वतो वा न प्रमाणं स्युः'** इति एतच्छ्लोकतृतीयपादेन पुनरुक्तता भवेत् । एवं 'वाक्यत्वात्' इति हेतुश्चानाप्तवाक्येनानैकान्तिकः । अप्रामाणिक पुरुषवाक्यमादाय दृष्टान्ते साध्यवैकल्यंचेति नानेनानुमानेन मीमांसक-दूषणं घटतेति ।

प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।

---

अत्र ब्रूमः— बौद्धास्तावत चोदनायाः धर्मे परं प्रामाण्यं नाभ्युपगच्छन्ति इति न वेदवाक्यानां पुरुषाधीनप्रामाण्यसाधने स्वाभ्युपगमविरोधः, वाक्यविशेषविवक्षायां च प्रमाणतया सिद्ध्यन्ती चोदना न तेषां बाधिका भवेत् । तत् चैतत् धर्मं प्रति चोदनायाः प्रामाण्यनिरासाय साध्यते इति प्रकृतोपयोगश्चाक्षत एव । वाक्यत्वहेतोः अनाप्तवाक्ये व्यभिचारपरिहारश्च प्रमाणत्वे सतीति हेतोर्विशेषणदानेन भविष्यति । अत एव दृष्टान्ते साध्यवैकल्यदोषपरिहारोऽपि ।

अत्रैव हेतौ साध्यान्तरं च प्रदर्शयति— **स्वतो वा न प्रमाणं स्युः' इति** । ननु माभूत् स्वतः प्रामाण्यं परतः प्रामाण्यं तु न निषेद्धुं शक्यते । विशेषप्रतिषेधेऽपि विशेषान्तराभ्यनुज्ञानात् ,इति चेत् न, चोदनाविषयधर्मस्य प्रत्यक्षादिप्रमाणान्तराविषयत्वेन संवादो न भवेत् । वादिप्रतिवादिभ्यां उभाभ्यामपि परतः प्रामाण्यानभ्युपगमे, संप्रति स्वतः प्रामाण्यमपि न भवितुमर्हतीति निषेधे परिशेषादप्रामाण्यमेव स्थिरीकृतं भवेत् इत्याशयः ।

प्रामाण्यं पक्षीकृत्य प्रयोगान्तरं प्रदर्शयति— ।। **प्रामाण्यमिति** ।।

**प्रामाण्यरूपे धर्मिणि** नरापेक्षत्वं (नरगुणापेक्षत्वं) साध्यते, तत्र च हेतुः शब्दैः संबध्यमानत्वं इति । तत्र च दृष्टान्तः अप्रामाण्यम् ।

शब्दैः संबध्यमानत्वात् अप्रमाण्यं यथैव हि ॥ २९. ॥

न स्यात् वक्तृगुणानां चेत् वचः प्रामाण्यहेतुता ।

---

एवं च मीमांसकमते वेदस्यापौरुषेयत्वेन पुरुषाधीनत्वाभावादप्रमाण्यमेव तस्येति । अत्र सर्वशब्देष्विति च प्रामाण्यरूपपक्षविशेषणभावे प्रत्यक्षादिकमादायाभ्युपगमविरोधः, तन्निष्ठप्रामाण्यस्य नरापेक्षत्वाभावात् । अतः तन्निरासार्थं सर्वशब्देष्विति विशेषणम् । प्रामाण्यस्य पक्षत्वेन (उद्देश्यत्वेन) अनुवादात् न वेदवाक्यानां प्रामाण्यापत्तिरूपाभ्युपगमविरोधः न च शब्दत्वस्य शब्दनिष्ठस्य नित्यत्वेन नरापेक्षत्वाभावात्, तत्र च हेतोः प्रकृतस्य सद्भावात् व्यभिचारः इति वाच्यम् । एवं शब्दार्थयोः वाच्यवाचकभावसंबन्धस्वीकारेण संबन्धिनः पर्वतादेरर्थस्य पुरुषानपेक्षजन्मवतः विपक्षस्य, शब्दैः संबध्यमानत्वरूप प्रकृतहेत्वाधिकरणत्वेनानैकान्तिकताचापरिहार्येति वाच्यम् । स्वतः परतोवे तीदृशविचारापन्नत्वे सतीति विशेषणदानेनादोषात् । न च मृगतृष्णिकाजलज्ञानाप्रमाण्ये दृष्टान्ते हेतोरभावेन दृष्टान्ते हेतुविकलतेति वाच्यम् । अप्रामाण्यसामान्यस्य दृष्टान्तीकरणेनादोषात् ॥ २९ ॥

शब्दप्रामाण्यस्य नराधीनत्वं (पुरुषगुणाधीनत्वं) अवश्यमेवाङ्गीकार्यम् । लोके पुरुषगुणानां शब्दप्रामाण्ये अन्वयव्यतिरेकाभ्यां हेतुत्वसद्भावात् अन्यथा च पुरुषनिष्ठस्य दोषस्य अप्रमाण्यहेतुत्वमपि सिद्धान्तसंमतं न सिद्ध्येत् । इत्याह— ॥ नस्यात् इति ॥

वक्तृगतगुणानां वचः ( शब्द ) प्रामाण्यं प्रतिहेतुत्वं न स्यात् ( चेत् ) वक्तृदोषैर्वा अस्य ( शब्दस्य ) अप्रमाणत्वं किं भविष्यति ।

तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥

एवं स्थिते तु वेदस्य सति वा असति वा नरे।
प्रामाण्यं दुर्लभं मत्वा नन्वित्येदचूचुदत् ॥ ३१ ॥

---

कुतो भविष्यति। अयं भावः। लोके कारणविपर्ययात् कार्ये विपर्ययो दृष्टः, यथा तेजःकारणकस्य धर्मस्य औष्ण्यस्य जलनिष्ठस्य तद्विपर्यये जले विपर्ययः (शैत्यम्)। एवं शब्दप्रामाण्यस्यापि वक्तृगुणविपर्ययात् विपर्ययो दृष्टः। अतः इदमपि तत्कारणकम्। इति। अतः वाक्यप्रामाण्यं, नरापेक्षं, नरान्वयव्यतिरेकानुविधायित्वात् अप्रामाण्यवदिति प्रयोगः प्रदर्शितो भवति। अतः मीमांसकमतमयुक्तमिति ॥ ३० ॥

पूर्वोक्तं सर्वमुपसंहरति— ॥ एवं स्थिते इति ॥

पूर्वोक्तप्रकारेण शब्दप्रामाण्यस्य पुरुषगुणाधीनत्वे स्थिते, यदि मीमांसकः अस्ति च वेदस्य कर्ता इति स्वीकुर्यात् तथापि वेदप्रामाण्यं न सिद्ध्येत् प्रमाणान्तराविषये धर्मे तस्याप्तत्वायोगात्, तस्मिन् गुणमद्भावे प्रमाणभावाच्च। आगमस्य च तत्प्रणीतस्य तद्गुणसद्भावे प्रमाणत्वायोगात् यदि च वेदकर्ता नास्ति ततः सुतरां प्रामाण्यहेतूनां पुरुषगुणानामभावात् दूरोत्सारितमेव हि वेदप्रामाण्यं भवेत्। तदेवं दुर्लभं वेदप्रामाण्यमिति मत्वा भाष्यकारः 'नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना' इत्याक्षेपं प्रदर्शयामास ॥ ३१ ॥

**तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते ।**
**ततोऽपि, प्रत्ययोत्पत्तेः, तस्माज्जात्युत्तरं त्विदम् ॥ ३२ ॥**

**सर्वविज्ञानविषयमिदं तावत् परीक्ष्यताम् ।**

---

एवमाक्षेपभाष्यस्याभिप्रायं वर्णयित्वा तत्र यत् परिहारभाष्यं '**विप्रतिषिद्धमिदमभिधीयते । ब्रवीति, वितथं चेति**' इति । तद्विवरिष्यन् आक्षिपति— ॥ **तत्र विप्रतिषिद्धत्वं इति** ॥

इदं च भाष्यमयुक्तम्, **यत् ब्रवीति 'तद्वितथं'** इति **'विप्रतिषिद्ध'**मिति वदन् भाष्यकारः, ज्ञानजनकं सर्वं प्रमाणमिति मन्यते, तत्कथं युज्यते ? न हि येन येन ज्ञानं जायते तत्सर्वं प्रमाणमिति भवति । तथा सति, बुद्धवाक्यं, मृषा, इति मीमांसकेन प्रतिज्ञाते बौद्धेनापि एवं वक्तुं (निराकर्तुं) शक्येत विप्रतिषिद्धमिदं अभिधीयते, ब्रवीति वितथं (अप्रमाणं) चेति, इति । ततश्च मीमांसकानां पक्षः प्रतिहत एव स्यात । तस्मात् इदं जात्युत्तरम । जातिर्नाम वादिना स्वपक्षस्थापनाय कस्मिंश्चित् हेतौ प्रयुक्ते यो हेतुः तत्प्रतिषेधायासमर्थः स हेतुः । सर्वत्र साधारणत्वात् अस्य हेतोः अनुत्तरमिदमित्याशयः । उत्तराभासमिति यावत ॥ ३२ ॥

अथेदानीं आक्षिप्तं भाष्यमसमाधायैव तत्समाधानोपयिकीं तावदौपोद्घातिकीं चिन्तां प्रस्तौति— ॥ **सर्वविज्ञानमिति** ॥

एवमत्र चिन्त्यते— किं ज्ञानस्य प्रामाण्यं अप्रामाण्यं चेत्युभयं स्वत एव निर्णीयते, किं वोभयं कारणगुणदोषादिना भवति । अथा-

प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथ वा ॥ ३३ ॥

---

प्रामाण्यं स्वतः प्रामाण्यं परत इति आहो एतद्विपरीतमिति । नन्वत्र चोदनाप्रामाण्यसदसद्भावविचारे प्रस्तुते तत्प्रामाण्याक्षेपरिहारः किल वक्तव्यः, तमकृत्वा सर्वविज्ञानप्रामाण्यपरीक्षणमसंगतम् । अप्रस्तुतत्वात् इति चेत्—

चोदनाप्रामाण्यसिद्ध्यर्थमेव निश्चितप्रामाण्याप्रामाण्येषु ज्ञानेषु कथमप्रामाण्यं प्रामाण्यंवेति परीक्ष्यते । कुतः, यावद्धि ज्ञानस्वभावानुबन्धि प्रामाण्यमिति न सामान्यतः साध्येत तावत् क्वचिद्विशेषे साधितेऽपि प्रामाण्ये एवं शङ्का भवेत्, शाब्दज्ञानं, स्वतः न प्रमाणं ज्ञानत्वात् ज्ञानान्तरवत् इति । यद्रूपं च यज्जातीयानुबद्धं तज्जातीयान्तरमपि नातिक्रामति, यथा चौष्ण्यं अग्निजातीयम् । एवं च यदा परतः प्रामाण्यं ज्ञानत्वजात्यनुबद्धं तत् कथं शाब्दं ज्ञानमतिक्रामेत् । उक्तं च 'सामान्यानुगता शक्तिर्या काचन निरूपिता । तदन्विता विशेषोऽपि तद्वारव्यपदेशभाक्, इति । यदा हि सर्वज्ञानानामौत्सर्गिकं प्रामाण्यं, अप्रामाण्यं च बाध, कारणदोषाधीनं चेति सिद्ध्येत् तदा वेदे चापौरुषेये अप्रामाण्यकारणस्योभयस्याप्यभावात् निश्चितार्थज्ञानजननाच्च प्रामाण्ये सिद्धे यदि ज्ञानजननेऽपि ज्ञानाभावरूपाप्रामाण्यमाशङ्क्येत तत्र भाष्यकारः दूषणमाह विप्रतिषिद्धमिदं, ब्रवीति (ज्ञानंजनयति) वितथं (ज्ञानं न जनयति) इति । सर्वज्ञानानुबन्धि स्वतः प्रामाण्य आगन्तुनाप्रामाण्येनापह्नूयते इति साधिते विना चापवादं वेदानां प्रमाण्य इति सर्वग्रहणं युक्तमेव ॥

स्वतोऽसतां अमाध्यत्वात् केचिदाहुर्द्वयं स्वतः ।

---

पूर्वोक्तपक्षचतुष्टये 'द्वयं स्वतः' इत्याद्यपक्षमुदाहरति—

सत्कार्यवादिनो हि सांख्याः कार्यं सर्वं कारणे सदेव हि भासते इति मन्यन्ते । एवं प्रामाण्यं अप्रामाण्यं चेत्युभयमपि स्वत एवेति च स्वीचक्रुः । स्वयमतदात्मनः भगवताऽपि तादात्म्यापत्तेः सर्वथा कर्तुमशक्यत्वात् । न हि अग्नौ गन्धः सिकतासु वा तैलं साधयितुं शक्यते । यच्च स्वतो न सत् तन्न साध्यं शशशृङ्गवत् । न च घटपटादयः साध्याः तस्मात् ते स्वतः सन्ति इति । न च कारकव्यापारवैयर्थ्यशङ्का सत्कार्यवादपक्षे । अभिव्यक्तिफलकत्वेन कारकव्यापारसार्थक्यात् । न च तर्हि कार्यं घटादि उत्पद्यते इति व्यवहारः कथं ? अभिव्यज्यते इति किल व्यवहारः स्यात् इति वाच्यम् । अभिव्यक्तिभेदाभ्युपगमेनादोषात । द्वेधाह्यभिव्यक्तिः उपलभ्यते । ज्ञानप्रतिबन्धकनिराकरणेनैका, अपरचाकारप्रतिबन्धनिराकरणेन, आद्या यथा घटाद्युपलब्धौ अन्धकारेण प्रतिबद्धायां दीपेन अन्धकारापसरणेन घटाद्युपलब्धौ अन्या तु, यथा मृदि घटाकारः पूर्वाकारेण प्रतिबद्धः तस्य पूर्वाकारस्य दण्डचक्रादिनोत्सारणेन घटाभिव्यक्तिः । एतादृशाभिव्यक्तिविशेषे उत्पत्तिशब्दः यथा ब्राह्मणविशेषे कठकौण्डिन्यशब्दः । अथ स्यात्, अभिव्यक्तेः सत्त्वे कारकव्यापारवैयर्थ्यं, असत्त्वे तु असत्कार्यवादस्वीकारापत्तिः इति

अपरे कारणोत्पन्न गुणदोषावधारणात् ॥ ३४ ॥

---

न स्यात् । अभिव्यक्तिः पूर्वं न सतीति स्वीकारेणादोषात् तर्हि घटादावप्येवमेव स्यादिति अतिप्रसक्तिरिति चेत् । भवतोऽप्येतादृश-दोषापरिहारेणातिप्रसङ्गसाम्यात् । कथं ? भवन्मतेप्यन्धकारतिरोहितघटा-देरभिव्यक्तौ घटस्सन्, अभिव्यक्तिरसतीति किल सिद्धान्तः, अन्यथा हि अन्धकारेऽपि घटोपलब्ध्यापत्तिः । तत्र चैवं शक्यं हि प्रसञ्जयितु, अभिव्यक्तिवत् घटोऽपि जन्येत, घटवत अभिव्यक्तिरपि सत्येवेति वा स्यात् इति । अतः उभयोरपि तुल्यप्रसङ्गात् नान्यतरः पर्यनुयोगार्हः भवति । सत्कार्यवादिनः उपादाननियमदर्शनादिक लोकदृष्टं अनुकूलं, असत्कार्य वादिनस्तु घटार्थी सर्वत्र प्रवर्तेत, असत्वाविशेषात् इति लोकप्रतिहतिः, एतद्विस्तरस्त्वन्यत्र । प्रकृतमनुसरामः । प्रामाण्याप्रामाण्ये स्वत एवेति ॥३३॥

अनन्तरं उभयोरपि परतस्त्ववादिनां पक्षमाह— ॥अपरे इति॥

सर्वस्यापि कार्यजातस्य उत्पत्तौ किञ्चित्कारणसापेक्षत्वात् कारण-गतगुणदोषयोः कार्येपि संक्रमाच्च कार्यं ताभ्यां दुष्टमदुष्टं च भवति । इदं लोके सर्वेषां संमतमेव । एवं ज्ञानस्य कार्यरूपस्य कारणभूतेन्द्रियादि परवशस्य यावत् इन्द्रियादिज्ञानकारणवशादुत्पन्नगुणदोषावधारणं न भवति स्वतः, तावत प्रामाण्याप्रामाण्ययोरन्यतरस्यापि न निश्चयो भवेत् । तदर्थं च इतरापेक्षणम् । तस्मात् कारणोत्पन्नगुणदोषावधारणादेव द्वयं (प्रामाण्याप्रामाण्ये) चाहुः । इत्यन्वयः ॥ ३४ ॥

**स्वतस्तावद् द्वयं नास्ति विरोधात् परतो न च ।**
**निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥**

---

एवमुपपादितपक्षद्वयं क्रमेण तावत् दूषयति— ॥ **स्वतस्तावदिति** ॥

प्रमाणत्वाप्रमाणत्वे न स्वतः ज्ञानव्यक्तौ संभवेताम्, तत्र च कारणं विरोधात्, इति । अयं भावः । किमेकस्यामेव ज्ञानव्यक्तौ उभयं वर्तते इति, उत ज्ञानभेदेन इति । आद्ये हि विरोधो परिहार्य एव भवेत् । प्रमाणत्वाप्रमाणत्वयोरुभयोरपि परस्परपरिहारस्थितिलक्षण विरोधस्यापरिहारात् । विरुद्धे च ते कथं एकव्यक्तिनिवेशं लभेताम् न द्वितीयः कल्पः, स्वसिद्धान्तहान्यापत्तेः । एकज्ञानावच्छेदेनैवोभयं इति किल भवदभिमतं । अतः यथा नैकस्याग्नेः शीतत्वोष्णत्वसंभवः एवं न ज्ञानस्यैकस्यप्रमाणत्वाप्रमाणत्वसंभवः इति प्रामाण्याप्रामाण्यात्मक द्वयं न स्वतः स्वभावविरोधात् । परतो द्वयमिति पक्षोऽपि न घटत इति चाह— **परतो न चेति** ॥ तत्र हेतुं प्रदर्शयति **निःस्वभावत्वमित्यादिना** । ज्ञानस्य चोत्पन्नस्य कारणदोषाद्यवधारणात् अन्यस्माद्वा कस्माच्चित् प्रमाणत्वाप्रमाणत्वे यदिस्यातां, तर्हि ज्ञानस्यस्वभावान्तरादर्शनात् (प्रमाणत्वाप्रमाणत्वभिन्न) स्वतः निःस्वभावत्वं इत्येव हि स्यात् । अथ अन्यतर धर्मकमेव हि ज्ञानं प्रागनवधृततथाभावं पश्चादवधार्यते इति चेत् न गुणावधारणाधीननिश्चयाङ्गीकारात् । तदवधारणात् प्राक च निश्चयस्यैवाभावात् । कथं वा प्रामाण्यं आसीत इति कथ्यते । एवं

कथंह्यन्यानपेक्षस्य विपरीतात्मसंभवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥

---

च पूर्वं निश्चितरूपमेव ज्ञानं यदि जातं तत्र किंगुणावधारणेन क्रियते ? अतः स्वतः प्रमाणतयैवोत्पन्ने ज्ञाने दोषमाशङ्कमानः तन्निरासाय प्रयतते इति तु समीचीनम । एतच्चोत्तरत्र विचार्येत ।

नन्वेकस्मिन्नेव वस्तुनि कालभेदेन विरुद्धधर्मसमावेशः दृष्टचरः यथा एकस्यामेव जलव्यक्तौ अग्निसंयोगे औष्ण्यम् । यथा एकद्रव्ये रक्तत्वारक्तत्वे तद्वत् प्रामाण्याप्रामाण्ये स्याताम् अतः '**विरोधात्**' इति पूर्वोक्तहेतु रनुपपन्नः । एवं **नापिपरतः निःस्वभावत्वमेवं**' हि इति यदुक्तं तदपि न घटते, ज्ञाने, प्रमाणत्वाप्रमाणत्वयोरसत्वेऽपि, सत्त्व, ज्ञानत्व, प्रमेयत्वादिस्वभावसद्भावेन निःस्वभावत्वप्रसङ्गासंभवात् , अतः द्वितीयदूषणमप्यनुपपन्नमिति शङ्कायामाह– ॥ **कथमिति** ॥

एकस्य द्रव्यस्य कालभेदेन रक्तत्वारक्तत्वशीतत्वोष्णत्वादीनां अन्या पेक्षाणां संभवः घटेत । आधारभूतस्य च द्रव्यस्य स्थिरत्वात् ज्ञाने तु नैवं संभवति क्षणिकत्वात् तस्य । स्वत एव द्वयं इति वादिनः प्रमाणत्वाप्रमाणत्वे प्रति विरुद्धधर्मसमावेशः कालभेदेनापि नोपपादयितुं शक्यते अतः विरोधात् इति पूर्वं यदुक्तं तत्समीचीनमेव ।

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥

---

एवं द्वितीयहेतुदूषणमपि न घटते । सर्वं हि ज्ञानं स्वभावद्वयान्तर्भूतं प्रमाणं उताप्रमाणं इति । न च स्वभावान्तरमवशिष्यते ; पूर्वोक्तसत्त्वगुणत्वज्ञेयत्वादीनां अन्यतरांशपातित्वमेव । एवं च सति कारणगुणदोषावधारणाधीनप्रामाण्याप्रामाण्याभ्युपगमे च तदवधारणात् प्राक् ज्ञानं स्वभावद्वयेनापि शून्यं किं स्वभावं किमात्मकं च स्यात् ? अतः सुष्ठुक्तं 'निःस्वभावत्वमेवं हि' इति ।

अथ विरोधनिराचिकीर्षया भिन्नव्यक्तिसमाश्रितं द्वयं स्वभावतः नीलपीतादिवदिति ब्रूमः इति चेत् तत्राप्यनुपपत्तिमाह— ॥ **विज्ञानव्यक्तिभेदेन इति** ॥

विज्ञानव्यक्तिभेदं अङ्गीकृत्य विरोधपरिहारः प्रामाण्याप्रामाण्ययोरिति चेत् तत्र परिहारमाह— **तथापीति** । अयमाशयः— सर्वेषां ज्ञानानां न ज्ञानत्वातिरिक्तं प्रामाण्याप्रामाण्यनियामकं किञ्चित् चिह्नं भवता स्वीक्रियते, स्वतश्च कश्चन विशेषः न प्रतिभासते । संवादविसंवादादेः नियामकत्वं च स्वतोद्वयं इति वादिनां नैवाभिमतं तथात्वे वा स्वाभाविकत्वहानिः । अतः क्व ज्ञानव्यक्तौ प्रामाण्यं क्व वा तत् संभवतीत्यत्र नियामकाभावेन व्यवहारोच्छेदः प्रसज्येतेति ।

तस्मात् स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यं च परापेक्षं अत्र न्यायोऽभिधीयते ॥ ३८ ॥

---

इदं तावदत्र विचारणीयं- प्रामाण्याप्रामाण्ययोः स्वतस्त्वे, परतस्त्वे वा चोदनाप्रामाण्यविरोधाभावात , कुतो वा महता प्रयत्नेन पक्षद्वयनिरासः क्रियते । तथा हि प्रथमपक्षे (उभयोः स्वतस्त्वे) हि चोदनानां स्वत एव हि प्रामाण्यं निराबाधम् । उभयोः परतस्त्वात्मकद्वितीय पक्षे च, अप्रामाण्यकारणदोषाभावादेवाप्रामाण्यस्य न प्रसक्तिः, अतः प्रमाणमेव वेदाः भवन्तीति, नैतत्पक्षद्वयनिरासावश्यकतेति, । यः पुनरप्रामाण्य स्वतः, प्रामाण्यं परतः इति वदेत् , स च निराकरणीय एव । वेद प्रामाण्यपरिपन्थित्वात्तस्य । इति तत्रेदमुच्यते । प्रथमपक्षे ( उभयोः स्वतस्त्वं ) वेदस्य अविश्वासात्मकं फलतः अप्रामाण्यं भवेत् । स्वाभाविके चोभयस्मिन् अन्यतरनिर्णायकबाह्यकारणादर्शिनां नैकत्रापि विश्वासो भविता । सर्वत्र प्रमाणानुसरणं नादृष्टार्थं अपि तु व्यवहारार्थं । अविश्वासे तु व्यवहाराभावात् फलतः अप्रमाण्यमापद्येतैव ॥ ३७ ॥

एतावता उभयं स्वतः परतो वा इति पक्षद्वयमपि प्रदूष्य संप्राति पक्षान्तरमुपन्यस्य निराकरणाय प्रयतते- ॥ तस्मादिति ॥

यस्मात् प्रामाण्यं स्वतः परतोवेति पक्षद्वयं च न घटते, तस्मात् अप्रामाण्यं ज्ञानानां स्वतः स्वाभाविकं इति स्वीक्रियताम् । प्रामाण्यं च

**अप्रामाण्यमवस्तुत्वात् न स्यात् कारणदोषतः ।**
**वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥३९॥**

---

परतः इति । युक्तं चैतत्, ज्ञाने जातेऽपि अनेकधा दृष्टव्यभिचारः पुरुषः निर्विचिकित्सं न व्यवहारमाणः दृश्यते ; यावत् गुणवदिन्द्रियकारणजन्यत्वं न दृष्टं, संवादो वा न दृष्टः । अतः प्रामाण्यस्य व्यवहारफलकत्वात् तस्य चाभावेनाप्रामाण्यमेव स्वतः, प्रामाण्यं च परतः इति निश्चीयते । अत्र च न्यायः (तर्कः) अभिधीयते ॥३८॥

अप्रामाण्यं स्वतः प्रामाण्यं च परतः इति पूर्वोक्तप्रतिज्ञाद्वयेऽपि-न्यायं तावत् प्रदर्शयति - ॥**अप्रामाण्यमिति**॥

अप्रामाण्यं हि प्रामाण्यस्याभावः, स चाभावः अवस्तुरूपः अत एव च केनचित् हेतुना नैव जन्यते । अतः दोषाज्जायते अप्रमाण्यं इति सिद्धान्तिपक्षः नैव युज्यते, अतज्जन्यत्वादेव च ततोऽवधारणं च तस्य न भवितुमर्हति तथा च**अप्रामाण्यं** पक्षीकृत्य, **न स्यात् कारणदोषतः**, इति साध्यते, **अवस्तुत्वादिति**चेदं हेतुप्रदर्शकम । तथा च **अप्रामाण्यं न कारणवत्**--. **अवस्तुत्वात्** । यथा शशविषाणम् इति प्रयोगः प्रसिद्ध्यति । **अत्रेदं विचारणीयम्** । अप्रामाण्य नाम प्रामाण्याभावः इति किलोक्तम् । स च प्रध्वंसादिरूपः । तस्य चतुर्विधस्याप्यभावस्य वस्तुरूपत्वेनेष्टत्वात् मीमांसकानां (गुरु) असिद्धेऽयं हेतुः **अवस्तुत्वादिति** । यदि चाभावस्य भावान्तरत्वरूपवस्तुत्वं नाङ्गीक्रियते (भाट) इत्युच्यते, तथाऽपि घटादिप्रध्वंसमादाय व्यभिचारः, तेषाम-

वस्तुत्वेऽपि कारणजन्यत्वात्, अतः पूर्वोक्तानुमानस्य कथं साधुत्वम् ? इति ।

अत्र ब्रूमः— अप्रामाण्यस्वतस्त्ववादी बौद्धः अभावं तुच्छं मन्वान: न वस्त्वन्तरत्वं स्वीकरोति । वस्त्वन्तरत्वस्वीकारे चानुपपत्तिं च प्रदर्शयति । यदि वस्त्वन्तरं स्यात् सत्यपि तस्मिन् भावस्यापि पूर्ववत् दर्शनं स्यात् ; अविशेषात् । न हि लोके घटोपलब्धिवेलायां पटोपलब्धिः विरुद्धा भवात । ननु भोः भावान्तरविरोधित्वात् अभावस्य न पूर्वोक्तदोषः इति चेत्, नैवम्— भावस्य अभावः किंचित्करो न वा ? आद्ये किञ्चित्करत्वं, नाम न भावोत्पादकत्वं, तस्य स्वहेतोरेव जायमानत्वात् , अर्थान्तरकरणं च भावस्य अपूर्वदर्शनं भवेत् । न द्वितीयः, विरोधप्रसक्तेरभावात अकिञ्चित्कुर्वत । अन्यथा अतिप्रसक्तेरपरिहारात् । तस्मात् अभाव इति नास्तीत्यर्थः । उक्तं च—

"न तस्य किञ्चिद्भवति न भवत्येव केवलम्"

इति । अतो न पूर्वोक्तानुमाने हेत्वसिद्धिदोषः । यदुक्तं, घटादिप्रध्वंसमादाय व्यभिचारः इति । तत्रापि ब्रूमः— वादिना बौद्धेन तस्य हेतुजन्यत्वानङ्गीकारात् । केवलं प्रतिवादिनमुद्दिश्यायं प्रयोगः, अतो न दोषः । तस्मादवस्तुत्वादप्रामाण्यं न परतः, किं तु स्वत एव प्रामाण्यं तु वस्तुत्वात् परापेक्षं, इत्याह— 'वस्तुत्वात् तु' इति । अत्रायं प्रयोगः अभिप्रेतः, प्रामाण्यं, कारणजन्यं, वस्तुत्वात्— घटवत् , इति बौद्धमते अकार्यं (नित्य) वस्तुनः अनङ्गीकारात् न तदादाय हेतोरनैकान्तिकत्वशङ्का भवेत । आकाशोऽपि तन्मतरीत्या आवरणाभावः (अवस्तु) कति न दोषः वार्तिके 'गुणै'रिति चानुवादमात्रं, न तु तेषामपि व्याप्ति-

घटकत्वं, कारणगुणाः प्रामाण्ये कारणमिति भावः ।

ननु 'गुणैः प्रामाण्यमुपजन्यते' इति वदतः विज्ञानकारणगुणजन्यत्वं किलाभिप्रेतं भवेत् । तदा प्रामाण्यं, 'विज्ञानकारणगुणजन्यं, वस्तुत्वात्' इति प्रयोगः सिद्ध्येत्, तर्हि विपक्षभूतघटादौ व्यभिचारः स्यात्, तेषां च वस्तुत्वेऽपि ज्ञानकारणगुणजन्यत्वाभावात् । यदि च गुणवत्कारणजन्यत्वमेवाभिप्रेतं, तर्हि घटादीनामपि सपक्षत्वेन न दोषः इत्यङ्गीक्रियेत, तर्हि दुष्टकारणजन्यवक्रघटादौ अनैकान्तिकता, यदि च साध्यं जन्यमित्येवाभिमतं, तर्हि सिद्धसाध्यत्वम् । मीमांसकैरपि प्रामाण्यस्य नित्यत्वानभ्युपगमात् । गुणैरिति पदं च व्यर्थम् । नित्यव्योमादिभिः व्यभिचारश्च इति चेत्

अत्र ब्रूमः— प्रामाण्यं कार्यमित्येवात्राभिप्रेतम् । तर्हि सिद्धसाधनदोषः इति तु नैव भाव्यम् । कार्यत्वे सत्यपि अन्वयव्यतिरेकाभ्यां कारणगुणकार्यत्वसिद्ध्यर्थं प्रयोगात् । आकार्यत्वे च तदन्वयव्यतिरेकौ अन्यथासिद्धौ भवेताम् । यथा अप्रामाण्यस्वतस्त्वे कारणगुणदोषान्वयव्यतिरेकौ नित्यैराकाशादिभिः वस्तुत्वहेतोरनैकान्तिकत्वशङ्कापि न युज्यते। वस्तुत्वत्वस्य, अर्थक्रियाकारित्वस्य नित्यत्वेऽभावात् । क्रमयौगपद्याभ्यां नित्यानां अर्थक्रियाविरोधात् । अतश्च पूर्वोक्तप्रयोगः न दुष्टः इति प्रामाण्यं परत एवेति सिद्ध्यति ।

ननु ज्ञानस्य प्रामाण्यं परतः इति यदुच्यते, तन्न घटते । कथं ? पूर्वकालिकं च ज्ञानं नेदानीं वर्तते, क्षणिकत्वात्तस्येति न तस्य प्रमाणभावः वक्तुं शक्यते । यदा न तदासीत् तदा स्वाभाविकेनाप्रामाण्येनाभि

प्रामाण्यं हि यदोत्सर्गात् तदभावोऽप्यकृत्रिमः ।
तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥४०॥

---

भूतमेवातिष्ठन उत्तरकालं च तदसत् । एवं च अन्यतः प्रामाण्यं इति वचः रिक्तमेवेति चेत्- ब्रूमः । गुणसंवादज्ञानोत्तरकालभावि-प्रमाणं पूर्वज्ञानादन्यदेव ज्ञाते च कस्मिन्नर्थे पूर्वं अनेकधा अवगत-व्यभिचारः अजातविश्वासः न निश्चिततया व्यवहर्तुं प्रभवति । यावता इन्द्रियादिकारणगुणावधारणपूर्वकं एवमेवैतदिति न निश्चिनोति गुणावधारणात् संवादज्ञानाद्वा जाते प्रमाणे अवगते च तस्य प्रामाण्ये व्यवहारः प्रवर्तते । व्यवहारप्रयोजकस्य तस्यापि ज्ञानस्य न स्वभावतः प्रामाण्यं, तद्रूपस्या प्रामाण्येन प्रतिबद्धत्वात् । किं तु गुणावधारणादेव अतः गुणैः प्रामाण्यं जन्यते, इति-

एवं अप्रामाण्यस्वतस्त्ववादी स्वपक्षसाधनमुक्त्वा स्वतः प्रामाण्यं ज्ञान-स्येति सिद्धान्तिपक्षे प्रमाणाप्रमाणविभागाभावप्रसङ्गमापादयति- **प्रामाण्यं यदेति**

यदि ज्ञानानां उत्सर्गतः (स्वभावतः) प्रामाण्यं इति, अप्रामाण्यस्य च वस्तुरूपत्वेन कार्यत्वाभावश्चेत्यङ्गीक्रियेत तर्हि स्वप्नादिज्ञानानामपि च यावत्सद्भावं बोधात्मकत्वात् प्रामाण्यमेव स्यात, अकृत्रिमत्वाच्चाप्रामाण्यस्य न बाधकात् प्रत्ययात अन्यतोवा कुतश्चित् प्रसक्तिरिति यथा जाग्र-ज्ज्ञानस्य प्रामाण्यं तद्वत् । स्वप्नादिज्ञानामपि इति प्रमाणाप्रमाणविभाग एव दुरुपपादः स्यात् ॥४०॥

**मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।**
**हेतुमत्वप्रसङ्गोऽतो न भविष्यत्यवस्तुनः ॥४१॥**

---

ननु भवत्पक्षेपि स्वप्नज्ञानानां प्रामाण्यं, अपरिहार्यमेव स्यात्, अप्रामाण्यस्यावस्तुत्वेन कारणदोषायत्तत्वानङ्गीकारात विद्यमानस्यापि दोपस्याकिंचित्करत्वात् , यदि कारणदोषात्तत्राप्रामाण्यं स्वीक्रियेत तर्हि अवस्तुनोऽपि हेतुमत्वस्वीकारापत्तिः ततश्च पूर्वोक्तहेतुविरोधः ; तथाचोभयथा च दोषः, सर्वज्ञानानां वा प्रामाण्यं अवस्तुनो वा हेतुमत्वमिति इति चेदाह—॥**मत्पक्षेइति**॥

मत्पक्षे न स्वप्नज्ञानानां प्रामाण्यशंका, तेषु पूर्वोक्तानां प्रामाण्यकारणानां गुणादीनामभावात् । अत एव हि अवस्तुनः (अप्रामाण्यस्य) हेतुमत्वप्रसङ्गोऽपि न भविष्यति प्रामाण्यकारणभावादेव स्वाभाविकाप्रामाण्यसिद्धिरव्याहता ।

ननु अप्रामाण्यं ज्ञानानां अकृत्रिमं इति यदुक्तं तन्न घटते ; दोषसत्वे अप्रामाण्यस्य सत्त्वं तदभावे चाप्रामाण्याभावः इति हि पीतशङ्खज्ञानादौ लोके दृश्यते । अतश्च दोषभावभावि यदप्रामाण्यं तत् तत् कार्यमिति सिद्धः ; तदपि हेत्वादीनामेवेति चेत् न, नात्रदोषैरप्रामाण्यस्योत्पत्तिः किं तर्हि ? दोषसद्भावे हि प्रामाण्यकारणीभूताः असन्तः स्वकार्यं नारभन्ते इति स्वाभाविकमप्रामाण्यं तथैवावतिष्ठते इति नावस्तुभूताप्रामाण्यस्यहेतमत्वप्रसङ्गरूपदोषः ॥४१॥

इन्द्रियादिगुणाश्चास्य कारणं तदसद् द्विधा ।
दुष्टत्वादिन्द्रियादीनां अभावेऽन्यतमस्य वा ॥४२॥

---

ननु प्रत्यक्षादीनां प्रमाणानां प्रामाण्यकारणं इन्द्रियादि । तदभावाच्च स्वाप्नादिज्ञानानां नैव प्रामाण्यं, द्विचन्द्रादिज्ञानानां तु प्रामण्या कारणीभूतेन्द्रियादेः सद्भावात् त्वत्पक्षेऽप्रामाण्यमनिवार्यमिति **'मत्पक्षे कारणाभावात्'** इति कथमुच्यते इति चेदाह—॥**इन्द्रियादिति**॥

प्रामाण्यं प्रति नेन्द्रियादिमात्रं कारणं, अपि तर्हि ? इन्द्रिय तद्गतगुणाः अपि हेतुः । इन्द्रियादीत्यत्रादिपदेन अर्थपुरुषादेः ग्रहणम् । पूर्वमेवेन्द्रियगुणाःपुरुषगता, गुणाः निरूपिताः । अर्थस्य गुणाः स्थूलत्वादयः, (सूक्ष्मत्वादयश्च दोषाः) । इन्द्रियादिकं केवलं ज्ञानमात्रं प्रति कारणं, न प्रामाण्यं प्रत्यपि । भ्रान्तिसाधारण्यात् । तद्गताश्च गुणाः प्रामाण्ये हेतव इति लोकविदितमेव दृश्यते । प्रामाण्यकारणीभूतेन्द्रियादिगतानां गुणानामभावश्च प्रकारद्वयेन भवति ; दोषसद्भावात् , वा, गुणतदाश्रयेन्द्रियाद्यन्यतमस्याभावाद्वा । दोषाश्च सन्तः प्रामाण्यकारणभूतगुणानां उत्सारकाः भवन्ति, इत्येकः प्रकारः । आश्रयभूतेन्द्रियादीनामभावेऽपि निराश्रयाः गुणाः न सन्तीति प्रामाण्याप्रसक्तिरेव भवति । एवं च द्विचन्द्रादिज्ञानेषु प्रामाण्यकारणीभूतेन्द्रियादिगुणानामभावादेव प्रामाण्यानुदयः इति न दोषः प्रभवति ॥४२॥

अत एव च वो भ्रान्तिः दोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावः तत्कृता ह्यप्रमाणता ॥४३॥

तस्मात् कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतोऽप्रमाणत्वं तदभावेन लक्ष्यते ॥४४॥

---

नन्वन्वयव्यतिरेकाभ्यां अप्रामाण्यस्य दोषाधीनत्वदर्शना कथमप्रामाण्यस्यौत्सर्गिकत्वमिति चेदाह—॥अत एव चेति॥

अनन्यथासिद्धान्वयव्यतिरेकावेव हि कार्यकारणभावसाधकौ भवतः। आपाततः भ्रान्त्या प्रतीतौ न तथा स्याताम् । दोषाणां अप्रामाण्यस्य च न कार्यकारणभावः, अपि तु दोषाणां गुणाभावस्य च । गुणाभावाच्चाप्रामाण्यं स्वाभाविकमप्रामाण्यं स्वापबादकप्रामाण्याभावात् तथैवावतिष्ठते । अत एव च मीमांसकानां भवतां भ्रान्तिः दोषैरप्रामाण्यमिति । दोषाणां स्वाभाविकं यदप्रामाण्यं तत्र न व्यापारः भवति, अपि तु प्रामाण्योत्पत्तिकारणीभूतगुणप्रतिबन्धन एव । तदिदमाह 'संस्कृता ह्यप्रमाणता' इति ॥४३॥

पूर्वोक्तं सर्वमुपसंहृत्य प्रदर्शयति—॥तस्मादिति॥

कारणशुद्धिरेव गुणपदेनोच्यते । ज्ञानानां च प्रामाण्यं शुद्धिपर्यायगुणावधारणाधीनं, भवति । स्वभावतस्तु ज्ञानानां अप्रामाण्यं, तच्च शुद्धेरभावेन ज्ञाप्यते । शुद्धत्वे चासति कारणाभावात् प्रामाण्यं निराक्रियते । अप्रामाण्यं चापनोदितं तथैव लक्ष्यते इति ॥४४॥

अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः।
नाज्ञाने दृश्यते ह्येतत् कारणाभावहेतुके ॥४५॥

ततश्च पुरुषाभावात् सति वा शुद्ध्यसंभवात्।

---

दोषतः अप्रामाण्यं न भवतीत्यत्र सुदृढं कारणं उदाहरणप्रदर्शनपूर्वकमाह—॥अन्वयव्यतिरेकाभ्यमिति॥

अन्वयव्यतिरेकनिबन्धनं दोषतः अप्रामाण्यं इति यदुच्यते, तन्न युज्यते कुतः ? अज्ञान, संशय, विपर्ययात्मकत्रिविधेष्वप्रामाण्येषु अज्ञानात्मकाप्रामाण्ये (ज्ञानानुत्पादात्मके) कारणाभावमात्रसमधिगम्यत्वं न दोषाधीनत्वमिति मीमांसकैरपि समाधिगन्तव्यमेव खलु भवति । एवं च अज्ञाने दोषव्यतिरेकेऽपि अप्रामाण्यान्वयात् दोषाप्रमाण्ययोः कार्यकारणभावः विघटित इति स्वतस्त्वमप्रामाण्यस्यापनोदितमेवेति सर्वं ज्ञानं स्वतः अप्रमाणं प्रामाण्यं तु गुणाधीनमिति सिद्धिर्व्याहता भवति ।

एवं परतः प्रामाण्यमुपपाद्य पूर्वपक्षी स्वाभिमतं प्रदर्श्योपसंहरति—

एतावता गुणाधीनं प्रामाण्यमित्यस्योपपादितत्वेन वेदस्यापौरुषेयत्ववादिनां मते प्रामाण्यकारणीभूतगुणाश्रयपुरुषानङ्गीकारेण, आश्रयाभावात् गुणानामभावः, पौरुषेयत्वस्वीकारे तु प्रमाणान्तरागोचरे अतीन्द्रिये धर्मे पुरुषस्याप्तत्वलक्षणा शुद्धिः नैव संभव्येतेति निर्मूलत्वात् चोदनानां प्रमाणत्वं नैव युज्यते, इति सूत्रमिदमनुपपन्नम् ; धर्मविषयकशास्त्रं चेदं नारंभणीयमेवेति ।

निर्मूलत्वात् प्रमाणत्वं चोदनायां न युज्यते ॥४६॥

---

अत्रेदं विचारणीयम् । कामं प्रामाण्यं गुणाधीनमिति स्यात् । तथाऽपि चोदनायामपि, नित्यत्व, आकांक्षा, सन्निधि, योग्यपदार्थपूर्वकत्वगुणानां, तथा अनाप्ताभावलक्षणगुणस्यापि च सद्भावात् चोदनाजन्यज्ञानस्य कथमप्रामाण्यमिति ।

नैतत् चतुरश्रम् । लोके वाक्यात्मकशब्दस्य प्रामाण्ये अन्वयव्यतिरेकाभ्यां आप्तप्रयुक्तत्वरूपगुण एव कारणत्वेनावगम्यते ; न तु नित्यत्वादितत्कृतस्य प्रामाण्यस्य कुत्राप्यदर्शनात् । प्रत्युत नित्यत्वं दोषाय, व्योमाद नित्येऽपि प्रामाण्यादर्शनात् । इदं च पूर्वमेव " अभ्युपेत्योच्यतेऽथवा " इत्यादौ स्पष्टमुपपादितम् । आकांक्षायोग्यतादिकं च ज्ञानोत्पत्तिं प्रत्येवैं कारणं ; न तद्गतप्रामाण्यं प्रति कारणीभूतो गुणो भवति ; विप्रलंभकपुरुषोक्तवाक्येऽपि योग्यतादीनां सद्भावेन व्यभिचारात् । एवमनाप्ताभावोऽपि, प्रामाण्याभावेन व्यभिचरितत्वात् । अतः परतः प्रामाण्यात् चोदनानामप्रमाणत्वमेवेति । उभयं (प्रामाण्याप्राण्ये) परतः इति पक्षेऽपि चोदनानामप्रामाण्यं सिद्ध्यत्येव । उभयमपि स्वतः इति पक्षेऽपि चोदनानामप्रामाण्यं अक्षतमेव । कथं द्वयोः प्रामाण्याप्रामाण्ययोः नैसर्गिकत्वे स्वाभाविकं चोदनायाः प्रामाण्यमित्यत्र विश्वासो नैव भवितुमर्हति ; विनिगमनाविरहेण अप्रामाण्यस्यापि स्वतस्त्वसंभवात् । अतः सिद्धमप्रामाण्यं चोदनानामिति पूर्वपक्षः ।

**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।**
**न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥४७॥**

---

एवं **वार्तिककारः** महता प्रबन्धेन परतः प्रामाण्यमिति पूर्वपक्षमारचय्य संप्रति तत्र सिद्धान्तमारभते– ॥**स्वतः सर्वप्रमाणानामिति**॥

**सर्वप्रमाणानां प्रामाण्यं स्वतः इति गम्यतां** इत्यन्वयक्रमः । तत्र कारणं उत्तरार्धे प्रदर्श्यते, **हि** यतः **स्वतः असती शक्तिः अन्येन कर्तुं न शक्यते ;** इति यदुक्तं गुणज्ञानात् संवादज्ञानात् वा प्रामाण्यं इति तत्रेदं विचार्यम्– गुणज्ञानसंवादज्ञानयोरुत्पत्तेः पूर्वं ज्ञानं जायते ; न वा ? नान्त्यः– यदि ज्ञानमेव न जायते, किं गतं प्रामाण्यं तर्हि गुणज्ञानादिना गृह्यत ? यदि जायते, तर्हि न तत् संशयात्मकं, अपि तु निश्चयरूपेणैवेति, प्रामाण्यमपि उत्पत्तिवेलायामेव गृह्यते । अत एव हि ज्ञानोत्पत्तिसमनन्तरमेव **सर्वेषां** च **प्रमातॄणां** व्यवहारः प्रामाण्यग्रहणकार्यरूपः उपलभ्यते ; इति प्रामाण्यं स्वतो गृह्यते ; इत्येव युज्यते ।

यद्येवं नाङ्गीक्रियते, जगदान्ध्यप्रसक्तिरनिवार्यैव भवेत् । अन्येषामपि पूर्वपूर्वज्ञानगतप्रामाण्यग्राहकाणां उत्तरज्ञानानां स्वतः प्रामाण्याभावात तैः स्वपूर्वज्ञानगतप्रामाण्यनिश्चयात् । भ्रान्तिज्ञानमपि आबाधकज्ञानोदयं प्रमाणत्वेनैव भासते ; न संशयात्मना ; बाधकज्ञानोदयानन्तरं च तद्गला-

दप्रामाण्यं पूर्वज्ञेनो इति सार्वजनीनमेतत् । गुणावधारणादिना प्रामाण्यमिति पक्षस्तु नैव घटते; चक्षुरादौ गुणानां तज्जन्यज्ञानगतप्रामाण्यकारणानां अनुपलंभात् । यदि नैर्मल्यं गुणः, तर्हि दोषाभावः प्रामाण्यकारणीभूतो गुणः इत्यायातम् । तथाऽपि नास्माकं हानिः । वेदस्यापि दोषाभावादप्रामाण्यमित्युक्तौ क्षत्यभावात् । परं तु अनुभूतेर्विरुद्धत्वात् नायं पक्षः समाश्रीयते । उक्तं च अभिज्ञैः-

संवित्तीनां यथावस्थितनिजविषयोल्लेख औत्सर्गिकः स्यात्
वहमादेर्दोहिकन्वप्रभृतिवदुपधेरन्यथात्वं भ्रमांशे ।
नित्यज्ञानप्रमात्वं वदसि च निरुपाध्येव निर्हेतुकत्वात्
दोषाभावात प्रमा चेत् श्रुतिरपि, जयिनी, दोषदूरोज्झिता नः ॥
तत्त्वमुक्ताकलापः 4 103

सर्वभावानां शक्तिः स्वकार्यजननानुकूला, नान्येन जायते : किं तर्हि, तदाभिव्यक्तिः परं अन्यैः क्रियते । लोकेऽपि चातुराणां रोगापहृतशक्तिमतां भेषजभेदैः शक्तिप्रकाशनमेव हि भवति नोत्पत्तिः । अत एव नष्टशक्तीनां तीव्रतमभेषजदानेऽपि न प्रतीकारो भवति । यदि जन्येत असत्यपि सा जायताम् । अतस्सर्वाणि वस्तूनि स्वकारणेभ्यः शक्तियुक्तान्येव जातानि केनचनोपाधिना तिरोहितशक्तिमन्ति सायप्रयन्तरेण अभिव्यक्तशक्तियुक्तानि सन्ति स्वकार्यमारभन्ते; ज्ञाने तु उत्पत्तिवेलायामेवार्थावग्रहात नैवाभिव्यक्तिसापेक्षता इति तु वैषम्यम् ।

किंच- परतः प्रामाण्यवादिरीत्या यदि गुणनिमित्तं अर्थतथात्वरूपं प्रामाण्यं स्यात तर्हि गुणरहित-दोषयुक्तकारणजन्यज्ञान (पीतशंख) स्थले न किञ्चित् सत्यं भासेतेति स्यात् । इष्टापत्तिस्तु न भवति;

आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥४८॥

---

शंखाद्यंशे यथार्थत्वस्यावर्जनीयत्वात् । अतः स्वकारणनिमित्तमेव यथार्थत्वं ज्ञानस्य ; तद्दोषनिमित्तं तु अप्रामाण्यं इति स्वीकारे न पूर्वोक्तानुपपत्तिर्भवेत् ॥४७॥

ननु ज्ञानानां उत्पत्तिः तत्तदिन्द्रियादिहेतुभि इति तावत् सर्वसंमतम् ; जन्यत्वात् । तानि च गुणवन्ति सत्येव कार्यजनकानि भवन्ति । एवं सति जन्यज्ञानकार्यभूतार्थनिश्चयेऽपि (प्रामाण्ये) गुणाधीनत्वमपरिहार्यमिति गुणाधीनमेव प्रामाण्यमिति चेत् – ॥आत्मलाभे चेति॥

प्रमाणभूतज्ञानोत्पत्तौ हि गुणानां प्रतिबन्धकीभूतदोषनिरासकत्वे नैवोपयोगः, न गुणत्वेन रूपेण । अत एव हि गुणाभावेऽपि प्रतिबन्धकीभूतदोषाभावमात्रेणैव वेदेन ज्ञाने जाते स्वाभाविक प्रामाण्यं अनयोर्द्धितं तिष्ठति ।

अपि च लोकवस्तूनां उत्पत्तावेव कारणपेक्षा दृश्यते । न तु उत्पन्नवस्तुनः स्वकार्यनिष्पत्तिवेलायामपि तदपेक्षा दृश्यते । न हि घटाद्युत्पत्ति वेलायामपेक्षिता दण्डचक्रादिसामग्री उत्पन्नघटनिष्पाद्यजलादिग्रहणवेलायामपेक्षते ; लब्धात्मनः वस्तुनः स्वत एव स्वकार्यकरणात् । तथा च ज्ञानप्रामाण्यनिश्चये (अवधारणे) न ज्ञानजनकगुणवत्कारणापेक्षा समस्तीति सिद्धं ज्ञानानां स्वतः प्रामाण्यम् । विस्तरस्तु अस्मदीये तत्त्वमुक्ताकलापप्रकाशे ॥४८॥

ज्ञानेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत् कारणशुद्धत्वं न प्रमाणान्तराद् भवेत्　　　　॥४९॥

तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा　　　　॥५०॥

तस्यापि कारणे शुद्धे तज्ज्ञाने स्यात् प्रमाणता ।
तस्याप्येवमितीच्छंश्च न क्वचित् व्यवतिष्ठते　　　　॥५१॥

---

एतावता प्रबन्धेन ज्ञानानां स्वत एव प्रामाण्यमिति प्रसाध्य संप्रति परतः प्रामाण्यमिति पक्षे दूषणायोपक्रमते– "**न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते**" इति पूर्वोक्तिविवरणपुरस्सरं श्लोकत्रयेण– ॥ जातेऽप्यन्यादि ॥

लोके तत्तत्प्रमाणैः ज्ञानजननानन्तरं स्वविषयतथात्वावधारणरूप प्रामाण्यं न गृह्यते ; यावता कालेन स्वकारणगतगुणज्ञानं न भवेदिति यदि स्वीक्रियेत, तर्हि गुणनिश्चयाय प्रमाणान्तरं प्रतीक्षितव्यं भवेत् । नह्यनिश्चितो गुणः पूर्वज्ञानगतप्रामाण्यनिश्चयाय पर्याप्तो भवेत् ; अपरिच्छिन्नस्यासत्समत्वात् । तदपि निश्चायकं गुणज्ञानं स्वविषयतथात्वनिश्चये स्वकारणगुणावधारणहेतुभूतं ज्ञानान्तरमपेक्षते ; ज्ञानत्वात् । तदपि स्वविषयावधारकज्ञानान्तरापेक्षावत् इति ब्रह्मायुषाऽपि नैकस्यापि ज्ञानस्य प्रामाण्यसिद्धिरिति सर्वत्र प्रामाण्योच्छेद एव प्रसज्येत । अतः ज्ञानगतं प्रामाण्यं स्वत एवेत्यकामेनापि स्वीकर्तव्यं नान्या गतिरस्तीति ॥४९–५१॥

**यदा स्वतः प्रमाणत्वं तदान्यत् नैव गृह्यते ।**
**निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥५२॥**

---

अथ प्रामाण्यं स्वत एवेति वदतां वैदिकानां मतेऽपि प्रामाण्यापवादाप्रामाण्यकारणदोषाभावग्रहणस्यावश्यकत्वात् पूर्वोक्तरीत्या अनवस्थादोषः दुष्परिहर एव भविष्यतीत्युभयोस्तुल्यदोषत्वमेवेति शङ्कायामाह— ॥ **यदा स्वतः प्रमाणत्वमिति** ॥

पूर्वं हि प्रामाण्यं स्वोत्पत्तौ स्वकार्ये वा नान्यापेक्षमिति विशदं प्रत्यपादि । न च मिथ्याज्ञाननिवृत्त्यर्थं दोषाभावग्रहणापेक्षा ; दोषज्ञानोत्पादादेव हि दोषाभावः अयत्नासिद्धः ; प्रागभावादेः यत्नसाध्यत्वादर्शनात् ।

ननु दोषानुपलब्धिमात्रेण दोषाभावः सिद्ध्यतीति यदुक्तं तन्न घटते ; दोषसद्भावेऽपि मिथ्याज्ञानेषु भावात् अनैकान्तिकत्वात् अतः दोषाभावावधारणज्ञानमपेक्षितमेवेति पूर्वं मम यो अनवस्थादोषः आपादितः स भवतः शिरस्यपि पतत्येवेति चेत् , ब्रूमः ।

यत्र हि रजतसर्पज्ञानादौ जाते सति दोषज्ञानमुत्पद्यते ; तत्र नापतत्यनवस्था ; कार्यद्वारेण दोषाणां निश्चिततया अवगमात् । यत्र तु नोत्तरकाले बाधज्ञानोदयः तत्र दोषाशङ्कैव न कार्येति । इदं च— "**दोषज्ञाने त्वनुत्पन्ने**" इत्युत्तरत्र स्फुटीभविष्यति । कामं स्यात् प्रत्यक्षादिषु दोषाशङ्का ; वेदे त्वपौरुषेयत्वशंकायाः नैवोदयः भविता ॥५२॥

तस्मात् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते                    ॥५३॥

---

ननु प्रमाणकार्यं किं नाम ? यदि परिच्छित्तिरेव, तदेव च प्रामाण्यं, तर्हि शुक्तिकायामपि रजतज्ञानं प्रमाणत्वेन प्राप्येत, परिच्छित्तेरसद्भावात इत्यत्राह— ॥ तस्मात् बोधात्मकत्वेनेति ॥

यत्र ज्ञानोदयानन्तरं, नैतदेवमिति, पूर्वावगतरूपोपमर्दनरूपं अर्थान्यथात्वज्ञानं न जायते ; तत्र न पूर्वज्ञानस्य मिथ्यात्वं ; एवं ज्ञानकारणीभूतेन्द्रियादिगता दोषा यदि न गृह्यन्ते ; न तत्रापि न तज्जन्यज्ञाने मिथ्यात्वं, यत्र तु तदन्यतरस्तत्रस्य तत्र मिथ्यात्वमिति अपवादसद्भावा । वेदे तु प्रामाण्यापवादकबाधकज्ञानहेतुदोषज्ञानयोरभावात् न वेदजन्यज्ञानस्य मिथ्यात्वशङ्काऽपि घटेत ।

एतेन विवर्ताद्वैतवादकञ्चुकप्रच्छन्नाः वैदिकवेषभूषिताः युक्त्याभासपरिकर्मितसौगतसिद्धान्ताः नव्यमार्गविदूषकाः पूर्वमीमांसाशास्त्रपरिकर्मितवेदसिद्धान्तं ब्रह्मभिन्नसर्वमिथ्यात्ववादेन विदूषयन्ति, तेह्यनेन श्लोकेन श्रीभट्टपादेन दूरे निरस्ताः वेदिम्भ्याः ; प्रामाण्यापवादक अर्थान्यथात्वज्ञानहेतूत्थदोषज्ञानयोः वेदवाक्योत्थज्ञाने अभावात् । निषेधस्य परत्वात् सर्वबाधकत्वमित्यादिकुयुक्तयस्तु अस्मच्छेदनाय परिशिक्षणाविनभवाः पूर्वमीमांसाशास्त्राज्ञानसंवेदकाः इति अस्मदीये तत्त्वसुधादिग्रन्थजाते सुविशदं न्यरूपि । प्रकृतमनुसरामः— ज्ञानानां स्वतः प्रमाणत्वात् वेदवाक्योत्थज्ञानेषु प्रामाण्यापवादकाभावात् प्रामाण्यमप्रकम्प्यमिति सिद्धम् ॥५३॥

अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।
वस्तुत्वात् द्विविधस्यात्र संभवो दुष्टकारणात् ॥५४॥

अविज्ञाने तु दोषाणां व्यापारो नैव विद्यते ।
कारणाभावतस्त्वेव तत् सिद्धं नस्त्वदुक्तिवत् ॥५५॥

---

'अप्रामाण्यमवस्तुरूपं कारणनिरपेक्षं' इति यदुक्तं तत्परिहरति; श्लोकद्वयेन- ॥ अप्रामाण्यमित्यादि ॥

अप्रामाण्यं स्वतः (कारणनिरपेक्षं) 'अवस्तुत्वात्' इति अप्रामाण्य-स्वतस्त्ववादिना प्रयुक्ते प्रयोगे, 'अवस्तुत्वात्' इति हेतुरसिद्धः ; संशय-विपर्यय-अज्ञान(ज्ञानाभाव)रूपेषु त्रिविधेषु अप्रामाणेषु आद्ये द्वितीये चाप्रामाण्ये, अवस्तुत्वरूपहेतोरसिद्धिः ; कोटिद्वयावगाहिज्ञानात्मकसंशयस्य, अतथाभूतार्थे तथाभावनिश्चयात्मकज्ञानात्मकविपर्ययस्य च भावरूपत्वेन वस्तुत्वात् ; अवस्तुत्वरूपहेत्वभावः, संभवति च तयोर्दोषान्वयव्यतिरेकानु-विधायित्वात् ।

यच्चाज्ञानरूपमप्रामाण्यं (ज्ञानाभावरूपं) तत्र त्वदुक्तहेतोः सिद्ध साधनं दोषः, ज्ञानकारणानामभावादेव कार्यरूपज्ञानाभावस्य सिद्धेः ; अस्माभिरपि तत्र दोषजन्यत्वानभ्युपगमात् । अस्माकमपि त्वदुक्तिवत् 'अप्रामाण्यं' स्वतः इति त्वदुक्तिवदज्ञानाभावात्मके अप्रामाण्ये सिद्ध-त्वात् सिद्धसाधनं दोषः इति ।

अथवा, त्वदुक्तिवत् इत्यस्यायमर्थः— यदि भवता, संशयविपर्य-यात्मकाप्रामाण्ये— स्वतः- (अकारणके) अप्रामाण्यशब्दवाच्यत्वात्, अज्ञान-

**दोषतश्चाप्रमाणत्वे स्वतः प्रामाण्यवादिनाम् ।**
**गुणज्ञानानवस्थावत् न दोषेषु प्रसज्यते ॥ ५६ ॥**

---

वत इति प्रयुज्येत, तर्हि इदं दूषणं– 'त्वदुक्तिवत्' इति, गोशब्दोऽपि, विषाणित्ववान्, गोशब्दवाच्यत्वात, गोशब्दवाच्यार्थवत् इति प्रयोगापत्तेः, इति ॥ ५५ ।

ननु प्रामाण्यस्यान्याधीनत्वे अनवस्थादोषः; पूर्वं स्वतः प्रामाण्यवादिभिः परतः प्रामाण्यवादिनां मते आपादितः ; यदि च मीमांसकैः भवद्भिः अप्रामाण्यं परतः इत्याश्रीयेत तर्हि भवतां अपि स दोषः अपरिहार्यः पारतन्त्र्यस्य अनवस्थादोषहेतोः अप्रामाण्ये भवद्भिरभ्युपगमात् ; अतः "**यश्चोभयोस्समो दोषः**" इति न्यायेन कथमस्माकमेव निग्राह्यत्वं इति चेदाह– ॥ **दोषतश्चाप्रमाणत्वे** इति ॥

**स्वतः प्रामाण्यवादिनां** इति पदं अनवस्थाराहित्यद्योतकतया प्रयुक्तम् । कथं ? न हि भवदुक्तरीत्या पारतन्त्र्यमात्रं अनवस्थायां हेतुः ; प्रमाणात्मकज्ञानस्यापि इन्द्रियविषयादिपरतन्त्रत्वेनानवस्थापत्तेः ; अपितु सजातीयापेक्षावत्त्वं, हि अनवस्थाहेतुरिति पूर्वं चास्माभिः (५१ श्लोके) निरूपितम । तथ च प्रामाण्यस्य प्रमाणान्तरायत्तत्वं इव अप्रामाण्यस्य अप्रामाणान्तरायत्तत्वं यदि भवेत्, तर्हि अनवस्था स्यादेव । तत्तु न भवति ; अप्रामाण्यस्य प्रमाणभूतार्थान्यथात्वज्ञानहेतुस्थदोषज्ञानाधीनत्वात्, तयोश्च स्वतः प्रमाणत्वात् । तदिदं **स्वतः प्रामाण्यवादिनामिति** पदेनासूचि । ५६ ।

साक्षाद्विपर्ययज्ञानात् लभ्यैव:त्वप्रमाणता ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिदध्यति ॥ ५७ ॥

---

पूर्वं (५३) ज्ञानानां स्वतः प्रमाणता, ' **अर्थान्यथात्वहेतूत्थदोषज्ञानादपोह्यते** ' इति यदुक्तं तत्र, कथं अर्थान्यथात्वज्ञानेन पूर्वज्ञानस्य बाधः ? भवद्रीत्या पूर्वज्ञानस्यापि स्वतः प्रमाणत्वात् कथमप्रमाणं भविष्यति ? पूर्वज्ञानेनैव उत्तरज्ञानं बाध्यतां, इति शङ्कायामाह— ॥साक्षादिति॥

**अयमत्राशयः**— यत्र हि ' **इदं रजतं** ' इति ज्ञानोत्पत्त्यनन्तरं, नैतदेवं इति विपर्ययज्ञानं भवति ; तत्रोत्तरस्यापि स्वतः प्रमाणत्वेन तेन पूर्वकालिकज्ञानबाधः सार्वजनीनः वर्तते ; अत्र पूर्वज्ञानाप्रमाणता सुलभैव विज्ञायते ।

**इदमत्र विचारणीयम्**— कथमत्रार्थान्यथात्वज्ञानेन पूर्वज्ञानस्य बाधः ? न तावन्नाशः, उत्तरज्ञानस्यापि नाशवत्त्वेनाप्रामाण्यप्रसङ्गात । नापि पूर्वज्ञानीयकार्यप्रतिबन्धः ; अर्थपरिच्छेदात्मकस्य तस्य रोद्धुमशक्तेः । न वा संस्कारोच्छेदः; बाधकप्रत्ययोत्पत्यनन्तरमपि पूर्वज्ञानहेतुकस्मरणदर्शनेन सस्कारोच्छेदकल्पनायोगात् । न सहानवस्थानम , सर्वेषामपि ज्ञानानां सहावनस्थानस्यसाधारणत्वात् । नापि फलापहाररूपो बाधः ; प्रमाणस्याबाधितत्वात् । **पूर्वप्रत्ययस्य** च नैवोत्तरप्रत्ययेन बाधः , न हि उत्तरप्रत्ययः पूर्वप्रत्ययस्य मिथ्यात्वमवगमयति ; उभयोरपि विभिन्नविषयकत्वात् ।

ननु उत्तरज्ञानस्य पूर्वज्ञानविषयप्रतियोगिकाभावविषयकतया पूर्वज्ञानबाधकत्वमिति चेत्— तदप्यनुपपन्नमेव ; पूर्वप्रत्ययविषयप्रतियोगिकमभावं उत्तरप्रत्ययः किं कालान्तरे गृह्णाति ? उत

तत्प्रतिभाससमये एव ? नाद्यः– विभिन्नकालिकत्वेन भावभावयोर्विरोधा-भावात् । न हि ध्वस्तनीयघटस्य इदानींतनाभावग्रहणेन मिथ्यात्वं भवति । नापि द्वितीयः– सदसद्भावयोरेकस्मिन् काले प्रतिपन्नत्वे विरोधाभावात् । उभयाकारतैवास्तु, चित्रपटवत् । नचोत्तरं प्रत्यक्षं पूर्वगृहीतार्थाभावग्राह-कम् । भवन्मतरीत्या प्रत्यक्षस्याभावाग्राहकत्वात् न चोत्तरमभावाख्य मेव प्रमाणमिति वाच्यम् ; पूर्वस्यापि सद्भावग्राहिणो विद्यमानत्वात् । भावग्राहकप्रमाणसामान्याभावे किल, अभावाख्यप्रमाणोदयः, न तु प्रमाण-राजे प्रत्यक्षे बिराजमानेऽपि । न च प्रत्यक्षाभासरूपत्वात् पूर्वस्य उत्तरेण बाधः इति वाच्यम् । अन्योन्याश्रयदोषापरिहारात् । न हि पूर्वस्य अप्रामाण्ये अन्यत् (उत्तरभिन्नं) किंचित् कारणं समस्ति । अतः कथं पूर्वज्ञानस्य बाध इति ।

अत्र ब्रूमः– नैतदेवमिति पूर्वज्ञानविरोधिनि उत्तरज्ञाने उत्पन्ने-हि सति पूर्वज्ञानाधीनव्यवहारः इति हि निवर्तते सार्वजनीनं दृश्यते । प्रमाणानां प्रवृत्तिरेव फलम् । ततश्च उत्तरज्ञानेन पूर्वज्ञानीयप्रवृत्त्याख्यफलाप-हारात्मकबाधस्संजायते । अतः पूर्वज्ञानबाधः इति व्यवहारः इति चतुरश्रम् । पूर्वमबाधित्वोत्पत्तिमेवानासादयतः उत्तरज्ञानस्य स्वोत्पत्तिवेलायामेव पूर्वज्ञान-निष्ठान्यथात्वरूपाप्रामाण्यबोधनाल्लाघवं च बोध्यम् ॥५७॥

दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात् तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ ५८ ॥

---

ननु भवत्वेतादृशस्थले समानविषयकत्वाद्बाध्यबाधकभावः; यत्र तु विपरीतार्थग्राहकत्वं (विभिन्नार्थ) तत्र कथमुत्तरस्यैव बाधकत्वमिति चेदाह—
॥ **दुष्टकारणबोधेति** ॥

कारणदोषज्ञानात् यत्र पूर्वज्ञानगृहीतार्थबाधरूपपूर्वज्ञानाप्रामाण्यं तत्र दोषविषयकं उत्तरं । पूर्वज्ञानं (बाध्यं) च तद्भिन्नविषयक. (पीतशङ्खादिभ्रमेषु) तथाऽपि दोषाणामयथार्थज्ञानहेतुत्वात् अर्थस्यायथार्थत्वम् (अन्यथात्वम्) ; पूर्वज्ञानात्तु तथात्वमिति एकार्थत्वसंपादनेन बाधः, तत्रोदाहरणम् **गोदोहनादिवत्** इति । भिन्नविषययोरपि बाध्यबाधकभावे अयं दृष्टान्तः । यथा दर्शपूर्णमासयोः, '**चमसेनापः प्रणयति**' इति अपां प्रणयनसाधनत्वेन चमसः विधीयते । तत्रैव '**गोदोहनेन पशुकामस्य प्रणयेत्**' इति वाक्येन, पशुफलसाधनतया प्रणयनाश्रितगोदोहनपात्रविधानं परिदृश्यते । इदं च पुरुषार्थमेव पुरुषाभिलिषितफलसाधनत्वात् । चमसस्तु क्रत्वर्थः, क्रतूपकारफलकत्वात । एवं स्थितेऽपि भिन्नविषयत्वे, क्रिया यां कांचिदनाश्रित्य सिद्धद्रव्येण गोदोहनेन फलासिद्धेः प्रणयनक्रियामेव आश्रयत्वेन स्वीकरोति गोदोहनम् । तेनैव प्रणयनक्रियायाः द्रव्याकाङ्क्षायाः शान्तेः न चमसस्यावश्यकतेति चमसनिवृत्तिः गोदोहनस्वीकारे । तत्र च चमसबाधः न वचनात् । अपि तु अर्थादेवेति स्पष्टम् । तद्वत् प्रकृतेऽपीति ।

**तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।**
**तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥५९॥**

---

ननु क्रत्वर्थचमसाभावात् गोदोहनप्रयोगे क्रतोर्वैगुण्यापत्तिरिति चेत्, ब्रूमः— पशुकामप्रयोगे क्रतुरपि स्वोपकारकतया गोदोहनमेव हि स्वीकरोति न चमसम् । सर्वत्रापि अङ्गिनः स्वाङ्गेष्वादरः कार्यार्थितयैव । तच्च कार्यं प्रकृते यदि फलार्थगोदोहनादेव लभ्यते, किमर्थं तर्हि क्रतोः चमसे त्वादरः संजयेत ? उक्तं च—

**सर्वस्य हि कार्यार्थः स्वगुणग्रहणादरः ।**
**अन्यार्थगुणसिद्धे तु कार्येऽस्य स्वगुणेन किम् ॥ इति।**

तथा च यथा पुरुषार्थेनैव गोदोहनेन भिन्नविषयेण क्रत्वर्थश्चमसः बाध्यते ; एवमेव दोषविषयकेनापि उत्तरज्ञानेन, तद्भिन्नविषयकत्वेऽपि पूर्वज्ञानस्य बाधा भवति ।५८॥

परज्ञानेन पूर्वज्ञानं बाध्यते इति यदुक्तं तत्रापवादमपि प्रदर्शयति— ॥ **तत्र दोषान्तरज्ञानमिति** ॥

**तत्र** नैतदेवमिति विपर्यज्ञाने, दुष्टकारणजन्यत्वज्ञाने चेत्यर्थः । **परा** तदुत्तरकालिका कारणदोषधीः **बाधधीर्वा** यदि **न** भवेत् तदैव तेन पूर्वस्य बाधः ; तदुद्भवे च तेन द्वितीयज्ञानस्य मिथ्यात्वनिश्चयात् प्रथमस्य प्रामाण्यमप्रकम्प्यम् । बाधकस्य द्वितीयप्रत्ययस्य सापवादत्वात् । एतेन श्वेताश्वतरगतनिर्गुणश्रुत्या ब्रह्मणः सर्वकालिकगुणसामान्याभाववत्वं

स्वत एव हि तत्रापि दोषाज्ञानात् प्रमाणता ।
दोषज्ञाने त्वनुत्पन्ने न शङ्क्या निष्प्रमाणता ॥ ६० ॥

---

वदन्तः विवर्तवादिनः प्रतिक्षिप्यन्ते । 'निर्गुणः' इति वाक्यानन्तरं ज्ञः 'कालकालो गुणी सर्वविद्यः' इति निर्गुणत्वापवादकगुणित्वश्रवणात् । विस्तरस्तु तत्त्वसुधायामस्मदीयायाम् ॥ ५९ ॥

अथ स्यात्– आद्यज्ञानस्य प्रामाण्यं तृतीयज्ञानाधीनं अपवादनिरासार्थं तदपेक्षायाः अवर्जनीयत्वात् । तथा च ज्ञानानां प्रामाण्य स्वतः इति पूर्वोक्तसिद्धान्तस्य तिलाञ्जलिरेव स्यात् इति सिद्धान्तहानिः इत्यत्राह– ॥ स्वत एव हीति ॥

आद्यज्ञानं हि उत्पत्तित एव अर्थपरिच्छेदं कुर्वदेव जायते ; इति स्वतः प्रमाणम् ; अपवादकदोषाज्ञानाच्च तद्दार्ढ्यं च । न च निश्चितस्यापि विज्ञानस्य ( शुक्तिरजतज्ञानादौ ) बाध्यमानतया व्यभिचारस्यापि दृष्टत्वात् अविश्वासः, कालान्तरेषु दोषज्ञानस्यापि संभवात् ; इति वाच्यम् । यत्र अनिर्धारणात्मकं उभयकोटिसंस्पर्शि ज्ञानं जायते तत्र युक्तमप्रामाण्यम् । यत्र तु निर्धारणात्मकं इदमित्थं इति वस्तुतथात्वनिश्चायकमुत्पद्यते, यस्य च नोत्तरकाले बाधप्रत्ययः न वा कारणदोषज्ञानं न तत्र विवेकिनः अप्रामाण्यशंकायाः प्रसक्तिरपि भविष्यति ; निष्प्रमाणत्वात् । एवं तृतीयज्ञानस्यापि (अपवादापवादकस्य) स्वतः प्रमाणत्वादेव द्वितीयबाधकत्वं बोध्यम् ॥ ६० ॥

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यते तावदेवैकं स्वतः प्रामाण्यमश्नुते ॥ ६१ ॥

---

एवं ज्ञानानां स्वतः प्रामाण्यात् द्वितीयक्षणावच्छिन्नबाधकज्ञानस्य तृतीयज्ञानेन स्वतः प्रमाणेनापवादे जाते बाधकबाधनेनाद्यमानता इति प्रत्यपादि । तृतीये ज्ञाने द्वितीयज्ञानबाधकत्वेनाभिमते यदि दोषो न संभावितः, तदवधिकः प्रामाण्यनिर्णयः, यदि च तत्रापि दोषस्संभावितः तदा का गतिरिति चेदाह- ॥ एवं त्रिचतुरेति ॥

प्रथमज्ञानीयप्रामाण्यापवादकद्वितीयज्ञाने तृतीयेन ज्ञानेनापोदिते (अप्रामाण्यमापादिते) आद्यज्ञानीयं स्वतः प्रामाण्य अनपोदितमेव तिष्ठति । यदि च तृतीयज्ञाने अप्रामाण्यशंका तदा चतुर्थज्ञानेन तदपवादः ; तृतीयस्य बाध द्वितीयज्ञानीयप्रामाण्यपरिरक्षणं भवति । इतरच्चापवाद-वत्वादप्रमाणमेवेति नानवस्थाप्रसक्तिः समस्ति । त्रिचतुरज्ञानैरेव दोषा-दोषाभावसिद्धेः प्रामाण्यसिद्धये नाधिका मतिरपेक्ष्यते । यावदेव हि तृतीयं तुरीयं वा ज्ञानमुत्पन्नं तावदेव, प्रथमं द्वितीयं वा ज्ञानं अप-वादरहितमेव स्वतः प्रमाणं विराजते इति ॥ ६१ ॥

एतावता प्रमाणानां स्वतः प्रमाणत्वं दोषाच्चाप्रमाणत्वमिति प्रसा-धितम्— वेदोत्थप्रत्ययस्य दोषरहितत्वात् प्रमाणत्वमनपोदितं तिष्ठति च इति किल साधितमासीत् । तत्रेदं विचार्यते— भवतु नाम दोषादप्रामाण्यमिति । तथापि चोदनाज्ञानेऽपि दुष्टकारणजत्वं वर्तते इति वदामः ; कथं ? शब्दस्यैव दुष्टकारणत्वात् ; चोदनायाश्च शब्दरूपत्वात् । कथं नाम

शब्दे दोषोद्भवस्तावत् वक्त्रधीन इति स्थितिः ।
तदभावः क्वचित् तावत् गुणवद्वक्तृकत्वतः ॥ ६२ ॥

तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसंभवात् ।
यद्वा वक्तुरभावेन न स्युर्दोषाः निराश्रयाः ॥ ६३ ॥

---

शब्दस्य दुष्टकारणत्वमिति चेत्— शब्दा हि स्वसामर्थ्यमनुरुध्यमाना अयथार्थान् प्रत्ययान् (ज्ञानानि) जनयन्ति । यथा, " सूच्यग्रे गजयूथमास्ते " इति । अत्र च शब्दः अर्थासंस्पर्शी । ( अप्रमाणम् ) इति सर्वेषामपि स्पष्टमेव । किंच— बाधकप्रत्ययोत्पत्तावपि शब्दः मिथ्याज्ञानं जनयतीति लोकसिद्धमेव । यथा 'नेदं रजत'मिति बाधकज्ञाने जातेऽपि " इदं रजत "मिति वाक्यात् । अत्र चार्थासंस्पर्शी किल शब्दः (अप्रमाणम्) भवति ।

उक्तं च—

विकल्पयोनयः शब्दाः विकल्पाः शब्दयोनयः ।
तेषामन्योन्यसंबन्धः नार्थान् शब्दाः स्पृशन्त्यमी ॥

इति । अतः कथं चोदना(शब्द)जनितबुद्धेः प्रामाण्यमिति?— तत्राह— ॥ शब्दे दोषोद्भवस्तावत् इत्यादि ॥

शब्दस्य दुष्टत्वं नामायथार्थज्ञानजनकत्वम् ; तच्च बाधकप्रत्ययान्निर्णीयते । वेदे च तस्याभावात् वेदस्य कथं अर्थासंस्पर्शित्वमुच्यते ?

ननु पूर्वोक्तरीत्या 'सूच्यग्रे गजयूथमास्ते' इत्यादिलौकिक-वाक्येषु अर्थासंस्पर्शित्वदर्शना **लोकवेदाधिकरणन्यायेन** वेदेऽपि अ-प्रामाण्यं स्यादिति चेत्, न। लौकिकश्च शब्द आप्तप्रणीतः अनाप्त-प्रणीतश्चेति द्विविधः परिदृश्यते। तत्र आप्तप्रणीतशब्दे नैवाप्रामाण्य शंकायाः अवकाशः, गुणैराप्तशतैः अप्रामाण्यकारणदोषाणां दूरीकरणात्। अनाप्तवाक्येषु च न शब्दनिबन्धनमप्रामाण्यं, किं तर्हि? वक्तृगतदोष-संक्रान्तिनिबन्धनमेव। वेदे च वक्तुरभावात् दोषाः निराश्रया न भवन्तीति स्वाभाविकं यत् प्रामाण्यं तन्निराबाधं विराजते।

ननु लोके पुरुषाः शब्दोच्चारणे परं व्याप्रियेरन्; अर्थप्रति-पत्तिस्तु तदुक्तशब्दमात्राधीनैव दृश्यते; न वक्तृगतदोषाणां तत्र मना-गपि व्यापारोऽस्ति। स्थिते चैवं कथं दोषाधीनमप्रामाण्यमिति, शब्द-स्यैव तत्र व्याप्रियमाणत्वात् स्वाभाविकमेवाप्रामाण्यहेतुत्वं शब्दस्येति चेत्, उच्यते– लोके '**नद्यास्तीरे फलानि सन्ती**'ति, वाक्ये आप्ता नाप्ताभ्यां उभाभ्यां प्रयुक्ते, आप्तोक्तस्याप्रामाण्याभावः, अनाप्तोक्तस्य तु अप्रामाण्यसत्त्व इति सर्वैरनुभूयते; शब्द एव यदि अप्रामाण्यं प्रति निदानं भवति, आप्तोक्तमपि वाक्यमप्रमाणं स्यात्। न चैवमिष्यते। अतः अन्वयव्यतिरेकौ अप्रामाण्यं प्रति दोषनिरूपितावेव स्तः; इति न शब्दनिबन्धनमप्रामाण्यमिति। अप्रामाण्यकारणदोषाणामभावश्च पौरुषेयेषु वाक्येषु गुणवद्वक्तृकत्वेन, वेदे पुरुषाभावात् इति वेदे स्वतःप्रामाण्य-मक्षतं तिष्ठति ॥ ६२, ६३ ॥

पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।
प्रामाण्यं तत्र गुणतः नैव स्यादित्युदाहृतम् ॥ ६४ ॥

---

अथैवमपि परतः प्रामाण्यमपरिहार्यमेव भवेत् ; कथं ? प्रत्यक्षादिषु तावत् ज्ञानोत्पादकसामग्रीव्यतिरेकेण गुणानामभावात् स्वतः प्रामाण्यं यद्यपि वक्तुं क्षमम् ; शब्दे तु ज्ञानोत्पादकसामर्थ्यव्यतिरेकेण आप्त-प्रणीतत्वरूपगुणसद्भावात् तस्य च प्रामाण्येन सह अन्वयव्यतिरेकदर्शनात् परतः प्रामाण्यमेव भवेत् । अत्र प्रत्यक्षादिषु स्वतः प्रामाण्योपपादन चानपेक्षितमेव । अतश्चोदनायां कथं स्वतः प्रामाण्यमिति चेत्— ॥ **पौरुषेये द्वयमिति** ॥

पौरुषेयेषु वाक्येषु, **दोषाभावः गुणाश्चे**त्येतदुभयं **दृष्टम्** । **तत्र गुणानां न प्रामाण्यं** प्रति हेतुत्वं संभवति ; अनवस्थाप्रसंगा-दिति पूर्वं स्पष्टं निरूपितम् । तर्हि गुणानां कः उपयोगः इति चेत्— दोषापनयनमात्रमिति ब्रूमः । प्रामाण्यं तु स्वत एव । प्रत्यक्षा-दीनां स्वतः प्रामाण्यप्रतिपादनमपि न प्रकृतानुपयोगि; अपि तु प्रत्यक्षा-दिषु ज्ञानोत्पादकस्यैव प्रामाण्यहेतुत्वे कथिते वेदे चापि ज्ञानहेतुर्नैव प्रामाण्यमपि ज्ञायेतेति तस्यापि प्रकृतोपयोगित्वात् ॥ ६४ ॥

तस्मात् गुणेभ्यो दोषाणामभावस्तदभावतः ।
अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥ ६५ ॥

प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ।

गुणानां प्रामाण्येन सह तद्भावाभाविस्वरूपान्वयव्यतिरेकान्यथासिद्धिं दर्शयति- ॥ तस्मात् गुणेभ्य इति ॥

अप्रामाण्यं प्रति कारणद्वयं पूर्वं प्रदर्शितम् ; कारणदोषज्ञानं, बाधकप्रत्ययो वेति । गुणसत्त्वे च तैर्निराकृताः दोषाः ( पौरुषेये वाक्ये ) इति नोभयसद्भावः । असन्तो हि न दोषाः गृह्यन्ते । अदुष्टकारणजं ज्ञानं, न बाधकबाधितम् । अतः अप्रामाण्यकारणद्वयस्याप्यभावतः औत्सर्गिकं प्रामाण्यमनपोदितमेवेति ; वेदवाक्यानां औत्सर्गिकप्रामाण्याहानिरिति सिद्धम् ॥ ६५ ॥

अपवादाभावे च प्रत्यक्षादिवत् ज्ञानोत्पत्तिहेतुत्वात् पौरुषेयवाक्यानामपि प्रामाण्यानपायमित्याह– ॥ प्रत्ययोत्पत्तिहेतुत्वादिति ॥

ज्ञानोत्पत्तिहेतुत्वात् लौकिकवाक्यानां न प्रामाण्यापनयः (विहतिः) भवति । अतः लोकेऽपि शब्दस्य स्वत एव प्रामाण्यात् वेदस्यापि स्वतः प्रामाण्यसिद्धिरक्षतेति तात्पर्यम् ॥

दोषाभावो गुणेभ्यश्चेत् ननु सैवास्थितिर्भवेत् ॥ ६६ ॥

तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ।
दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणाः ॥ ६७ ॥

---

ननु गुणानां दोषाभावहेतुत्वे स्वीक्रियमाणे, प्रामाण्यस्य गुणज्ञानाधीनत्वे यथा अनवस्थादोषः प्रसज्यते इत्युक्तम्, तदेव दूषणमत्रापि स्यात् को वा विशेषः गुणज्ञानाधीनं वा प्रामाण्यं तदधीनः दोषाभावः इति. ततश्च प्रामाण्यस्योत्खातिरिति शङ्कते— ॥ दोषाभाव इति ॥

गुणेभ्यः दोषाभावः इति स्वीक्रियते चेत् सैव पूर्वोक्तैव अस्थितिः अनवस्था भवेत् । यथा गुणज्ञानाधीनं प्रामाण्यं इत्युक्तौ गुणज्ञानगतप्रामाण्य ज्ञानान्तराधीनं, तस्यापि तथेति । यथा पूर्वमन वस्थात्मकदूषणमुक्तं तथैव इदानीमपि भवेत् इति । अथवा अस्थितिः प्रामाण्यस्य स्थित्यभावः प्रामाण्यस्वीकारासंभव इति यावत् ॥६६।

एवं शङ्कायां तत्परिहारमाह— ॥ तदा नेति ॥

गुणाः ज्ञाताः एव दोषानुत्सारयन्तीति यदि स्यात्, तदा गुणज्ञानाधीनत्वाद्दोषोत्सारणस्यानवस्था पूर्वोक्तरीत्या (गुणज्ञानाधीनं प्रामाण्यनिर्धारणं ज्ञानस्य) स्यान्नामानवस्था, न त्वेवमत्र, अपि तु सत्तयैव गुणाः दोषानुत्सारयन्ति; यथा चादित्यदीपादिः तपः । तथा चाप्रामाण्यकारणदोषाणामुत्सारितत्वात् असन्तः दोषा इति ते नैव ज्ञायन्ते, ततश्च ज्ञानगतं स्वाभाविकं प्रामाण्य अपवादाभावात् स्वतो गृह्यते इति ॥

**तत्रापवादनिर्मुक्तिः वक्त्रभावाल्लघीयसी ।**
**वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ ६८ ॥**

**अतो वक्त्रनधीनत्वात् प्रामाण्ये तदुपासनम् ॥**

---

अथ स्यात् पुंवाक्येषु ( लोके ) गुणोत्सारितदोषेषु प्रामाण्यापवादकाभावेन प्रामाण्यं भवेत् । वेदे चाकर्तृके दोषापवादकगुणाभावात् अप्रामाण्यं नैव वारयितुं शक्येतेति अप्रमाणमेव चोदनावाक्यमिति । एवं शङ्कायां परिहारमाह- ॥ **तत्रापवादनिर्मुक्तिरिति** ॥

**तत्र**- तस्मिन् वेदे, महिते वेदे, प्रामाण्यस्य स्वाभाविकस्य अपवादभूतं यदप्रामाण्यं तन्निर्मुक्तिः ( तन्निरासः ) **लघीयसी** सुलभा ; पुरुषवाक्येषु हि अपवादे तद्दोषनिराकारणाय गुणाः अपेक्षणीयाः ; पौरुषेयत्वेन अप्रामाण्यशंकायाः कदाचित् प्रसरणात् । अतो दोषनिर्मुक्तिः, लौकिके गुर्वी भवति । वेदे त्वपौरुषेयत्वात् निराश्रयाः दोषाः इति शङ्कास्पदत्वमपि न भजन्ते । अतः स्वाभाविकं प्रामाण्यं वेदस्यानपोदितं समुल्लसति ॥ ६८ ॥

वस्तुतस्तु पुंवाक्यगतप्रामाण्यमपि न गुणापेक्षम ; अप्रामाण्यशङ्कानिराकरणमात्रौपयिकत्वात् गुणानाम् । एवं च वेदे वा लोके वा शब्दस्य प्रामाण्यं न वक्त्रधीनमिति यत्तु नैयायिकादिभिः प्रामाण्यस्थापनार्थं वेदे वक्तुरुपासनं कृतं ईश्वरप्रणीतत्वात् आगमोऽपि प्रमाणमिति । तदयुक्तं व्यर्थं चेत्याह– ॥ **अत इति** ॥

पूर्वोक्तरीत्या प्रामाण्यस्य स्वतस्त्वात् **वक्त्रनधीनत्वात् वक्तुरुपासनं** ( **अपेक्षा** ) व्यर्थम् ; विरुद्धम् च । कर्त-

न युक्तमप्रमाणत्वे कल्प्ये तत्प्रार्थना भवेत् ॥ ६९ ॥

ततश्चाप्ताप्रणीतत्वं न दोषायात्र जायते ।
प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥ ७० ॥

---

कल्पना हि दोषशङ्कां जनयन्ती सती अप्रामाण्यकल्पनानुकूलायैव भवेत् ॥ ६९ ॥

यच्चोक्तं नास्तिकैः आप्ताप्रणीतत्वेन वेदस्याप्रामाण्यं, अनाप्तवाक्यवत् बालादिवाक्यवद्वेति, तन्न घटते । विरुद्धत्वादित्याह— ॥ ततश्चाप्तप्रणीतत्वमिति ॥

प्रामाण्यप्रयोजकाभावो हि अप्रामाण्यमाक्षिपेत ; न त्वाप्तप्रणीतत्वाभावः । प्रामाण्यप्रयोजकं च ज्ञानसामग्रीं विना नान्यत् स्वतः प्रामाण्यवादिनां सिद्धान्तिनां मते । पौरुषेयं वाक्यं काम दुष्येत् आप्तप्रणीतत्वाभावे । आप्तप्रणीतत्वाभावे पौरुषेयवाक्यस्य अनाप्तप्रणीतत्वनैयत्येनाप्रामाण्यकारणदोषाणामवर्जनीयतया अप्रामाण्यध्रौव्यात् । नित्यं तु वेदवाक्यं यदि नाप्तप्रणीतम् तर्हि सुतरां निर्दुष्टं, आश्रयाभावेन दोषाभावात् । आप्ताप्रणीतत्वाप्रामाण्ययोः न व्याप्तिः, अपि तु अनाप्तप्रणीतत्वाप्रामाण्ययोरेवेति वेदे अनाप्ताप्रणीतत्वादप्रामाण्याभावः स्वतः सिद्धः । ये च प्रयोगाः आप्ताप्रणीतत्वहेतुकाः अप्रामाण्यसाधकाः बालादिवाक्यादिनिदर्शनेन प्रदर्शिताः, तेषां प्रतिहेतवः सपद्येव वक्ष्यामः ; दोषवर्जितैः कारणैर्जायमानत्वादित्यादिभिः ॥ ७० ॥

पौरुषेये तु वचने प्रमाणान्तरमूलता ।
तदभावे तु तत् दुष्येत् इतरन्न कदाचन ॥ ७१ ॥

तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः ।

---

ननु आप्तप्रणीतत्वाभावे सुतरां प्रामाण्यं इति यदुक्त तन्न घटते ; आप्तप्रणीतत्वसद्भावे हि संवादलाभात् प्रामाण्यं सुदृढं भवेत् । आप्तो हि प्रमाणेनार्थं प्रतिपद्य वाक्यं रचयेदिति संवादसौलभ्यात् । आप्ताप्रणीतत्वे तु मूलप्रमाणालाभात् कथं वा स्यात् प्रामाण्यमिति चेदाह— ॥ पौरुषेये त्विति ॥

लोके हि पुरुषप्रणीतवाक्येषु मूलकारणं प्रमाणान्तरमुपलभ्यैव पुरुषैर्वाक्यकरणात् प्रमाणान्तराभावे पौरुषेयवाक्यानामप्रामाण्य, वेदे तु मूलान्तरं किञ्चिदनपेक्ष्यैव वेदवाक्यं स्वार्थे स्वत एव प्रमाणम् ; वेद-प्रतिपाद्यार्थानां अग्निहोत्रनिष्ठस्वर्गसाधनत्वादीनामलौकिकत्वेन प्रमाणान्तर-विषयत्वासंभवात् । न च तर्हि स्यादप्रामाण्यमेवेति बाधकानुपलम्भात् । लौकिकेतरत वेदवाक्यं न कदाचिदपि दुष्यति ॥ ७१ ॥

ननु तर्हि चोदनानामन्यमूलान्तरत्वात् संवादाभावः, तत एव चाप्रामाण्यमिति चेदाह ॥ तेनेतरैः इति ॥

यस्माद्धि कारणात् वेदवाक्यानि ( चोदनाः ) न प्रमाणान्तर-मूलानि, तस्मादेव हेतोः चोदनानां प्रामाण्यं सुदृढं भवति । अन्यथा

तथैव स्यात् प्रमाणत्वमनुवादत्वमन्यथा ॥ ७२ ॥

अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।
तुल्यार्थानां विकल्प्यत्वात् एकं तत्र हि बोधकम् ॥ ७३ ॥

---

हि प्रमाणान्तरप्राप्तार्थबोधकत्वेन वेदवाक्यानां मुख्यं प्रामाण्यं नैव भवेत् अपि तु अनुवादत्वमेव स्यात् । सूत्रकारश्च भगवान् " **अर्थेऽनुपलब्धे** " इति " **अप्राप्ते शास्त्रमर्थवत्**"दित्यादि च वक्ष्यति ; अपौरुषेयत्वेन चोदनायाः प्रमाणान्तराभावेऽपि च ; अनाप्तप्रणीतत्वदोषाभावेन प्रत्यक्षाद्यगतार्थत्वे नैवाप्रामाण्यम ; प्रत्युत तदेव मुख्यप्रामाण्यसाधकतया गुणायैव भवति ॥ ७२ ॥

एतावत्पर्यन्तं लौकिकवाक्यानां प्रमाणान्तरमूलत्वं (संवाद): प्रामाण्ये कारणमित्यभ्युपगम्यावदाम । वस्तुतस्तु न संवादात् प्रामाण्यं लोकेऽपि; उभयोरपि स्वतः प्रमाणत्वेन परस्परापेक्षाभावात् । लोकेप्येवं चेत्– किमुत प्रमाणान्तराविषयार्थकानां चोदनानामित्याह– ॥ **अन्यस्यापीति** ॥

**अन्यस्य** लौकिकवाक्यस्यापि **प्रमाणत्वे** स्वीकर्तव्ये **नैव संगतिः**– संवादः, इतरप्रमाणमूलत्वं न हेतुः उभयोरपि तुल्यरूपत्वात् एकमेव तत्र बोधात्मकत्वात् विकल्पेन पुरुषं प्रवर्तयति । "**एकार्थास्तु विकल्पेरन्** इति (१२–३–१०) **द्वादशाध्यायन्यायात्** यथा व्रीहि यवयोः । अतः न कुत्रापि संवादाधीनं प्रामाण्यमिति ॥ ७३ ॥

यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।
नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ ७४ ॥

---

एकार्थविषयकानेकप्रमाणसमावेशे कस्य निर्णायकत्वं ? यथा कश्चन पुरुषः पाकार्थमग्निमपेक्षमाणः आप्तवाक्यादवगच्छति— अमुकस्थले अग्निरस्तीति । उपसर्पंश्च तत् स्थलं दूरतः धूमदर्शनात् व्याप्त्यादिस्मरणपूर्वकमग्निमनुमिनोति, समीपं गच्छंश्च पश्यति चाग्निं ( प्रत्यक्षयति ) ; इति लोके दृश्यते । अत्र सर्वाण्यपि प्रमाणानि, परस्परसंवादीनि च वर्तन्ते । अतः संवादस्य प्रामाण्यकारणत्वमवर्जनीयमेवेत्यत्राह— ॥ यत्रापि स्यादिति ॥

एकार्थविषयकानेकप्रमाणप्रवृत्तिस्थले, पूर्वप्रमाणेन उत्तरोत्तरप्रमाणेन यथा अर्थोऽवधार्यते, तथा नावधृतः ; इति ज्ञायते ।तत्तत् प्रमाणप्रवृत्तिकालविशिष्टत्वस्य पूर्वपूर्वप्रमाणेनानवधारणात् । अतः कालांशस्याधिकस्य उत्तरप्रमाणेन ग्रहणात् भिन्नविषयकत्वं ; अत एव प्रामाण्यं च सिद्ध्यति । अन्यथा हि तानि, चाधिकविषयकत्वाभावात् अनुवादभूतानि स्युः । अथवा आप्तवाक्यात् अग्निपर्वतः इति सामान्यतया अवगतं ; अनुमित्या तु धूमदेशविशेषावच्छेदेनाग्निरवगम्यते ; अयं तु नाप्तवाक्यादवगम्यते, समीपप्रदेशगमने प्रत्यक्षेण तत्तत्काष्ठादिविशिष्टविशेषाग्निः प्रत्यक्षीक्रियते ; इति तत्रापि विशेषावगमो वर्तते इति न समानविषयकतेति प्रमाणानां भिन्नभिन्नविषयकत्वेन सार्थक्यमिति न दोषाय भवेत् । अतः न तत्रापि संवादाधीनं प्रामाण्यं भवति ॥ ७४ ॥

संगत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।
प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥

---

संवादाधीनं प्रामाण्यमित्यङ्गीकारे, पूर्वं गुणज्ञानाधीनत्वस्य प्रामाण्ये स्वीकृतौ यथा अनवस्थाख्यदोषः प्रतिपादितः तथा अत्रापीति दोषमाविष्करोति ॥ **संगत्या यदीति** ।

**यदि** ज्ञानस्य **पूर्वपूर्वस्य** प्रामाण्य **संगत्या** ( संवादात् ) **इष्येत,** तस्यापि **प्रमाणान्तरं** ( संवादकं ) **इच्छन्तः न व्यवस्थां,** परिसमाप्तिं **लभेमहि** प्राप्नुयाम । तथा चानन्तज्ञानपरंपराकाल्पनापत्तेः नैकस्यापि ज्ञानस्य प्रामाण्यं सिद्ध्येत् ।

अथ, कामं भवतु संवादज्ञानान्तरापेक्षत्वे **अनवस्थेति** । उदकाहरणात्मकार्थक्रियाज्ञानाद्धटकज्ञानस्य प्रामाण्यमभ्युपगच्छामः, **अविसंवादिज्ञानं, प्रमाण** ' इत्यत्रापि अर्थक्रियास्थितिरेव हि अविसंवादः । अर्थक्रियायां च जातायां न प्रमाणान्तरापेक्षा । **उक्तं** चापि **धर्मकीर्तिना प्रमाणवार्तिके**—

**प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।**
**अविसंवादनम " इति** (1-३)

**न्यायसूत्रे** च—

**प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यदर्थवत् प्रमाणम्** (१–१–१)
इति ।

**कस्यचित्तु यदीष्येत स्वत एव प्रमाणता ।**
**प्रथमस्य तथाभावे प्रद्वेषः किं निबन्धनः ॥ ७६ ॥**

---

**'प्रत्यक्षं अनुमानं च द्वे एव प्रमाणे;'** इति प्रतिज्ञाय **"न ह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानः अर्थक्रियायां विसंवदते"** इति च ॥ ७५ ॥

एवं च ज्ञानस्य प्रामाण्यं अर्थक्रियाज्ञानाधीनं; तच्च स्वतः प्रमाणमिति स्यात्; इति शंकायामाह— ॥ **कस्यचित्विति** ॥

अर्थक्रियाज्ञानमपि प्रमाणं सदेव हि अर्थक्रियां निश्चिनुयात्— न त्वप्रमाणभूतं इति स्वीकर्तव्यमेवाकामेनापि । तत्प्रामाण्यार्थं अपरार्थक्रियानुसरेण पूर्वोक्तरीत्या अनवस्था चापरिहार्यैव भवेत् । यदि चार्थक्रियाज्ञानं (उदकाहरणज्ञानं) अनपेक्षितज्ञानान्तरमेव प्रमाणं भवेत्; तर्हि प्राथमिकं यदर्थज्ञानं (घटादिविषयकज्ञानं)तदपि ज्ञानत्वाविशेषात् प्रमाणमित्येवेष्यताम् । न हि अर्थज्ञानं संशयात्मकं जायते; न वावबोधात्मकत्वाभावः । क्वाचित्कव्यभिचारस्तु अर्थक्रियाज्ञानेऽपि समानः; स्वप्नावस्थायां च अर्थक्रियाज्ञानस्यापि व्यभिचारदर्शनात् ।

अपि च- प्रवृत्त्यधीनः किल अर्थक्रियायामविसंवादनिश्चयः, प्रवृत्तिश्च प्रामाण्ययुक्तज्ञानाधीना, अर्थक्रियाज्ञानात्पूर्वं चाविसंवादाभावात् न प्रमाणज्ञानात् प्रवृत्तिर्भवेत । ततश्चान्योन्याश्रयः अपरिहार्यो भवेत् । प्रामाण्यसिद्धये अर्थक्रियापेक्षा, अर्थक्रियासिद्धौ च प्रामाण्यनिश्चयः इति अत्यन्त नश्वरैः विद्युदादिवस्तुभिः न काप्यर्थक्रिया भवति । एवं च विद्युदादिविषयकं ज्ञानं न प्रमाणं भवेत्; न चेष्टापत्तिः, विद्युद्भिभङ्गादेः ईश्वर सद्भावलिङ्गत्वेन भगवता **पराशरेण** स्वीकृतत्वात् । यथा—

श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसंगतेः ।
स्याच्चेत् तज्जनितेनैव ज्ञानेनान्येन संगतिः ॥ ७७ ॥

---

मेघोदयः सागरसन्निवृत्तिः
विद्युद्विभङ्गः स्वरितानि वायोः ।
... ... ... ... ... ...
... ... ईश्वरसाधकानि (वि-पु) ॥ "

कथनात् । एवं निर्विकल्पकमप्यप्रमाणं स्यात् । तस्मादविसंवादि यत ज्ञानं तत् प्रमाणमिति परमिष्टम ; अर्थक्रियास्थितिरेवाविसंवादः इति तु न युक्तम् । अर्थान्यथात्वज्ञानहेतूत्थदोषज्ञानाभ्यां विसंवादः उत्पन्नस्य ज्ञानस्य । तदभावे त्वविसंवादः । तावन्मात्रेण च प्रामाण्यम् । इदं पूर्वं विवृतमिति तदर्थं न प्रयत्यते । तथा च न प्रामाण्ये संवादापेक्षेति न ज्ञाने स्वतः प्रामाण्यस्य भङ्गो भविष्यति ॥ ७६ ॥

संवादात् प्रामाण्यं इति वदन्तं पृच्छामः— किं विजातीयकारणजविज्ञानसंवादाधीनं प्रामाण्यं ? उत सजातीयकारणजविज्ञानसंवादात् ? इति **तत्राद्ये** लोकविरोधः, **द्वितीये** च भवदभिमतवेदाप्रामाण्यासिद्धिः ; इत्याह श्लोकद्वयेन— ॥ **श्रोत्रधीश्चाप्रमाणमित्यादि** ॥

श्रोत्रेन्द्रियजातायाः शाब्दबुद्धेः चक्षुरादिजन्याभिर्बुद्धिभिः संवादाभावात **न सा प्रमाणं स्यात्** ; तत्तदिन्द्रियाधीनबुद्धेः भिन्नभिन्नविषयकत्वे

वेदेऽपि शतकृत्वः स्यात् बुद्धिरुच्चारणानुगा ।
प्रमाणान्तरजन्या तु बुद्धिर्नास्ति द्वयोरपि ॥ ७८ ॥

यथात्वेनेन्द्रियाधीनज्ञानान्तरनिबन्धना ।
संगतिः कारणं क्लृप्ता तथा वेदेऽपि कल्प्यताम् ॥ ७९ ॥

तस्मात् दृढं यदुत्पन्नं न विसंवादमृच्छति ।

---

न संवादाप्रसक्तेः । यदि च द्वितीयविकल्पमाश्रित्य तत्तदिन्द्रियजन्यायाः बुध्देः, तत्तदिन्द्रियजन्यबुद्ध्यन्तरेण संवाददर्शानात् प्रामाण्यमिष्येत्तर्हि वेदेऽपि तत्तद्वाक्योच्चारजन्या बुद्धिः शतकृत्वो भवतीति सा नाप्रमाणमिति न भवदिष्टसिद्धिर्भवेत् । प्रमाणान्तरजन्यबुद्धिः संवादरूपा लोकेऽपि तत्तदिन्द्रियजन्यबुद्धिषु नास्तीति समानमेव । विजातीयकारणजनितविज्ञानसंवादः न प्रत्यक्षादौ, नापि वेदे, सजातीयकारणजनितविज्ञानसंवादश्च उभयत्र सममेवेति भावः ।

तदिदमुक्तम्— ॥यथात्वेनेन्द्रियाधीनेत्यादिना ॥

एवं प्रामाण्यस्य सिद्धौ गुणसंवादार्थक्रियादिज्ञानानां अपेक्षाया दोषानुद्भाव्य कीदृशं ज्ञानं प्रामाण्यम् ? इति निरूपणपूर्वकं प्रकरणार्थमुपसंहरति- ॥ तस्मात् दृढमिति ॥

पूर्वोक्तरीत्या ज्ञानप्रामाण्यस्य परापेक्षत्वे बहुदोषसद्भावात् यत् ज्ञानं उत्पन्नं, दृढं (असंदिग्धं) न ज्ञानान्तरेण विसंवादं (विरोधं) भजते तत् विशिष्टज्ञानं प्रमाणमिति प्रतीयताम् ।

ज्ञानान्तरेण विज्ञानं तत् प्रमाणं प्रतीयताम् ॥ ८० ॥

नचानुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि मा प्रापत् प्रमाणान्तरसाध्यता ॥ ८१ ॥

---

अत्र त्रिविधाप्रामाण्याभावनिरूपणं, स्मृतिप्रामाण्यनिरासश्च क्रियते । तथाहि- **दृढ** इत्यनेन संशयात्मकाप्रामाण्यव्यावृत्तिः ; कोटिद्वयावगाहित्वेन संशयस्य एककोट्यवधारणरूपदार्ढ्याभावात् । '**यदुत्पन्नं**' इत्यनेन ज्ञानानुत्पत्तिरूपा ( ज्ञानाभाव ) प्रामाण्यनिरासः क्रियते । '**ज्ञानान्तरेण न विसंवाद**'मित्यनेन विपर्ययात्मकाप्रामाण्याभावः द्योत्यते । '**विज्ञानं**'मिति पदेन विशिष्टविषयकज्ञानमित्यर्थस्य लाभात् ( अधिकविषयक ) स्मृतेः प्रामाण्यनिरासः क्रियते ; **स्मृतेः** पूर्वज्ञानादनधिकविषयत्वात् ॥ ८० ॥

ननु एतावद्धि निरूपणं, यदि लोके कुत्रापि शब्दस्य ( वाक्यस्य ) प्रमाणान्तरासंगतस्यापि प्रामाण्ये दृष्टे किल घटेत । वेदस्यापि शब्दरूपत्वेन लौकिकशब्ददृष्टान्तेन प्रामाण्यप्रत्याशा भवेत् । पौरुषेयं सर्वं प्रमाणान्तरप्रतिपन्नार्थमेव हि दृश्यते । अतः वेदप्रामाण्यं न सुनिरूपमिति चेदाह- ॥ **न चानुमानतः इति** ॥

शब्दादीनां प्रमाणता ( प्रामाण्यं ) **न चानुमानतः** साध्या इत्यन्वयः । **अनुमानतः** प्रामाण्याङ्गीकारे चोत्तरार्धेनानिष्टप्रदर्शनं क्रियते

ननु प्रमाणमित्येव प्रत्यक्षादि न गृह्यते ।
न चेत्थं अगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥

---

**अयमाशयः**– प्रमाणानि सर्वाण्यपि नानुमानसाध्यप्रामाण्यवन्ति । तथा चेत्– दृष्टान्तप्रदर्शनापेक्षा भवेत ; अनुमानप्रमाणे सपक्षावश्यकतायाः अवर्जनीयत्वात् । क्व दृष्टमिति पर्यनुयोगः अस्मान् प्रति भवता क्रियेतापि । प्रमाणानां प्रामाण्य हि स्वत एव हि दृष्टम् । यथा प्रत्यक्षादौ । अनुमानेन च प्रामायसाधने, तस्यापि किञ्चिदनुमानान्तसापेक्षत्वेन अनवस्था चापरिहार्येव हि भवेत् । तथा च कस्यापि प्रामाण्यं दुर्निरूपमेव हि भवेत् ।

ननु नीलादिज्ञानं यथा नीलादिक स्वविषयमवभासयति न तथा ज्ञानगतं प्रामाण्यमपि । विषयावभासश्च प्रमाणतयावभासमान एव हि पुरुषप्रवृत्तौ कारणं भवेत् । अत एव तान्त्रिकैः प्रोच्यते "**सम्यक् ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिः**" इति । सम्यक् ज्ञानं नामार्थक्रियाज्ञानं, तत्संवादितया चावधारितप्रामाण्यं विज्ञानं प्रवृत्तिकारणं ; ततश्च परतः प्रामाण्यं न परिहार्यमिति शङ्कते– ॥ **ननु प्रामाणमित्येवमिति** ॥

यथा अप्रमाणात्मकज्ञाने अप्रामाण्य स्वतो नावसीयते, इति अप्रामाण्यं परत एवेति भवतां मतं, तद्वत् प्रमाणज्ञानमपि प्रमाणतया नावभासते इति प्रामाण्यमपि परत इतीष्यताम् । अगृहीतेन प्रमाणतया च न व्यवहारः प्रवृत्त्यादिः अवकल्पते ( सिध्यति ) अतः प्रमाणान्तरापेक्षमेव प्रामाण्यमिति वेदाः अप्यप्रमाणमेव स्युः ॥ ८२ ॥

प्रमाणं ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम् ।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥ ८३ ॥

तेनास्य ज्ञायमानत्वं प्रामाण्ये नोपयुज्यते ।

---

तत्र परिहारं प्रकाशयति- ॥ **प्रमाणं ग्रहणादिति** ॥

ज्ञानगतं प्रामाण्यं अगृहीतमपि स्वरूपेणैव विद्यमानं विषयपरिच्छेदायालं भवति । यथा अगृहीतशक्तीन्यप्यक्षीन्द्रियाणि परानपेक्षाण्येव स्वकार्याय प्रभवन्ति ; रूपादिग्रहणरूपकार्यान्यथानुपपत्त्या पश्चात् तत्तच्छक्तिमत्तया चावसीयन्ते । न च तच्छक्तिज्ञानं कार्याय (तत्तद्विषयज्ञानाय) उपयुज्यते च । तथा प्रत्यक्षादिप्रमाणज्ञानमपि तत्कार्ये विषयपरिच्छेदे तद्गतप्रामाण्याग्रहणेऽपि संस्थितमेवोपयुज्यते । यदि जिघृक्ष्यते कदाचित् गृह्येताप्यनुमानादिना । न तु विषयपरिच्छित्तिवेलायां तद्ग्रहणमवश्यमपेक्ष्येत इति वक्ष्यति च भाष्यकारः- ' **ज्ञातेत्वनुमानादवगच्छति** 'इति ॥८३॥

ननु पूर्वं "**सङ्गत्या यदिचेष्येते**"त्यादिवार्तिकेण प्रामाण्यस्य प्रत्ययान्तरैर्ग्रहणे स्यादनवस्थेत्युक्तम् । इदानीन्त्वुच्यते ' **गृह्यते प्रत्ययान्तरैः** ' इति । कथमत्र व्याहतिः परिह्रियेते इति चेत्-

**अयमाशयः**- बाधकादीनां निवृत्तौ अर्थपरिच्छेदान्यथानुपपत्त्या (ज्ञातत्वेन) ज्ञानमनुमीयते । तच्च प्रमाणभूतमेवेति च । ज्ञानस्वरूपं (प्रमाण) प्रत्ययान्तरैरवधार्यते । तच्चावगतपूर्वमेव अतश्च प्रमाणस्यास्य प्रत्ययान्तरेण ज्ञायमानत्वं न प्रामाण्ये उपयुज्यते । ज्ञानस्य प्रामाण्यं चेदमेव यत् स्वविषयप्रकाशनम् ; तच्चादिमज्ञानेनैव जातमिति न प्रत्ययान्तरापेक्षा भवेदित्याह- ॥**तेनास्य ज्ञायमानत्वमिति** ॥

विषयानुभवो ह्यत्र पूर्वस्मादेव जायते ॥ ८४ ॥

अप्रमाणं पुनः स्वार्थग्राहकं स्यात स्वरूपतः ।

---

तेन पूर्वोक्तहेतुना, ( सत्तामात्रेण स्वकार्यालं भवतीति हेतुना ) ज्ञायमानत्वं ( गृह्यमाणत्वं ) न प्रामाण्ये आवश्यकम् । विषयानुभव-( प्रकाशन ) रूपप्रामाण्यं च पूर्वस्मादेव ज्ञानाज्जायते ; इति ।

ननु—

आत्मलाभे च भावानां कारणापेक्षता भवेत् ।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ चो.सू. ॥

इति पूर्वोक्तवार्तिकेणैव अस्यार्थस्य प्रतिपादनात् पुनरनेनापि वार्तिक संदर्भेण तत्साधने पुनरुक्तत्वरूपदोषः स्यादिति चेत ब्रूमः— पूर्वं ' आत्मलाभे 'ति वार्तिकेणार्थविषयपरिच्छित्तौ स्वग्रहापेक्षा नेत्युक्तम् । अत्र च पुरुषप्रवृत्तिलक्षणव्यापारं प्रति न प्रामाण्यग्रहणापेक्षेति निरूप्यते । अतः विषयभेदात् न पौनरुक्त्यदोषो भवेदिति ॥ ८४ ॥

अप्रमाणे तु अप्रामाण्यग्रहणार्थं व्यवहारनिवृत्त्यर्थं वा परापेक्षा अवर्जनीयेव । शुक्तिकादौ जातं रजतज्ञानं बाधकादिज्ञानगृहीतमिथ्यार्थं, तत्र प्रवर्तमानं पुरुषं तस्मान्निवारयति ; मिथ्यात्वग्रहणात् पूर्वं तदपि प्रमाणमेवावभासते । उत्पत्तिवेलायां प्रमाणाप्रमाणयोरविशेषात ; इति तत्र परापेक्षां प्रदर्शयति— ॥ अप्रमाणं पुनः इति ॥

अप्रमाणं ज्ञानं च स्वरूपतः (स्वभावत ) स्वार्थग्राहकं स्यात । तस्य निवृत्तिः पुनः परैः ( प्रत्ययान्तरैः ) मिथ्यात्वेन गृहीते न भवेत् ।

निवृत्तिस्तस्य मिथ्यात्वे न गृहीते परैर्भवेत् ॥ ८५ ॥

नह्यर्थस्यान्यथाभावः पूर्वेणात्तस्तथात्ववत् ।
तत्राप्यर्थान्यथाभावे धीर्यद्वा दुष्टकारणे ॥ ८६ ॥

---

अयं भावः—

इदं रजतं, अयं सर्पः इत्याद्यप्रमाणज्ञानस्थले च यादृशं हि ज्ञानस्य स्वरूपं तादृशमेव आरोपेण अर्थे भासते। ज्ञानस्य शुक्त्यादौ रजताद्याकारः अप्रमाणमेव हि भवति ; अत एव च तस्य मिथ्यात्वमपि। ज्ञानं च मिथ्यात्वमात्मनः (अनर्थविषयकत्वं) न स्वतः प्रवेदयति। तद्ग्रहार्थं ज्ञानान्तरापेक्षा आवश्यकी भवति। मिथ्यात्वग्राहकप्रत्ययान्तराभावे च ज्ञानस्य स्वार्थे ज्ञानस्वरूपारोपरूपमिथ्यात्वं नैव निवर्तेतेति प्रामाण्यव्यवहारोऽपि प्रसज्येत। ज्ञानानुरूपत्वाद्व्यवहारस्य। अतस्तन्निवृत्तये अप्रमाणज्ञानस्थले प्रत्ययान्तरस्यावश्यकता नियमेन वर्तते ॥ ८५ ॥

प्रत्ययान्तरागृहीतं मिथ्यात्वं न निवर्तते इति यदुक्तं तत्रोपपत्तिं प्रदर्शयति— ॥ नह्यर्थस्यान्यथाभावः इति ॥

ज्ञानं सर्वमपि उत्पत्तिवेलायां तथाभूतमेव (यादृशं ज्ञानं तथाभूतोऽर्थः) हि जायते। अयथार्थभूतातथाभावश्च न पूर्वेणाप्रमाणेनोपात्तः (अपरिच्छिन्नः) प्रामाण्यं चात एव स्वतः इत्युच्यते। ततश्च न प्रामाण्ये परापेक्षा भवति। अर्थान्यथाभावरूपाप्रमाणं तु पूर्वज्ञानादसिद्धं प्रमाणान्तरं स्वभानायापेक्षते। अत एव च परतः भवत्यप्रामाण्यम् (मिथ्यात्वं)।

तावत्तत्र च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।

---

ननु च भवतु परतो मिथ्यात्वं, तथापि मिथ्यात्वग्राहकपरस्यापि प्रमाणान्तरेण ( मिथ्यात्वग्राहकानुमानात् ) परतोऽप्रामाण्यं प्रसज्येत । तच्चोक्तमेव—

स्वर्गयागादिसम्बन्धविषयाश्चोदना मृषा ।
प्रत्यक्षाद्यगतार्थत्वात् ईदृग्बुद्ध्यादिवाक्यवत् ॥

(चो–सू–२६)

इति चेत् तत्राह– '**तत्रापीति**' न यतः कुतश्चिन्मिथ्यात्व- मिति । अपि तु बाधकप्रत्ययः नैतदेवमित्याकारकः, कारणदोषज्ञानं वा भाष्यकारश्चोत्तरत्र वक्ष्यति **बौद्धनिराकरणवेलायां** '**यस्य च दुष्टं करण यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययः** इति । वेदोत्थप्रत्ययस्य च मिथ्यात्वकारणीभूतैतदुभयासंभवात् नाप्रामाण्यप्रसङ्गोऽपि भवेत । उत्तरत्र च **वार्तिककारः** वक्ष्यति– "**हेतुद्वयप्रयुक्ते च मिथ्यात्वे सर्वबुद्धिषु**" इति । अतः नानुमानमात्रात् मिथ्यात्वमिति ॥७६॥

ननु पूर्वोक्तहेतुभिः ( अनुमानैः ) मिथ्यात्वं यन्निश्चीयते, तत निग्रह- स्थानाय न भवतीति यदुक्तं तत् किं शपथरूपं इति चेदाह– ॥ **तावत्तत्र चेति** ॥

नायं शपथनिर्णयः ; किंतु अनुमानात् **मिथ्यात्वं** ज्ञानानामवगन्तुमेव न पार्यते । सत्प्रतिपक्षादिहेत्वाभासैः ( प्रतिहेतुविरुद्धत्वादिभिः ) अनु-

उत्पत्त्यवस्थमेवेदं प्रमाणमिति मीयते ॥ ८७ ॥

---

मानभङ्गात् । ये च नास्तिकाः अनुमानगणैः वेदाप्रामाण्यं सिषाधयिषन्ति, तेषामेव हानिकारकत्वाच्च । शक्यते च तदागमानां मिथ्यात्वमनुमातुं वाक्यात्वादिहेतुजालैः । अतः पूर्वोक्तेन कारणद्वयेनैव (अर्थान्यथात्वज्ञानकारणदोषज्ञानान्यतररूपेणैव ) लोके ज्ञानानामप्रमाण्यं गृह्यते । नान्यहेतुना । परैः प्रयुज्यमानाश्च हेतवः चोदनाजनितासंदिग्धाविपर्यासितज्ञानविरूद्धा न चोदनागतप्रामाण्यनाशने प्रभवेयुः ।

ननु अप्रामाण्यनिश्चायकत्वेनाभिमतं अर्थान्यथात्वज्ञानं दुष्टकारणत्वज्ञानं वा नाप्रमाणं सत् पूर्वज्ञानाप्रामाण्यनिश्चयाय प्रभवेत् , प्रामाण्यं तस्य च दुरुपपादम् ; पूर्वज्ञानस्य तद्विरुद्धस्य जागरूकत्वात् । अतश्चाप्रमाणभूतेन अर्थान्यथात्वज्ञानादिना कथं पूर्वस्याप्रामाण्यनिश्चयः ? इति चेत् तत्र परिहारमाह— ' **उत्पत्त्यवस्थमित्यादिना** 'मिथ्यात्वनिश्चायकमिदं उभयविधं ज्ञानमपि उत्पत्त्यप्रमाणवस्थमेवोत्पद्यते (ज्ञायते) ; त्रिविधस्यात्यप्रामाण्यस्यासंभवात् । उत्पन्नत्वात् नानुत्पत्तिलक्षणाप्रामाण्यं निश्चयरूपत्वात् नसंदिग्धात्वरूपाप्रामाण्यं ; नापि बाधकान्तरमुपलभ्यते ; नेदं रजतमित्यादिज्ञानस्य ततश्च न विपर्ययात्मकप्रामाण्यस्य प्रसङ्गः । अतस्तत् प्रमाणमेव । तेन च पूर्वस्य मिथ्यात्वमापादयितुं युज्यत एव । तस्यापि बाधकप्रत्ययोदये तु अप्रामाण्यमिष्यते एव । यथा चैवं सति नानवस्था तथा पूर्वं न्यरूपि ॥ ८७ ॥

अतो यत्रापि मिथ्यात्वं परेण प्रतिपाद्यते ।
तत्राप्येतत् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ ८८ ॥

चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः ।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥

---

पूर्वं यत् अप्रामाण्ये कारणद्वयं निरूपितं, तत् आत्मसाक्षिकं लोकसाक्षिकं च भवति । अतश्च परेभ्योऽपि मिथ्यात्वं प्रतिपादयितुं एतदन्यतरदेव वक्तव्यम् । न तु यत् किञ्चित् साधर्म्यमात्रं, प्रत्यक्षाद्यगनार्थत्वादिकं इत्याह-
॥ अतो यत्रापि मिथ्यात्वमिति ॥

यत्रापि स्थले मिथ्यात्वं परेण निरूप्यते, तत्रापि तेन एतत्द्वयं एव प्रामाण्याभावे हेतुत्वेनोपन्यसनीयं ; ( अर्थान्यथात्व-कारणदोषज्ञानं ) अन्यतरस्मिन्नेव तात्पर्यम् ; न समुच्चये । तावतैवाप्रामाण्यसिद्धेः न तु साधर्म्यमात्रकं, साधारणहेतवः नोपन्यसनीयाः; व्यभिचारादिहेत्वाभासप्रसङ्गात् इति ॥ ८८ ॥

अनुमानगणैश्च चोदनानामप्रामाण्यं साधयतां आगमैर्विरोधं चाह-
॥ चोदनार्थान्यथाभावमिति ॥

अनुमानात् चोदनार्थान्यथाभावः ( अप्रामाण्य ) साधयतः भवतः स्यादयं बाधः ; यथा- वेदवाक्यं यत् ज्ञानं जनयति, तस्य न अप्रामाण्यं त्रिविधमपि दृश्यते ; स्वतश्च प्रमाणमिति च दृश्यते । अतः तद्बाधः कथमनुमानेन भवेदिति । अतः भवदीया प्रतिज्ञा, चोदनाजनिता बुद्धिः मृषा इत्याकारिका ‘ बहि-

तन्मिथ्यात्वादबाधश्चेत् प्राप्तमन्योन्यसंश्रयम् ।
नानुमानादतोन्यद्धि बाधकं किञ्चिदस्ति ते ॥९०॥

न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।

---

रनुष्णः' इति प्रतिज्ञार्थं बाध्यते । महति च तस्मिन् परिपन्थिनि विद्यमाने, अप्रामाण्यस्य वाक्यत्वादिहेतूनां संबन्ध एव (व्याप्तिरेव) न गृहीतुं पार्यते ; ततश्चानुमानसामग्रीभङ्गात् न भवदनुमानप्रसरावकाशः संभवतीति ॥ ८९ ॥

ननु चागमोत्थज्ञानस्य मिथ्यात्वेन नानुमानबाधस्संभवतीति चेदाह– ॥ तन्मिथ्यात्वादबाधश्चेत् इति ॥

चोदनाजनितं ज्ञानं मिथ्या यदि, तर्हि न तेनानुमानबाधः भवितुमर्हति । अतः अनुमानेनैव तद्बाधः वाच्यः; अतस्तन्मिथ्यात्वादनुमानप्रमाणता । अनुमानप्रामाण्याच्च चोदनामिथ्यत्वमित्यन्योन्याश्रयः दोषः वज्रलेपायते ।

यदि चोदनाज्ञानस्य अनुमानभिन्नं बाधकान्तरं उपलभ्येत, तदा तदधीनाप्रामाण्यवत् चोदनाजन्यं ज्ञानं नानुमानबाधकं भवेत् । न चान्योन्याश्रयदोषः; न चानुमानादन्यत् किञ्चित् बाधकमस्ति ते । अतः न चोदनायाः प्रकारान्तरेण प्रतिहतिर्भवति ॥ ९० ॥

ननु न चोदनाजनितायाः बुद्धेः अनुमानादन्यत् बाधकं नास्ति; तस्मादन्योन्याश्रयः ; इति यदुक्तं तन्न घटते बाधकान्तरस्य संभवात्;

तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥ ९१ ॥

तद्धियैवार्थबोधश्चेत् तादृक् धर्मे भविष्यति ।

---

तच्च प्रमाणान्तरसंवादाभावरूपमेवेति मिथ्यैव चोदनाजनिता बुद्धिशङ्कायामाह— ॥ न चान्यैरिति ॥

वेदाप्रामाण्यवादिभिः चोदनाजनिता बुद्धिः, मृषा, प्रत्यक्षाद्यगतार्थत्वात् , इत्युपन्यस्तम् । हेतुवाचकपदं हि, प्रत्यक्षादिभिश्चोदनार्थस्याप्रतीयमानत्वात् इत्यर्थबोधकं भवति । तथा च प्रमाणान्तरसंवादाभावात् इत्यर्थः संपन्नः । पूर्वं चेदं निराकृतमेव न संवादाधीनत्वं प्रामाण्यस्येति । एव स्वीकारे च रूपरसादिज्ञानं तत्तदिन्द्रियैर्जायमानं प्रमाणत्वेन संमतं यल्लोके तत्सर्वमप्रमाणमित्येव स्यात् ; चाक्षुषस्य रूपज्ञानस्य जिह्वादिजज्ञानसंवादादर्शनात् । रूपादीनां चक्षुरादिभिरेव ग्रहणं हि नियतं दृश्यते । एवं चेन्द्रियान्तरसंवादाभावेन रूपादिज्ञानाप्रामाण्ये रूपादीनामभाव एवेति प्रसज्येत । अतः भवदुक्तो हेतुः व्यभिचरितः ; मृषात्वाभावेऽपि, तत्तदिन्द्रियजप्रत्यक्षाद्यगतत्वदर्शनात् । अनुमानोत्पत्तिरेव नास्तीति निरूपणे एव ग्रन्थकारतात्पर्यम् ; इति तु युक्तम् । तथा चानुमानस्य प्रतिबन्धकत्वेनाभिमतस्यानुदये (साधकं) चोदनात्मकं प्रमाणं स्वतो जागर्तीति न धर्मस्वरूपासिद्धिः ॥ ९१ ॥

अथ रूपज्ञानस्य चाक्षुषस्य चाक्षुषेणैव रूपज्ञानान्तरेण संवादसंभवात् ( समानजातीयज्ञानान्तरसंवादात् ) वेदे तु तस्याप्यभावादप्रामाण्यमेवेति चेदाह— ॥ तद्धियैवेति ॥

तद्विषयकधिया ( ज्ञानान्तरेण रूपादिविषयकेन ) प्रामाण्यमिति चेत्, इति शङ्का । तत्र समाधानम्— तादृक्धर्मेति ॥

ममासिद्धमितीदं वेदाज्जातेऽवबोधने ॥ ९२ ॥
वक्तुं न द्वेषमात्रेण युज्यते सत्यवादिनाम् ।

---

अयमाशयः— तथा सति धर्मेऽपि ( वेदार्थे ) वेदोत्थज्ञानान्तरेण संवादः सुनिरूप इति न अप्रामाण्यप्रसक्तिर्वर्तते। न च पूर्वं 'संगत्या यदि चेष्यते' त्यादिना ( ७५ श्लो ) संवादाधीनप्रामाण्यशङ्कायाः निराकरणेन, अत्रापि तत्प्रतिपादनं पुनरुक्तिदोषग्रस्तं भवेदिति वाच्यम्। पूर्वं प्रमाणस्य कस्यचित् प्रामाण्यं हि न प्रमाणान्तरापेक्षं भवतीति प्रोक्तम्। इदानीं तु प्रमेयोऽप्यर्थः एकेनैव यदि सिद्धो भवेत्, न तत्र स्वसिद्धये प्रमाणांतरापेक्षा वर्तते इति निरूप्यते। अथवा पूर्वोक्तेतरेतरप्रसङ्गनायोच्यते इति तात्पर्यभेदात् न पौनरुक्त्यदोषः ॥

ननु मदुक्तानुमानस्य आगमबाधः यः उद्भावितः सः नैव युज्यते, भवदीयागमस्य (चोदनायाः) मयाप्रामाण्यानभ्युपगमात्, यस्य हि वादिनः यः आगमः प्रमाणत्वेनाभिमतः, तस्य तदागम एव विरोध एव दोषत्वेनोद्भावनीयः। न च बौद्धस्य मम वेदः प्रमाणत्वेनाभिमतः इति शङ्कायामाह— । ममासिद्धमिति ।।

वेदवाक्यश्रवणेन बौद्धानां भवतामपि बुद्धिरुदेति ; उत न । नान्त्यः स्वहृदयविसंवादात् असत्यवादित्वप्रसङ्गाच्च भवतां, यदि सत्यवादित्वमिष्यते बुद्धिरुदेतीत्येवास्थेयम्। तथा च तस्य ज्ञानस्य, संदेहात्मकत्वस्य विपर्ययात्मकत्वस्य वा अभावात् प्रामाण्यं स्वीकार्यमेवाकामेनापि भवता। अतः द्वेषमात्रात ज्ञनापह्नवः न कर्तुं पार्यते ॥

द्वेषादसंमतत्वाद्वा न च स्यादप्रमाणता ॥ ९३ ॥

नचात्मेच्छाभ्यनुज्ञाभ्यां प्रामाण्यं अवकल्पते ।
अग्निदाहादिदुःखस्य न ह्यप्रत्यक्षतेष्यते ॥ ९४ ॥

---

किंच- यद्यपि तवासिद्धं स्यात् वेदप्रामाण्यं ; तथापि अस्माकं सिद्धमेव हि तत् । अस्माकं ज्ञानजननाय किल भवतां अनुमानप्रयोगः क्रियते । नैव च वयं आगमविरुद्धमर्थं अनुमानेन ग्राहयितुं प्रभवामः । अतश्चागम ( वेदः ) बाधः अनुमानस्य दूषणमेव भवति । आस्तां नः कथा ; तवासिद्धमितीदं तु स्वहृदयविसंवादिवचनमेव ।

नैव चाभ्युपगमानभ्युपगममात्रेण प्रामाण्याप्रामाण्ये सिद्ध्यत इति चाह- ॥ द्वेषादसम्मतत्वाद्वा इति ॥

ज्ञानानां अप्रामाण्यं द्वेषात् असंमताद्वा नैव भवेत् । यदि तथा स्यात् लोके न किञ्चिदपि प्रमाणं प्रसिद्धं भवेत् ; तत्तद्वादिनां वाद्यन्तरसंमतार्थेषु द्वेषस्य असंमतेर्वा नियमेन सत्त्वात् । ततश्च भवत्पक्षहानिरेव । यथा द्वेषः असंमतिर्वा नाप्रामाण्यं प्रति कारणं तथैव न प्रामाण्यमपि स्वेच्छाभ्यनुज्ञाभ्यां भवेदित्याह- ॥ नचेति ॥ तर्हि सर्वाण्यपि ज्ञानानि प्रमाणमेवेति, सर्वेऽपि च सिद्धान्ताः प्रमाणमिति, परपक्षनिराकरणे व्यर्थ एव प्रयासः स्यात् ; सर्वेषां वादिनां स्वस्वसिद्धान्तार्थे इच्छाभ्यनुज्ञयोः स्वाभाविकत्वेनापरिहार्यत्वात् । तद्रीत्यापि भवत्पक्षासिद्धिरेवेति स्यात् ।

द्वेषादप्रामाण्यं न भवतीत्यत्रोदाहरण प्रदर्शयति- ॥ अग्निदाहादीति॥

अग्निस्पर्शजं दुःखं यत् सर्वेषां तत् द्वेषविषय एवेति तत् प्रत्यक्षात्मकमप्यप्रमाणमेव भवेत् ; द्वेषविषयत्वात् असंमतत्वाच्च । नचेष्टापत्तिः ;

न चाभिलषिकं ज्ञानं प्रामाण्येनावधार्यते ।
तस्मादालोकवत् वेदे सर्वसाधारणे सति ।। ९५ ।।

नैव विप्रतिपत्तव्यं बौद्धादेर्वक्ष्यतेऽन्तरम् ।

---

अनुभवविरोधात् । अत्र 'न ह्यप्रमाणतेष्यते' इति वक्तव्ये न ह्यप्रत्यक्षतेष्यते' इति वार्तिके कथनं, ज्ञानस्य मीमांसकमते अप्रत्यक्षत्वेन, अप्रत्यक्षविषयस्य चाप्रत्यक्षशब्दवाच्यत्वमेवेति तात्पर्येण । न हि दाह-दुःखस्याप्रत्यक्षतेष्यते लोके केनापि । प्रत्यक्षप्रमाणविषयत्वाभावः (अप्रामाण्यमेव) स्यादिति तात्पर्येण न च तर्हि घटादीनामपि हि अप्रत्यक्षत्वं स्यात् 'अयं घटः' इति ज्ञानविषयत्वात् ; ज्ञानस्य च भवन्मते अप्रत्यक्षत्वात् इति वाच्यम् । तेषामैन्द्रियकत्वेनादोषात् ॥ ९४ ॥

आत्मेच्छाभ्यनुज्ञामात्रेण न प्रामाण्यं इति पूर्वोक्तं च विशदय्योपसंहरति— ॥ न चाभिलषिकं इत्यादि ॥

लोके सर्वो हि पुरुषः प्रामाण्यमभिलषति । आभिलाषिकज्ञानस्य प्रामाण्ये च पुरुषाः आशामोदकमात्रेणापि तृप्ता इति स्युः । नैतादृशज्ञानस्य प्रामाण्यमिष्यते केनापि । अतः पूर्वोक्तचोदनाविरुद्धं अप्रामाण्यानुमानं अप्रमाणमिति सदृष्टान्तमाह— ।। तस्मादिति ।।

यथा आलोकः ( प्रकाशः ) इष्टानिष्टोभयप्रकाशकः सर्वैरपि उपकारकत्वेन प्रमाणत्वेन स्वीक्रियते, नैव च तत्र कस्यापि ''नेदं प्रमाणम् '' इति विप्रतिपत्तिः दृश्यते ; तद्वत् वेदोऽपि सर्वस्य, असं-

पुरुषाशक्तितस्तत्र सापवादत्वसंभवः ॥ ९६ ॥

वेदस्यापौरुषेयत्वे सिद्धा त्वेवं प्रमाणता।
कर्तृमत्वे तु वेदस्य सम्यङ् मिथ्यात्ववादिभिः ॥ ९७ ॥

---

दिग्धाविप्रतिपन्नज्ञानजनकत्वेन प्रमाणमित्येवाभ्युपगन्तव्यः ; इति न तत्र मनागपि विप्रतिपत्तिः । तर्हि बौद्धागमादपि ज्ञानं जायते इति तस्यापि स्यात् प्रामाण्यमित्यत्राह ॥बौद्धादे'रिति। बौद्धागमादेः वेदानां अन्तरं ( विशेषं ) उत्तरत्र वक्ष्यामि । तदेव संक्षेपतो वक्ति– ॥पुरुषाशक्तितः इति॥ बौद्धाद्यागमानां अप्रामाण्य संभवति ; पुरुषकृतत्वात् तेषाम् ; अतीन्द्रियार्थदर्शने पुरुषशक्तेरपर्याप्तेः। स्वस्वागमानां पौरुषेयत्वं च तैरेव समाश्रितमेव। अतः तत्र प्रामाण्यापवादभूताप्रामाण्यसंभवः ॥ ९५–९६ ॥

वेदेषु चापौरुषेयेषु न तथेति प्रदर्शयति– ॥ वेदस्यापौरुषेयत्वेति।

एतत्पादान्ते वक्ष्यमाणवेदापौरुषेयत्वेन वेदे दोषशङ्काया एवानुदयात्, एवं पूर्वोक्तप्रकारेण स्वतः प्रमाणता सिद्धा वेदानामिति वेदानां बौद्धाद्यागमानां पौरुषेयत्वापौरुषेयत्वात्मक महदन्तरं सिद्धमिति ।

एतावता वेदानां अपौरुषेयत्वात् ते तावत स्वतः प्रमाणमिति विस्तरेण प्रतिपादितम । ये च नैयायिकादयः वेदे प्रामाण्यसिद्ध्यर्थं अप्रामाण्याय च कंचित् कर्तारं परिकल्पयन्ति । 'तद्वचनादाम्नायस्य प्रामाण्य अनाप्तप्रणीतत्वेन चाप्रामाण्य''मिति च वदन्ति । तेषां कल्पनागौरवमाह– । कर्तृमत्त्वे त्वित्यादि ॥

कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।
एवमादि विना कल्प्यं युक्त्या मीमांसकैः पुनः ॥९८॥

इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ।

---

वेदस्य कर्तृमत्त्वाङ्गीकारे ( पौरुषेयत्वाङ्गीकारे ) वेदे प्रामाण्याप्रामाण्याङ्गीकर्तृभिः, तेषां, प्रामाण्यसिद्ध्यर्थं, तस्मिन् गुणाः कल्पनीयाः अप्रमाण्यवादिभिश्च कल्प्यमाने कर्तरि दोषा अपि परिकल्पनीयाः; प्रामाण्याप्रामाण्ययोः कर्तृगतगुणदोषाधीनत्वात् । न तावन्मात्रं सम्यक्त्ववादिभिः महाजनपरिग्रहोऽपि परिकल्प्यः; अन्यथा कर्तृगतदोषशङ्कायाः अपरिहारात् निस्संदिग्धप्रमाणत्वासंभवात् सम्यग्वादिनातावत् । एवं कल्पना स्पष्टा तदीयग्रन्थेषु यथा—

ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम् ॥

नैवं कल्पनायां युक्तिरपि काचिदुपलभ्यते इति संबन्धापेक्षेपरिहारवादे उत्तरत्र स्फुटीभविष्यति । वेदमिथ्यात्ववादिनामपि दोषवतः कर्तुः कल्पना, एतावत्पर्यन्तं निराबाधमनुवर्तमानवेदसंप्रदायेन बाध्यत एव । अतः महाजनपरिग्रहस्य अनूचानतया विद्यमानत्वात् वेदमार्गे, न दोषवत्कर्तृकत्वं वेदानां, न वा कर्तृमत्त्वमपि; असमर्थमानत्वाद् मीमांसकैस्तु नादृष्टं कल्पनीयमित्याह- ॥ इदानीमिति ॥

इदानीं हि शिष्याचार्यपरंपरया वेदाः रक्षिताः दृश्यन्ते । एवमेव च पूर्वस्मिन् कालेऽप्यासीदितीष्यते मीमांसकैः । ततः न काचिन्मीमांसकानामदृष्टकल्पना ।

**एवं भूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः ॥ ९९ ॥**

**स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ ।**

---

एवं नित्यस्य अपौरुषेयत्वेन स्वतः प्रमाणस्य वेदस्य ज्ञानजनकत्वेन ज्ञानाभावरूपाप्रामाण्यं नैव शङ्कामप्यर्हति । अवशिष्टाप्रामाण्यद्वयं च संशयविपर्ययात्मकरूपं भाष्यकारैरेव निवारितम् इत्याह– ॥ **एवंभूतस्येति** ॥

**एवंभूतस्य**– अपौरुषेयतया स्वतः प्रमाणत्वेन, दोषरहितस्य अत एव, संशयविपर्ययात्मकाप्रामाण्यरहितस्य , ज्ञानं जनयतः, ज्ञानाभावरूपाप्रामाण्याभाववतः वेदस्य, तथा च त्रिविधस्याप्यप्रामाण्यगन्धस्य शून्यतया **वेदस्य** प्रामाण्यमप्रकम्प्यम् । एतावदेव किल प्रामाण्यं, यत् ज्ञानं, उत्पन्नं असंदिग्धं, प्रत्ययान्तरेणाबाध्यं इति । चोदनया ( वेदेन ) च ज्ञानं जायते भवतोऽपि, शब्दस्य योग्यतादिसामग्रीविशिष्टस्य ज्ञानजनकत्वस्वभावत्वात् । अवशिष्टं चाप्रामाण्यद्वयं भाष्यकारेणैव वारितं यथा– " **न च स्वर्गकामो यजेतेति वचनात् संदिग्धमवगम्यते भवति वा स्वर्गो न वेति । न चैष कालान्तरे देशान्तरे पुरुषान्तरे अवस्थान्तरे वा विपर्येति, तस्मादवितथमेवेति** । वेदवाक्यजन्यज्ञानानां त्रिविधाप्रामाण्यविरहात् सार्वदिकं प्रामाण्य निराबाधं विराजते ; इति ।

निवारयिष्यते चापि दुष्टकारणकल्पना ॥ १०० ॥

पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्किता ।
तथासत्यतथाभावः बुद्ध्यनुत्पत्तिमाश्रितः ॥ १०१ ॥

---

पूर्वश्लोके 'एवंभूत'शब्देन दोषराहित्यमप्यभिप्रेतं, तच्च नित्यं, अत एव च संशयविपर्ययौ न स्तः; इति च । तत्रेयं शङ्का तावदुदेति– काममिदानीं स्यातां, संशयविपर्ययाभावौ; कालान्तरे च तौ भवितुमर्हतः इति । अतः सुदृढ प्रामाण्यं सर्वदा वेदस्येति कथं इति चेदाह– ॥ **निवारयिष्येते** इति ॥

दुष्टकारणयुक्तत्वे हि पूर्वनिर्दिष्टशङ्कायाः उदयः भवति; शब्द-रूपस्य वेदस्य दोषश्च अनाप्तपुरुषसंबन्धसत्वे भवेत; न स्वतः, वेदे चापौरुषेयत्वात् न दोषगन्धोऽपि । इदं च एतत्पादान्ताधिकरणे स्पष्टं निरूपयिष्यते । अतः पुरुषद्वारेणाप्याशङ्का वेदे दोषशङ्का न कार्येति प्रामाण्यं वेदानामप्रकम्प्यमेव ।

**'नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना'** इत्याक्षेपभाष्यं यत् पूर्व-मुपक्षिप्तं, तत्र भाष्ये **'अतथाभूत'**मिति पदेन न संशयविपर्ययोर्ग्रहणं भवतीति भाष्यकारैरेव स्पष्टमुक्तम् । अवशिष्यते च ज्ञानानुत्पत्ति (ज्ञाना-भाव) रूपाप्रामाण्यं इति वक्तव्यम् । तदपि न घटते; इति विप्रति-षिद्धमभिधीयते ब्रवीति वितथं चे'ति भाष्येण कथ्यते । इदं च भाष्यं आक्षेप्तुः अनुभवविरोधात्मकं दूषणं दत्ते । तद्विवृणोति– ॥ **तथा सत्यतथाभावः** इति ॥

तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।

---

" **अतथाभूतमप्यर्थं ब्रूयात्** " इति दूषयिता भवान् अप्रामाण्यं चोदनानां साधयितुं हि प्रवर्तते । तन्न घटते ; त्रिविधाप्रामाण्येषु संशयविपर्ययौ अनुभवविरोधेन चोदनासु वक्तुमशक्यत्वात् । ज्ञानाभावरूपाप्रामाण्यमेव ( ज्ञानानुत्पत्तिरूपं ) भवत्संमतमिति वक्तव्यमित्यापतति । तत्र भाष्ये दूषणमभिधीयते " **ब्रवीति वितथं चेति विप्रतिषिद्धमभिधीयते** " इत्यादिना ।

**भाष्यस्यास्यायमाशयः,– ब्रवीति** ( बोधयति ) वितथं (न बोधयति) परिशिष्टमप्रामाण्यं ज्ञानाभावरूपं किल तथा च ज्ञानजनकं, ज्ञानाजनकं चेति आपादनं बौद्धैः क्रियमाणं विप्रतिषिद्धं व्याहतिग्रस्तमिति । ज्ञानजनकस्य वेदस्य कथं अज्ञानात्मकवैतथ्येनाभवः आपाद्यते । ज्ञानजनकत्वात् अकामेनापि प्रामाण्यमभ्युपगन्तव्यमेव हि भवेत् ।

ननु तर्हि बौद्धागमानामपि प्रामाण्यं भवतापि स्वीकर्तव्यमापतेत् । कुतः ? तेषामपि ज्ञानजनकत्वात् इति चेत् ब्रूमः– तेभ्यः ज्ञानमुत्पन्नमपि कारणदोषशङ्कायाः अप्रमाणमेव भवति । तच्छङ्कायां कारणं तु, बौद्धागमजन्यज्ञानस्य पौरुषेयवाक्यजन्यत्वमेव । वेदस्य चापौरुषेयत्वात् तदुत्थज्ञानस्य दोषसंबन्धशङ्काया अप्यप्रसरात् वेदप्रामाण्यमक्षतमेव विलसति । ब्रवीति कर्तरि लकारः । कर्ता च '**स्वतन्त्रः कर्ता**' इति स्वतन्त्रः स्मृतः । तथा च चोदनायाः कर्तृभूतायाः स्वातन्त्र्यं सूचितं चोदना हि स्वतन्त्रार्थं ब्रवीति ; न पुरुषापेक्षा ; इति पौरुषदोषाभावद्योतनेन वेदप्रामाण्यं सुस्थम । एतद्विस्तरस्त्वन्यत्र ।

यथा दृष्टार्थवादित्वं तच्चेत् प्रत्ययितादिति ॥ १०२ ॥

इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत ॥

---

पूर्वपक्षिणा हि– ' नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत किञ्चन लौकिकं वचनं नद्यास्तीरे फलानि सन्तीति । तत्तथ्यमपि भवति । वितथमपि भवती'त्यादि ।

भाष्येण लौकिकवचनदृष्टान्तेन चोदनायाः अप्रामाण्यमापादितम् । तत्र समाधातुं प्रवृत्तं भाष्यं–

' यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषयं वा अवितथमेव तत् । अथाप्रत्ययितात् पुरुषादनिन्द्रियविषयं वा, तत पुरुषबुद्धिप्रभवमप्रमाणम् ' अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनादिति,

तद्व्याख्यानाय प्रवर्तमानः प्रथमतः प्रत्ययितपदं व्याचष्टे ॥ यथा दृष्टार्थवादित्वमिति ॥

'यत्तु लौकिकं वचन'मित्यादि भाष्यं हि नन्वतथाभूतमित्यादि भाष्येण चोदना, अप्रमाणं, वचनत्वात् नद्यास्तीरेत्यादि लौकिकवचनवत् , इति पूर्वपक्षिप्रतिपादितानुमाने प्रतिज्ञा दूषणप्रदर्शनार्थं प्रावर्तत ।

तस्य चायमर्थः– योऽयं दृष्टान्तः (पौरुषेयवचनं) भवता प्रदर्शितः, तत्र एवं विकल्प्यते,पौरुषेयवाक्यं हि द्विविधं वर्तते; प्रत्ययितवाक्यं, अप्रत्ययित वाक्यं चेति । प्रत्ययितपदेन यथादृष्टार्थवादी पुरुषः अभिधीयते । प्रत्ययितत्वे

द्रष्टृत्वसत्यवादित्वे तच्चेत् प्रत्ययितादिति ॥ १०३ ॥

---

(यथादृष्टार्थवादित्वे) मूलं तु 'इन्द्रियविषयं वेत्यनेन सूच्यते। प्रत्ययितवाक्य मपि प्रमाणमूलक भ्रांतिमूलक चेति द्विविध भवति। तत्र यदि प्रमाणप्रतिपन्न-विषयकमाप्तवचनं दृष्टान्तत्वेन विवक्षितम् तर्हि दृष्टान्ते साध्यविकलता, तस्यावैतथ्यात्।

यदि चाप्रमाणमूलकं (भ्रान्तिमूलकं) वाक्यं विवक्षितं (दृष्टांततया) तर्हि दोषमूलकत्वेन सोपाधिकत्वं पौरुषेयं, हि वचनं वक्तृदोपदुष्टमप्रमाणं भवदपि न तदुपमानेन अपौरुषेयस्यात एव निर्दुष्टस्य वेदवाक्यस्याप्रामाण्य-शङ्का युज्यते। मिथ्यात्वे हेतुभूतस्य पुरुषदोषस्य वेदवचने त्वभा-वात।

भाष्ये "पुरुषबुद्धिप्रभव"मिति पदेनाप्रामाण्ये बीज सूचितम। अप्रत्ययितवाक्यं (अनाप्तवाक्यं) च वक्तुः अनाप्तस्य प्रमाणमूलमपि श्रोतु-रप्रमाणमेव; वञ्चकत्वेन ज्ञाते अनाश्वासात्। वेदवाक्यं च न तादृश-मिति न तत्सपक्षीकारेण वेदे मिथ्यात्वसाधनं युज्यते।

प्रत्ययितपदार्थे मतभेदं प्रदर्शयति— ॥ द्रष्टृत्वमत्यवादित्वेति ॥

भाष्यस्थप्रत्ययितपदेन प्रत्ययोऽस्य संजात इत्यर्थकेन यथावस्थितार्थ दर्शी, यथादृष्टार्थवादी (सत्यवादी) च पुरुषो हि विवक्षितः। एवं चैतादृश पुरुषोक्तवाक्यस्य प्रामाण्यं दृष्टमेवेति, वाक्यत्वहेतोः पूर्वपक्ष्यभिमतस्य चोद-नानां अप्रामाण्यसाधकत्वेनाभिमतस्य अत्र व्यभिचारः इति स्पष्टम् ॥ ९९.–१०३ ॥

**दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।**
**एवं त्वेकाङ्गवैकल्यात् प्रत्युदाहरणस्थितिः ॥ १०४ ॥**

---

तर्हि ' इन्द्रियविषयं ' वेति भाष्यं व्यर्थमेव भवेदिह, प्रत्ययितशब्देनैव, यथादृष्टार्थवादित्वार्थबोधकेन **' इन्द्रियविषयं' वेति** भाष्यलभ्यार्थबोधकेन गतार्थत्वात् इति चेदाह— ॥ **दृश्यमानार्थवादित्वेति** ॥

अनाप्तपुरुषोक्तमपि वाक्यं यदि श्रोतुरिन्द्रियविषयार्थबोधकं भवेत् ; तदा तस्य वाक्यस्यापि प्रामाण्यमप्रकम्प्यमेव भवेदिति, अनाप्तवाक्यमपि दृष्टान्ततया विवक्षितं चेत् साध्यविकलमेव भवेदिति भावः । तथा च भाष्ये अवयवद्वयेन ( प्रत्ययित....इन्द्रियविषयं ) वाक्यद्वयोपलक्षणं न त्ववयवद्वयोपलक्षितमेकं वाक्यमिति तात्पर्यम् ॥

इदं च व्याख्यानं भाष्यविरुद्धं ( व्याहत्यात्मकदूषणापादकं ) तस्मान्न युज्यते इति दूषणायोपक्रमते ॥ **एवंत्वेकाङ्गवैकल्यादिति** ॥

एवंरीत्याव्याख्याने— आप्तत्वेन्द्रियकत्वयोर्मध्ये एकैकमेव प्रामाण्यहेतुरित्याश्रीयमाणे एतन्मध्ये एकस्याभावेऽपि प्रत्युदाहरणं भवेत् । अस्मन्मते तु उभयविशेषण ( प्रत्ययित्वेन्द्रियकत्व ) संभवे एकमुदाहरणं तस्यैकाङ्गविकलत्वेन प्रत्युदाहरणद्वयं **' अथाप्रत्यायितादनिन्द्रियविषयं'** वेति भाष्येण प्रदर्श्यते, भवन्मते तु आप्तत्वेन्द्रियविषयत्वयोः पृथक पृथक् प्रामाण्यकारणत्वेनाश्रयणात् एकैकोपलक्षितं उदाहरणद्वयम् । तत्र च एकोपलक्षणाभावेनैव एकैकं प्रत्युदाहरणं इति स्यात् । तदेव च— **अथाप्रत्ययितादनिन्द्रियविषयं** 'वेति भाष्येण प्रदर्शितमिति भवेत् ॥ १०४ ॥

अप्रत्ययितपक्षे स्यात् ऐन्द्रियस्याप्यसत्यता ।
अनिन्द्रियत्वपक्षे वा सत् प्रत्ययितभाषितम ॥ १०५॥

व्याहतग्रन्थतैवं स्यात् तस्मात् पूर्वेण सत्यता ।

---

एकैकाभावमात्रेण प्रत्युदाहरणत्वस्वीकारे को वा दोष इति चेदाह- ॥ **अप्रत्ययितपक्षे स्यादिति** ॥

प्रत्ययितोक्तं वाक्यं प्रमाणम् ; तस्य च प्रत्युदाहरणं अप्रत्ययितवाक्यमेवेति '**अथाप्रत्ययिता**' दिति भाष्येणोच्यते ; इति किल वक्तव्यं **एकैकाभावमात्रेण** प्रत्युदाहरणत्वे स्वीकुर्वतां मते । तर्हि श्रोतुः इन्द्रियविषयं यदप्रत्ययितवाक्यं, प्रमाणत्वेन संमतं तस्याप्यप्रामाण्यमेव स्यात् ; अप्रत्ययितपुरुषोक्तत्वात् । तथाचेन्द्रियविषयार्थबोधकत्वे प्रामाण्यं भवतीति. "**इन्द्रियविषयं वे**"ति भाष्येणोच्यते ; इति यदुक्तं तस्य व्याहतिरापतेत् । तथा "**इन्द्रियविषयंवे**"त्यस्य प्रत्युदाहरणत्वेन '**अनिन्द्रियविषयंवे**'त्युत्युच्यते ; इति स्वीकरणे, आप्तवाक्यं (प्रत्ययितवाक्यं) चापि श्रोतुरनिन्द्रियत्वेऽपि प्रमाणत्वेन स्वीकृतं तदेवाप्रमाणमिति प्रत्युदाहरण स्यात् ; अनिन्द्रियविषयत्वात । तथा च प्रत्ययितवाक्यं प्रमाणमेवेति यदुक्तं तस्य व्याहतिरिति भवेत् । तथा च परंपरं भाष्यस्य व्याहतार्थबोधकत्वापत्या **एकैकाभावमात्रेण प्रत्युदाहरणत्वस्वीकारपक्षः** न घटते ।

परेण मूलसद्भावः इन्द्रियेण तु दर्शितः ।

अपि च 'इन्द्रियविषयं'वेति भाष्येण दृश्यमानार्थविषयकमप्रत्ययितवचनमपि प्रमाणं भवतीति यदि स्वीक्रियते; तर्हि 'अनिन्द्रियविषयं वेति प्रत्युदाहरणभाष्ये चापि, श्रोत्रा यन्नोपलभ्यते; तदप्रमाणमित्येव वक्तव्यं भवेत् । तथा च 'अशक्यं हि तत् पुरुषेण ज्ञातुं' इति भाष्यं नैव घटेत । यत् श्रोत्रा नोपलभ्यते तत् ज्ञातुमशक्यं भवति लोकाविरोधात् । अतः पूर्वं, प्रत्ययितवाक्यं लौकिकं चापि प्रमाणमेवेति चोदनावाक्याप्रामाण्यसाधकानुमानस्य वाक्यत्वहेतुकस्य दृष्टान्तसाध्यवैकल्याभिधानं, तत्र प्रामाण्ये संभवन्मूलत्व , सप्रमाणत्व 'इन्द्रिविषयंवे'ति भाष्येण कथ्यते । तत्प्रतिकोटितया असंभवन्मूलत्वे चाप्रामाण्यं 'अनिंद्रियविषयंवे'ति भाष्येण तत्रोपपादक च अशक्यं हि तत् पुरुषेण ज्ञातुमित्यादिभाष्यं , धर्मस्यातीन्द्रियत्वेनागममन्तरा तत्र ज्ञानासंभवादिति । प्रत्ययितशब्देन पूर्वेण सत्यता यथादृष्टार्थवादित्वमात्रमभिप्रेतं परेण भाष्येण इन्द्रियविषयं वा इत्यनेन तत्र मूलसद्भावप्रदर्शनमेव । न तु प्रत्ययितशब्देन यथाभूतार्थदर्शी बोध्यत इति । प्रत्ययितशब्दश्चायं यौगिकः इत्यजन्तः "प्रत्ययोऽस्य संजातः" इत्यर्थमेव बोधयेत् । प्रत्ययश्च लोके द्वेधा दृश्यते, समीचीनः असमीचनश्चेति (सम्यक् - मिथ्याति) । ततश्च नात्र यथार्थदर्शित्वमभिप्रेतं किं तु यथार्थवादित्वम् । सत्यवादीति भावः । तदिदमुच्यते सर्वं— परेण मूलसद्भावेति॥

परेण 'इन्द्रियविषयं वेति भाष्येण, प्रत्ययितवाक्ये प्रमाणस्वीकारे मूलसद्भावः प्रपर्शितः । प्रत्ययितस्य वचनं वक्तुरेव प्रमाणमूलं प्रमाणं

अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥

गुणात् प्रामाण्यमित्येवं तत् पूर्वं सुनिराकृतम् ।
पूर्वं प्रतिषिद्धत्वात् नैतत् प्रामाण्यकारणम् ॥ १०८ ॥

---

भवेत् ; न श्रोतुरिन्द्रियविषयश्च, तथा सति, ज्ञातार्थकत्वादनुवादापत्तेः ।

ननु 'तच्चेत् प्रत्ययितात् पुरुषात्,' इत्यादिभाष्येण प्रत्ययितत्वं प्रामाण्ये कारणमित्युक्तं भवति, तथासति परतः (गुणतः) प्रामाण्यं इति किल सिद्धं भवति, तथासति सिद्धान्तहानिः- स्वतः प्रामाण्यपक्षस्य अभ्युपगमत्वात् । प्रत्ययितत्वं नाम– गुणवत्त्वम् इति किल प्रसिद्ध-मिति चेदाह ॥ अप्रामाण्यनिवृत्यर्थमिति ॥

प्रत्ययितत्वं नाम न गुणरूपम् ; किंतु दोषाभावः इति चार्थः । तथा च गुणात् प्रामाण्यं इति पक्षस्य नोत्थितिर्भवति । दोषः अप्रामाण्यं प्रति हेतुः ; तदभावश्च अप्रामाण्यनिवृत्त्यर्थं अपेक्ष्यते । प्रामाण्यापवादकदोषाभावे सिद्धे स्वाभाविकं प्रामाण्यं ज्ञानानां अनपोदितं वर्तिवर्ति ॥ १०७ ।

एवं व्याख्याने कारणं च पूर्वग्रन्थसंगतिसंपादनमिति प्रदर्शयति– ॥ गुणात् प्रामाण्यमित्यादि ॥

पूर्वं (४०–५१) वार्तिके गुणात् प्रामाण्यमिति पक्षः सुनिपुणं दूषितः । अतस्तद्विरुद्धतया गुणतः प्रामाण्यसाधने व्याहतत्वं स्यादिति प्रत्ययितत्वं नाम दोषाभाव एव न गुणः ॥ १०८ ॥

समुच्चायार्थो वाशब्दः पूर्वस्मिन्नुत्तरत्र तु ।
विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥

शक्येऽप्यसत्ये मिथ्यात्वं दृष्टं सत्येऽप्यशक्तिके ।

---

ननु यदि इन्द्रियाविषयत्वप्रत्ययितपुरुषोक्तत्वयोः समुच्चित्यहेतुत्वाङ्गीकारः तर्हि भाष्ये '**तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषय वा**' इति विकल्पार्थक 'वा' शब्दः कथं घटतामित्याशङ्कायामाह– ॥ **समुच्चयार्थो वेति** ॥

यच्च भाष्यं '**तच्चेत् प्रत्ययितात् पुरुषात् इन्द्रियविषय** वेति, तस्मिन् पूर्वभाष्ये '**वा**' शब्दः विकल्पार्थको न; अपि तु समुच्चयार्थक एव; प्रामाण्यं प्रति उभयोरपि वातूप्रयोजकत्। एतद्विवरणं तु पूर्वमेवासीत्। तत्प्रत्युदाहरणपरे चोत्तरभाष्ये '**अथाप्रत्ययितात्, अनिन्द्रियविषयं वे**'त्युत्तरभाष्ये तु 'वा'कारः विकल्पार्थक एव। उभयोः प्रत्ययितेन्द्रियविषयविशेषणयोः विकल्पेन प्रत्युदाहरणे दर्शयति पृथक् पृथक् ॥ १०९ ॥

प्रत्युदाहरणद्वयमपि विविच्य प्रदर्शयति- । **शक्येऽप्यसत्येति** ॥

**असत्ये,**– मिथ्यावादिनि पुरुषे सति (अनाप्ते सति) तत्प्रयुक्तवाक्यज्ञाप्यो ह्यर्थः प्रत्यक्षयोग्योऽपि तत्र मिथ्यात्वमेव गृह्यते; वक्तुः प्रतारकत्वात्। इदं च '**प्रत्ययितात्**' इत्यस्य प्रत्युदाहरणम्। '**इन्द्रियविषयं**' वेत्यस्य प्रत्युदाहरणं '**दृष्टं**' इत्यनेनोच्यते।

**नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥**

---

दृष्टसत्योऽपि ( आप्तोऽपि ) यदा शक्तिरहितो भवति, वाक्यात् बोध्यं अर्थं स्वयं ज्ञातुं न समर्थः, अतीन्द्रियार्थबोधकवाक्यप्रयोक्ता चेत् , तत्रा- प्यप्रामाण्यं, मूलदोषात् ।

यद्यपि आप्तस्य विप्रलिप्सा नास्ति, तथाऽपि पुरुषत्वात भ्रांति- भंगत्येव । अत एव च **विरोधाधिकरणे (१-३-२) स्मृतिकाराणां महर्षीणां** वचनमपि श्रुतिविरोधे बाध्यमित्येव सिद्धान्त्यते । आह च सूत्रकारः '**विरोधेत्वनपेक्ष्य स्यादसति ह्यनुमान**'मिति ।

अत्र भाष्ये ' **अशक्य हि तत् पुरुषेण ज्ञातुमृते** वचनात् इति वाक्यमुपलभ्यते । अस्य च भाष्यस्य अतीन्द्रियार्थे पुरुषाणां वचनं न वचनमन्तरेण संभवति ; इति । अतः धर्मश्चोदनैकवेद्यः इति किलार्थः प्रतीयते ।

केचित्तु इदं भाष्यं सर्वज्ञसद्भावनिराकरणपरतया योजयन्ति । तन्नि- राकरणतत्परः प्राह– ॥ **नानेन वचनेनेहेति** ॥

इह– धर्मे चोदनैव प्रमाणमिति स्थापनार्थप्रतिज्ञासाधनकाले न सर्वज्ञ- सद्भावनिराकरणं युज्यते ; तद्वाचकशब्दाभावात् , धर्माधर्मज्ञाननिषेध- मात्रेणैव प्रकृतप्रतिज्ञासिद्धेस्संभवात् , प्रतिज्ञासूत्रे तत्साधनस्यासंबद्धत्वात् ॥ ॥ ११० ॥

वचनादृत इत्येवं अपवादो हि संश्रितः ।
यदि सर्वप्रमाणैः स्यात् सर्वज्ञः केन वार्यते ॥ १११ ॥

---

तथा स्वीकारे भाष्यविरोधश्चेत्यप्याह– ॥ **वचनादृत इत्येवमिति** ॥

भाष्ये '**वचनादृते ज्ञातुं न शक्यते**' इति वदन् भाष्यकारः अपवादं प्रदर्शयति। अतीन्द्रियविषये वचनं विना ज्ञानं न भवति; इति स्पष्टयति; न तु सर्वज्ञाननिषेधमभिप्रैति । तथा च '**अशक्यं हि तत् पुरुषेण ज्ञातुं**' इत्यादिपूर्वोक्तभाष्ये तच्छब्दः प्रकृतमतीन्द्रियमेव परामृशतीत्येव स्वीकर्तव्यं; न तु सर्वमिति; (अप्रकृतत्वात्) प्रकृतानुपयुक्तत्वाच्च ।

प्रकृतानुपयुक्तत्वं अशक्यत्वं च सर्वज्ञनिराकरणपक्षस्य प्रदर्शयति– ॥ **यदि सर्वप्रमाणैरिति** ॥

भावाभावग्राहकैः प्रत्यक्षाद्यनुपलब्धिप्रमाणान्तैः षड्भिः प्रमाणैः षोढा भिन्नं सर्वमपि प्रमेयमवगम्यत एवेति यो हि षड्भिः प्रमाणैः सर्वं जानाति स कथं निराक्रियेत। तादृशश्च **सर्वज्ञः** वेदेनैव धर्माधर्मावपि जानातीति; न चोदनैव धर्मे प्रमाणमिति प्रकृतप्रतिज्ञायाः तत्सद्भावः विरोधीति कुतो निराकार्यः । अतः नैतद्भाष्यं सर्वज्ञसद्भावपक्षनिराकरणाय घटते; इति पूर्वोक्तार्थ एव युक्तः इति ।

**अत्रेदं विचारणीयम्**– यदि पूर्वोक्तभाष्येण '**अशक्य ही**' त्यादिना सर्वज्ञो न निराक्रियते, इत्युच्यते; तर्हि तद्भाष्यं किमर्थं प्रवृत्तम्? पूर्वं

एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।

---

हि वचनत्वसाम्येन वेदवाक्येऽपि प्रामाण्यं नैव भवेत्, इत्याक्षेपे प्राप्ते, तत्रोपाधिप्रदर्शनमुखेन पौरुषेयापौरुषेयवाक्ययोः मिथ्यात्वे हेतुमदसद्भावो दर्शितः। साध्यवैकल्यं चांशे। तावतैव प्रकृताक्षेपपरिहारे जाते 'अशक्यं हि तत्' इति भाष्यं व्यर्थं सत् सर्वज्ञासद्भावपरमेव योजनीयम्; इति किल युक्तमिति।

नेदं घटते, प्रत्ययितवाक्यमपि न प्रमाणं भवेत् अतीन्द्रिय-विषये इति 'यत्तु लौकिकं' इत्यादिभाष्येणोक्तम्। तत्रेयं शङ्का भवति— प्रत्ययितवचनं अतीन्द्रियवचनमिति कथनमयुक्तम्। प्रत्ययितो नाम अप्रतिहतज्ञानशक्तिः पुरुषः उच्यते। स खलु निस्सीमज्ञानप्रकर्षः धर्मा-धर्मावप्यपरोक्षमेवेक्षत एवेति न चोदनैव धर्माधर्मयोः प्रमाणमिति प्रतिज्ञा घटते; इति।

तत्रेदमुत्तरं-- नैव तादृशातिशयः पुरुषज्ञाने भवति; यदतीन्द्रिय-विषयं वचनमन्तरा द्रष्टुं शक्नोति इति। इदं च सूत्रकारेणैव प्रत्यक्ष-सूत्रे वक्ष्यते। भाष्यकारस्तु तदेव प्रतिज्ञासाधनार्थमुक्तवान् इति ॥१११॥

ननु कामं षड्भिः प्रमाणैः सर्वज्ञ; न निराकर्तुं शक्यते; इत्यस्तु नाम। अत्र निरसनीयः सर्वज्ञः एतादृशः यः रूपरसादीन् अतीताननागतांश्च चक्षुरिन्द्रियजनितज्ञानेन गृह्णाति स एव इति चेदाह—

॥ एकेन तु प्रमाणेन इति ॥

नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते । ॥ ११२ ॥

यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ११३ ॥

---

यदि चौर्यणैव सर्वज्ञः कल्प्येत ; तर्हि अतितुच्छश्चायं पक्षः स्यात् । कुतः ? तर्हि एवं किल वक्तव्यं स्यात्— तादृशश्च सर्वज्ञः चक्षुषैव रसादीनपि जानातीति । न चेष्टापत्तिः ; लोके तादृशपुरुषस्य कुत्राप्यनुपलंभात् लोकविरोधापत्तेः । अत्र 'येन कल्प्यते सः' इति वार्तिकेणायमर्थः द्योत्यते— बौद्धाः किल, बुद्ध दिव्येन चक्षुषा सर्वं जानातीत्यतः सर्वज्ञत्वेन कल्पयन्ति । एवं कल्पयितारश्च नूनं स्वय-मपि चक्षुषा रसादीन् जानन्तीति वक्तव्यम् । अन्यथा हि कथं स्व-भावनियमं जानन्तः बुद्धचक्षुषः सर्वगोचरत्वमातिष्ठेरन् ? अतः सर्वे बौद्धाः सर्वज्ञाः इति तु स्वानुभावविरुद्धं लोकविरुद्धं चेति नितरां तुच्छोऽयं पक्षः इति सिध्यति ॥ ११२ ॥

ननु यद्यप्यर्वाचीनानामस्मादृशां चक्षुर्न सर्वग्रहणायाल भवति ; बुद्ध-चक्षुस्तु सातिशयम् ( दिव्यं ) ; अत एव च सर्वग्राहकमासीत् ; इति स्वीकारे न दोषः इति चेदाह— ॥ यज्जातीयैरिति ॥

प्रमाणैर्हि चक्षुरादिजातीयैः इदानीं रूपादिजातीयानामेव ग्रहण-मुपलभ्यते ; तेषां संबन्धोऽपि च वर्तमानः आवश्यकः ; इति च । एवमेव कालान्तरेऽपि व्यवस्था आसीत् ; इति कल्पनमेव सूपपन्नम्

यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवर्तिता ॥ ११४ ॥

---

भवेत् । तथा स्वीकारे दृष्टानुसारित्वमपि स्यात् । तथाचैवं प्रयोगः बुद्धसबन्धिचक्षुरिन्द्रियं नातीन्द्रियविषयज्ञानजनक चक्षुष्ट्वात्, असदादिचक्षुर्वदिति ; बुद्धचक्षुः अचक्षुः, अतीतादिविषयकत्वात्, शब्दवत, इति ॥ ११३ ॥

ननु कथमिदं घटते ? प्रत्यक्षे अतिशयो नास्तीति लोके तावदेवमेवावगम्यते ; प्रमातृभेदानुसारेण चक्षुः दूरे दूरतरे च विषय प्रकाशयति । तत् चक्षुः यदि काष्ठाप्राप्तप्रकर्षं भवेत् ; सर्वमपि प्रकाशयेदेव । एवं ज्ञानं चापि सातिशयं लोके शास्त्रे च दृश्यते । तच्च ज्ञानं कस्मिंश्चिदात्मनि संप्राप्तनिस्सीमप्रकर्षं सर्वमपि विषयीकरिष्यति । अतः न सर्वज्ञनिषेधः घटते ; इति शङ्कायामाह– ॥ यत्राप्यतिशय इति ॥

सत्य चक्षुरादिषु चेन्द्रियेषु ज्ञाने च लोके अतिशयः दृश्यते । परं तु स चातिशयः न स्वार्थातिलघनेन परिदृश्यते । विस्फारिताक्षश्च पुरुषः एकदैव नीलपीतादिनानारूपाणि जानाति सकृदेवेति न चक्षुषः एकत्रैव संकोचः परिदृश्यते । एवं नानादेशपरिमाणार्थपरिच्छेदाच्च न देशपरिमाणाभ्यामपि संकोचः, तथापि इदं सर्वं स्वार्थानतिलघनेनैवेति च नियमः प्रत्यक्षो वर्तते । नैवं हि श्रोत्रं रूपं गृह्णाति ; न वा

चक्षुः शब्दम्। अतः न बुद्धचक्षुषोऽपि धर्माधर्मादि विषयो भवितुमर्हति ; अवर्तमानत्वात् धर्माधर्माणाम्।

ननु चेदं न घटते— वर्तमानमेव चक्षुषा प्रकाश्यते ; इति, 'इदं रजतं'मिति भ्रान्तिस्थले अवर्तमानस्यापि रजतस्य भानात्। न च तत् स्मरणमेवेति वक्तुं शक्यम् ; बाह्येन्द्रियापेक्षत्वात्। न च तत्र शुक्तिकैव प्रकाश्यते ; इति च युक्तं प्रतीतिविरोधात् ; इति चेद् ब्रूमः—

शुक्तावपि रजतावयवाः सन्ति। अत एव शुक्तावेव रजतभ्रमः, न घटादौ। ते च रजतावयवाः अल्पसंख्याकाः, शुक्त्यवयवास्तु बहुसंख्याकाः ; यदा चशुक्तिरेव हि 'इदं रजतं' मिति भ्रान्तौ विषयः शुक्तेश्च वर्तमानत्वात् वर्तमाने नैव चक्षुस्संयोगो भवतीति न दोषः ; चक्षुषः प्राप्यकारित्वनियमात, असन्निहितत्वात्, रजतस्य तत्प्राप्तेर्वक्तुमशक्यत्वाच्च। कथं तर्हि शुक्त्या सह संयोगे अन्याकारतया (रजताकारतया) वेदनं इति चेत्— दोषवशात इति भाष्यकारो वक्ष्यति। फालफल्यादिकं च दोषः।

वस्तुतस्तु अदृष्टविशेषात् शुक्त्यंशवर्जिताः रजतावयवाः गृह्यन्ते।तदा रजतमिति ज्ञानं भवति ; भूयसां शुक्त्यंशानां ग्रहणे तु शुक्तिरिति ज्ञानं भवति। अन्यत्रान्यावयवाः न सन्तीति तु नैव वाच्यम् ; षष्ठाध्यायविरोधात्। तत्र हि प्रतिनिधिविचारावसरे नीवारेषु व्रीह्यवयवसद्भावात् न

**भविष्यति न दृष्टं च प्रत्यक्षस्य मनागपि ।**

---

एव व्रीहिप्रतिनिधयः । एवं पूतीकानां सोमप्रतिनिधित्वं इति हि निरूपितम् । आस्तामिदम् । प्रकृतमनुसरामः ।

इन्द्रियादावतिशयस्वीकारेऽपि स्वार्थानतिलङ्घनेनैव स स्वीकर्तव्य इति न धर्मादेः प्रत्यक्षविषयता भवेत् ।

ननु इदं च सर्वज्ञनिराकरणं बौद्धाभिप्रायेणैव खलु ! तेषां दर्शने च भावनाजन्यप्रत्यक्षं धर्माधर्मग्राहकत्वेन तैरिष्टम् । तथा हि— **'विज्ञानं हेयोपादेयग्राहकं, तस्य ज कारणं भावना'** कारणानुपलब्ध्या इति निराकरणं भवदीयं नैव घटते। उक्तं च तैः— **" भावनाफलतः स्पष्टम् "** इति । चैत्यवन्दनादिवाक्यप्रामाण्यसिध्यर्थं च हेयोपादेयविज्ञानं तस्येष्टम् । न त्वन्यविषयस्य । उक्तं च तैः—

**" हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः "**

इति । उक्तं च **सद्धर्मे**—

**पश्याम्यहं साधवः ( भिक्षवो ) दिव्येन चक्षुषा सुगतिं दुर्गतिं च " इति ॥ ११४ ॥**

अत्र दिव्येति चक्षुर्विशेषणेन चर्ममयचक्षुर्निवृत्तिद्वारेण भावनाप्रतिपत्तिरिष्टेति शङ्कायामाह— ॥ **भविष्यति न दृष्टं चेति** ॥

भावनाऽपि प्रमाणान्तरज्ञाते एव वस्तुनि भवति । धर्माधर्मादिश्च न प्रत्यक्षप्रमाणविषयः, भविष्यत्वात् । नाप्यनुमानस्य, यत्र लिङ्गादि-

सामर्थ्यं नानुमानादेः लिङ्गादिरहिते क्वचित् ॥ ११५ ॥

सर्वज्ञकल्पनान्यैस्तु वेदे चापौरुषेयता ।
तुल्यता कल्पिता येन तेनेदं संप्रधार्यताम् ॥ ११६ ॥

---

संभवः तत्रैव किल तस्य प्रवृत्तिः ; नैव च धर्माधर्मादौ लिङ्गादि संभवः । न च भवतः प्रत्यक्षानुमानाभ्यामन्यत् प्रमाणमस्ति । अत न पूर्वोक्तं युज्यते ॥ ११५ ॥

ननु धर्मे प्रत्यक्षं न संभवति भावित्वात् । अनुमानमपि नैव ; व्याप्तिलिङ्गाद्यसंभवात । अत प्रमाणासंभवानया सर्वज्ञकल्पनाया अप्य-संभवः इति युक्तं, न भवति । एतद्दशासंभावनायाः वैदिकमतेप्यनि-वार्यत्वात् । तथा हि–लोके न कुत्रापि हि अपौरुषेयं वाक्यं किंचित् दृष्टचरम् ; सर्वषामप्यागमानां कृत्रिमतयैवो (पौरुषेय) पलंभात् । एवं च यथा वैदिकानां असंभवनीयमागमनित्यत्वमाश्रित्य अभ्युदयनिःश्रेयसार्थमारंभः । एवं बौद्धानामपि अदृष्टसर्वज्ञप्रामाण्यमाश्रित्येति उभयोरपि समत्वेन कथं निराकरणं सर्वज्ञस्येति चेदाह ( लौकायतिकः )– ॥ **सर्वज्ञकल्पनान्यैस्तु इति** ॥

**अन्यैः (बौद्धैः) सर्वज्ञकल्पना, तदन्यैः** मीमांसकैः ( वैदिकः ) **वेदे अपौरुषेयता,** अन्यत्रासंभाविता कल्प्यते । अतः उभयोरपि तुल्यतै-वेति येन **चार्वाकेणोच्यते,** तेनेदं अवधार्यताम् । येन कारणेन उभयोस्तुल्यत्वं आपाद्यते परैः, तैस्तावदिदं संप्रधारणीयम् ; तेन कारणेन उभयत्र तुल्यत्वं अस्ति उत नेति तु संप्रधारणीयम् ।

सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः।
निराकरणवच्छक्या न चासीदिति कल्पना॥ ११७॥

---

अथवा **वार्तिकस्यास्यायमाशयः**— सर्वज्ञकल्पना यथा न प्रामाणिकी; तद्वत् वेदापौरुषेयत्वकल्पनापीति । ततः नैव वेदाः प्रमाणं इति चार्वाकाणामाशयः ॥ ११६ ॥

इत्थमाक्षेपे प्राप्ते तत्र निर्धारणाय प्रारभते - ॥ **सर्वज्ञो दृश्यते** इति ॥

सर्वज्ञसद्भावे न तावत् प्रत्यक्षं प्रमाणम्; अनुपलंभात् । अत एव च नास्मज्जातीयैः उपलभ्यते; स्वभावनियमानतिलंघनात् । नाप्यनुमानम्; विरुद्धोपलंभात् । नैव हि सर्वज्ञसद्भावसाधकं लिङ्गं किञ्चिदुपलभ्यते । नैतावन्मात्रं किं तर्हि ? सर्वज्ञाभावसाधकलिङ्गस्य सद्भावोऽपि यथागतकालः सर्वज्ञरहितः कालत्वात्, इदानींतनकालवत् । तदिदमुक्तं **निराकरणं यथा कर्तुं शक्यते तथा सद्भावकल्पना न घटते** " इति तत्र साधकबाधकप्रमाणतुल्यत्वे हि तौल्यं संभवेत् । तदभावाच्च न चार्वाकाक्षेपः युज्यते । वेदानां कर्ता नाद्यापि **दृश्यते** । न संभाव्यते च अतीन्द्रियार्थकत्वात् वेदवाक्यानाम् । इदं च **एतत्पादान्तिमाधिकरणे लोके सन्नियमादित्यत्र** वक्ष्यते । न वा वेदानां कर्ता कश्चनानुमीयते । अभावेन विरोधात् । **कथं ?** अनुमानं हि **असन्निकृष्टार्थे बुद्धिः** इति भाष्योक्तदिशा असन्निकृष्टार्थविषयकं, वेदानां चादृष्टार्थज्ञानाय प्रवृत्तत्वात् नियमेन स्मर्येत निर्माता । यतो नोपल-

न चागमेन सर्वज्ञः तदीयेऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥

नचाप्येवं परो नित्यः शक्यो लब्धुमिहागमः ।

---

श्यते, न स्मर्यते च, अत कर्तुरभाव एवावधृत इति । तद्विरुद्धतया वेद-कर्तुरनुमानं शशशृङ्गाद्यनुमानवत् नोदेतुमर्हति । कर्तुरभाव एव हि वेदानां नित्यत्वमपि । अतः प्रमाणवती वेदानां नित्यत्व ( अपौरुषेयत्व ) कल्पना ; न तथा सर्वज्ञकल्पनेति ॥११७॥

ननु मा भूत् सर्वज्ञसद्भावे प्रमाणं प्रत्यक्षं अनुमानं वा । आगमस्तु तत्र प्रमाणं भविष्यति । अतः नाप्रामाणिकत्वं सर्वज्ञसद्भावस्येति चेत् तत्राह—॥ **न चागमेन इति** ॥

सर्वज्ञसद्भावे **आगमः** प्रमाणमित्यत्र **किमन्यदीयागमः** प्रमाणं, उत **तत्प्रणीतः** एव । न तवात्तदीयः अन्योन्याश्रयदोषापत्तेः । सर्वज्ञे सिद्धे तदुक्तत्वात्तदागमः प्रमाणम् ; सर्वज्ञोक्तत्वात् , तदागमस्य प्रामाण्ये च सर्वज्ञसिद्धिः इति । नापि प्रथमः कल्पः ; नरान्तरप्रणीतस्य चागमस्य मूलान्तरासम्भवात् न सर्वज्ञसद्भावे प्रामाण्यं भवितुमर्हति ॥ ११७॥

अथ कृतकस्यागमस्य सर्वज्ञसद्भावे प्रमाणत्वेन स्वीकारे पूर्वोक्त-दोषापत्तेः ; नित्यागममेव तत्सद्भावे प्रमाणत्वेन स्वीकुर्मः । अतो न दोष इति चेदाह— ॥ **न चाप्येवं पर इति** ॥

सर्वज्ञसाधकतया कश्चन **नित्यः आगमः न हि लब्धुं शक्यः** ; तत्परत्वे चागमस्यानित्यत्वात्वापत्तेः । अतत्परत्वे तु नैवागमोऽथ प्रमाणम् ।

नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥

आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।

---

'**यस्सर्वज्ञः सर्ववित्**' इति श्रूयते किलेति तु नैव शङ्कनीयम् । तस्यार्थवादत्वात् ।

**अयमाशयः– अर्थवादाधिकरणे**, सिद्धानुवादकस्य वाक्यस्य, अनधिगतार्थाप्रापकत्वेन प्रामाण्याभावात्, "**विधिनात्वेकवाक्यत्वा**"दिति सूत्रेण विध्यन्तरार्थत्वस्य स्तावकत्वस्यैवोक्तेः । तथा च '**यस्सर्वज्ञः सर्ववि**दि'त्यादिकं आत्मज्ञानविधिशेष इति सर्वज्ञसद्भावे न प्रमाणं भवेत् ; तत्र तात्पर्याङ्गीकारे तु वेदस्यानित्यतापत्तेः । न हि नित्यो निगमः ( वेदः ) विग्रहवन्तमनित्यं सर्वज्ञं प्रतिपादयितुं प्रभवेत् ; तस्याप्यनित्यतापत्तेः । अत एव हि '**बबरः प्रावाहणिरकामयते**' त्यादीनां वाय्वादिपरतया अर्थवर्णनं अर्थवादाद्यधिकरणैः तत्र तत्र भाष्यकारादिभिः क्रियते । अतः सर्वज्ञसाधकनित्यागमाभावात् आगमवेद्यत्वं न तस्येति ॥ ११९ ॥

नित्यागमस्य सर्वज्ञसाधकस्य स्वीकारे च सर्वज्ञकल्पनैव वृथा भवेदित्याह– ॥ **आगमस्य चेति** ॥

यदि च आगमः नित्यः कश्चन भवद्भिरङ्गीक्रियेत तर्हि सर्वज्ञकल्पना वृथैव भवेत् ; तत्र हेतुश्च नित्यादेवागमात् धर्मविषयकज्ञानस्यापि सिद्धेः, सर्वज्ञाश्रयणस्य गौरवग्रस्तत्वात् ।

यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ १२० ॥

योऽपीन्द्रियार्थसंबन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन श्रद्धेयेऽर्थेऽपि कल्पयेत् ॥ १२१ ॥

---

ननु माभूत् सर्वज्ञसिद्धिः, बुद्धागमसत्यत्वं तु नैव निराकर्तुं शक्येत ; सत्यवादिना बुद्धेनोक्तत्वात् । तस्य ( बुद्धस्य ) सत्यवादित्वं तु ज्ञानक्षणिकत्वप्रतिपादकेषु तद्वाक्येषु दृष्टं नापह्नोतुं शक्यते । अत तद्वाक्यदृष्टान्तेन धर्माधर्मरूपातीन्द्रियार्थप्रतिपादकबुद्धवाक्यानां सत्यत्वं सिद्ध्यति । तथा च 'चैत्यवन्दना'दीनां धर्मत्वप्रतिपादकं बुद्धवाक्यं प्रमाणं; बुद्धवाक्यत्वात् , ज्ञानादिगतक्षणिकत्वबोधकवाक्यवत् इति प्रयोगेण धर्माधर्मज्ञानस्य अन्यत एव सिध्यतः कथं चोदनामात्रगम्यत्वमित्याक्षेपस्यापरिहारात् । उक्तं च **प्रमाणवार्तिके**—

**कोटिसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।**
**दूरं पश्यतु मा वाऽसौ तत्त्वमिष्टं तु पश्यति ॥ इति**

अतः न पूर्वोक्तं घटते इति ॥ १२० ॥

तदेतदाह— ॥ **योऽपीन्द्रियार्थसंबन्धेत्यादि** ॥

इन्द्रियार्थसंबन्धविषयः ज्ञानक्षणिकत्वादिः तत्र बुद्धस्य सत्यवादितां प्रामाणिकत्वं ज्ञात्वा श्रद्धेयेऽर्थे धर्मेपि बुद्धस्य सत्यवादित्वं कल्पयति यः कल्पयेत् । ततश्च चैत्यवन्दनादीनामपि धर्मत्वं सिद्ध्येत् इत्यर्थः ॥ १२१ ॥

तेनापि पारतन्त्र्येण साधिता स्यात् प्रमाणता ।
प्रामाण्यं चेत् स्वयं तस्य काऽपेक्षान्येन्द्रियादिषु ॥ १२२ ॥

यथैवेन्द्रियादिभ्यः परिच्छेदात् प्रमाणता ।
श्रद्धेयेऽपि तथैव स्यात् न स्वातन्त्र्येण लभ्यते ॥ १२३ ॥

---

एवं प्राप्तस्याक्षेपस्य निराकरणं बुद्धोक्तत्वरूपहेतोः अप्रयोजकत्वाख्यदूषणोन्यासपूर्वकं करोति– ॥ **तेनापि पारतन्त्र्येणेति** ॥

ज्ञानादिक्षणिकत्वबोधकवाक्यानां प्रामाण्यं संवादप्रयुक्तं इति भवतैवोक्तत्वात् न बुद्धवाक्यत्वस्य हेतुत्वं सिद्ध्येत्; इत्यप्रयोजक एव पूर्वप्रयोगे भवद्धेतुः ।

यद्वा इन्द्रियादिसंबन्धविषये हि बुद्धवाक्यस्य सत्यता ( प्रमाणता ) पारतन्त्र्येणैव भवतीत्युक्तत्वात् तद्व्याप्तिबलेन श्रद्धेयेऽर्थेऽपि पारतन्त्र्येणैव प्रमाणता भवेत् । तत्र हेतुं उत्तरार्धे प्रदर्शयति– ॥ **प्रामाण्यं चेति** " ॥ इन्द्रियादिसंबद्धविषये सत्यतायाः दर्शनेनान्यत्रापि सत्यता इति स्वीकर्त्रा प्रामाण्यस्येन्द्रियादिपरतन्त्रत्वमेव ह्यर्थादुक्तं भवति । यदि च स्वत एव प्रामाण्यं स्यात् कुतस्तर्हि परापेक्षा स्वीक्रियेत । एवं च श्रद्धेयार्थस्यापि ( धर्मस्यापि ) असदादिपरतन्त्रमेव प्रामाण्यं हेतुः साधयेत् तथैव भवदुक्तरीत्या व्याप्तिग्रहात् न स्वतन्त्रतया ॥ १२२ ॥

पारतन्त्र्यमेव विवृणोति- ॥ **यथैवेति** ॥

क्षणिकत्ववाक्येषु बुद्धवाक्यस्य प्रामाण्यप्रयोजकं यत् प्रमाणान्तरसंवादरूपं इष्यते तदेव चैत्यवन्दनावाक्येऽपि प्रामाण्ये प्रयोजकं भवतो

यथा तेषां हि सत्यत्वं सिद्ध्यत्येतेन हेतुना ।
तथान्यानवबुद्धार्थप्रामाण्याभावसाधनम् ॥ १२४ ॥

---

न बुद्धोक्तत्वम् । तथा च भवदुक्तो हेतुः विशेषविपर्ययस्य साधनात् विरुद्धो भवेत् ॥ १२३ ॥

यदि च 'बुद्धोक्तत्वात्' इत्यस्य प्रयोजकत्वमिष्येत, तर्हि विरुद्धोऽयं हेतुरिति प्रदर्शयति— ॥ यथा तेषामिति ॥

बुद्धोक्तत्वरूपो हेतुः एकः एव, ज्ञानक्षणिकत्वसाधकः सत्यः (प्रमाणं) इति यथा भवेत् तद्वत् चैत्यवन्दनादिवाक्यं पक्षीकृत्य, बुद्धवचनं, प्रमाणान्तरानवबुद्धार्थे, न प्रमाणं ; बुद्धोक्तत्वात्, क्षणिकत्वादिवाक्यवत्, इति प्रयोगकरणेन सोऽयं एक एव हेतुः सत्यत्वं, असत्यत्वं च मिथो विरुद्धं न व्यभिचरतीति विरुद्धाव्यभिचारी दुष्टो भवति ।

ननु दृष्टान्ते ज्ञानादिक्षणिकत्ववाक्ये सत्यत्वस्याङ्गीकारात् साध्यविकलो दृष्टान्तः इति चेन्न । अतीन्द्रियार्थे तस्याप्यप्रामाण्येन पूर्वोक्तदोषाप्रसङ्गात् । ननु भवतु नामासत्यत्वसाधक इति, सत्यत्वस्यापि साधकोऽयं बुद्धोक्तत्वादिति हेतुरिति सिद्धोः नः पक्षः इति चेत् न । न हि भवतां साध्यत्वेन सत्यत्वमात्रमिष्टं, किं तर्हि श्रद्धेयार्थसत्यत्वं, तच्च नैव, दृष्टान्ते इति, दृष्टानुकूलमेव । 'श्रद्धयेऽर्थेऽपि कल्पयेत्' इति किलोक्तम् ॥ १२४ ॥

अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवद्विहेष्यातान ॥ १२५ ॥

अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।

---

तदेव च स्पष्टयन् असाकमनुकूलः न तु भवतामिति निरूपयति— ॥ अश्रद्धेयार्थसत्यत्वमिति ॥

क्षणिकादिवाक्यं हि दृष्टान्तत्वेनाभिमतं, अश्रद्धेये सत्यं, श्रद्धेये (धर्मे) चासत्यमिति तावत् दृष्टम् । तत्र विद्यमानमिदं साधनं बुद्धवाक्यत्वं भवतां नेष्टं साधयेत् । असाकं श्रद्धेये बुद्धवाक्यस्यासत्यतां सिषाधयिषतां अनुकूलो भवेत् ॥

न तावदेतावन्मात्रम् । विशेषविरुद्धश्च भवेत् । कथं ? सर्वत्र हेतुः दृष्टान्तानुसारेण साध्यसाधको भवति । तथा च बुद्धोक्तत्वरूपहेतुश्च ज्ञानादिक्षणिकत्ववाक्ये पूर्वज्ञानानुवादी दृष्टः, श्रद्धेयार्थ (धर्म) बोधकवाक्य बुद्धोक्त इति पूर्वज्ञानानुवादि न संशयः इति । तत्साधने च प्रमाणत्वहानिः ; स्वातंत्र्याभावात् । तथा च प्रमाणतायां विशेषं निरुंधन् विशेषविशेषविरुद्धोऽयं बुद्धोक्तत्वरूपो हेतुरिति न भवदिष्टसिद्धिर्भवति ॥ १२५ ॥

एवं हेतोर्बौद्धाभिमतस्य विशेषविरुद्धत्वमभिधाय संप्रति सप्रतिसाधनश्चायं हेतुरिति प्राह— ॥ अपि चालौकिकार्थत्वे इति ॥

'चैत्यवन्दनादिवाक्यं, मिथ्या,' इति प्रतिज्ञायां, अलौकिकार्थ (अतीन्द्रियार्थ) बोधकत्वे सति 'पुंवाक्यत्वात' इति हेतुः,

मिथ्यात्वं बौद्धवाक्यानां स्यादन्योन्यं सपक्षता ॥ १२६ ॥

धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते ।
सांख्यादिषु च जीवत्सु दृष्टान्तोदुर्लभोऽस्य च ॥ १२७ ॥

---

केशोल्लुञ्छनादिवाक्यवत् ; ( दिगम्बरागमवत् ) । एवं जैनवाक्यं पक्षीकृत्य मिथ्यात्वं साधयितुं शक्येत् बौद्धागमदृष्टान्तेन । अतः परस्परं सपक्षता स्यात् । अत्र च हेतौ विशेष्यमात्रोक्तौ, लौकिकवाक्यानां आप्तोक्तानां सत्यत्वस्यैव दर्शनात् विरोधस्स्यात् तद्वारणाय विशेषणदलम् । तावन्मात्रे वेदवाक्यानां अलौकिकार्थबोधकानामपि सत्यत्वस्य दर्शनात् विरुद्धत्ववारणाय पुंवाक्यत्वरूपविशेष्यदलम् ॥ १२६ ॥

पूर्वोक्तप्रयोगे, केवलं पुंवाक्यत्वेन हेतुना धर्माधर्मातिरिक्तेऽर्थे बुद्धवचनप्रामाण्यं साध्यतया प्रसज्यते इत्याह— ॥ धर्माधर्मातिरिक्तार्थे इति ॥

अत्र धर्माधर्मातिरिक्तार्थप्रमाण्यसाधने न तात्पर्यम् ; तस्य लोकत एव सिद्धत्वात । अपि तु धर्माधर्मयोः प्रामाण्याभाव एव । इदं च अश्रद्धेयार्थप्रत्ययत्व'मिति वार्तिकेनैव गतार्थमिति तु न शङ्कनीयम् ; प्रयोक्तुरत्यन्तजघन्यताद्योतनात्तु मन्दत्वसूचनेन सार्थक्यात् । पूर्वं क्षणिकवादिवाक्यं सपक्षीकृत्य योऽयं प्रयोगः प्रदर्शितः स च न संगच्छते; सांख्यादिभिः क्षणिकत्वनिरासकैः भवत्पक्षनिरासात् । ते किल सत्कार्यवादिनः सर्वसत्यत्ववादिनः ते यावद् न निरस्ताः तावत् क्षणभङ्गवाक्यस्य कथं जीवनं भवेत् । एतद्विस्तरस्तु शब्दनित्यत्वादिनिरूपणावसरे सुनिपुणं भविष्यति अतः दृष्टान्ताप्रसिद्धिरूपकारणेनाऽपि न पूर्वप्रयोगः घटते ॥ १२७ ॥

अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।
परस्परमपेक्ष्यैव बौद्धादेः स्यात् मृषार्थता । १२८ ॥

वदेदेवं च यो नाम वादी प्रथमसंगतः ।
तस्यापि हेतुः स्यादेषः भवन्तं प्रत्यसंशयम् ॥ १२९ ॥

---

पूर्वोक्तहेतावेव विशेषणविशेष्यव्यत्ययेन, प्रतिसाधनत्वमाह– ॥ अलौकिकार्थवाचित्वमिति ॥

बुद्धवाक्यं– असत्यं (अप्रमाणं) पुवाक्यत्वे सति अलौकिकार्थ वाचित्वात; दिगम्बरादिवाक्यवत् इति । अत्र पक्षसाध्ययोः न पूर्व प्रयोगात् भेदः, अपि तु हेतुवाचकपदे परं व्यतिरेकः ; विशेषणविशेष्याभावव्यत्ययात ॥ १२८ ॥

एवं सर्वज्ञसाधनार्थं परैरन्यदप्यनुमानं यदुक्तं तदपि दूषयति; प्रथमसंगतः वादी यदिदमाह तस्यापि एषः प्रतिहेतुः स्यात् इति । एतद्वाक्य च गूढार्थकम् । तस्य च विवरणं व्याख्यने :भविष्यति । तदिदमाह– ॥ **वदेदेवं चेति** ॥

**यो नाम प्रथमसंगतः वादी एवं च वदेत्**– 'अहं सर्वज्ञोऽस्मी'ति **बुद्धः** यदवदत् तद्वाक्यं, सत्यम् , तदुक्तत्वात् , अग्निरुष्णः आपः शीताः, इति बुद्धोक्तवाक्यवत् इति, तस्यापि एषः प्रतिहेतुः वर्तते । **एवमिति** च वक्ष्यमाणाभिप्रायकम् । तदिदं उत्तरश्लोके व्यक्तीभविष्यति । अत्र वादिनः **प्रथमसङ्गतः**इति विशेषणदानं च अनैकान्तिकत्वाशङ्कानिराकरणार्थमिति ज्ञेयम्। चिरसङ्गतः कदाचित् मिथ्यावचनं भाषेत ; न तु प्रथमसङ्गतः ; तस्य विप्रलिप्सायाः असंभवात ; ति ॥ १२९ ॥

बुद्धादीनामसार्वज्ञमिति सत्यं वचो मम ।
मदुक्तत्वात् यथैवाग्निरूष्णो भास्वर इत्यपि ॥ १३० ॥

प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।
तेन हेतुर्मदीयः स्यात् संदिग्धासिद्धता तव ॥ १३१ ॥

---

पूर्वं 'एषः प्रतिहेतुः' इत्यनेन यः प्रतिहेतुः वक्ष्यमाणतया अभिप्रेतः तं प्रयोगेण प्रदर्शयति— ' बुद्धादीनामसार्वज्ञमिति ॥

बुद्धः न सर्वज्ञः इति मदीयं वचनं (पक्षः) सत्यं (साध्यं ) मदुक्तत्वात् ( हेतुः )। तत्र दृष्टान्तः - अग्निः उष्णः भास्वरः इति मदुक्तवाक्य भवेत् । तथा च न पूर्वोक्तत्वदीयानुमानस्योत्थानं युज्यते; प्रतिहेतुनापराहतत्वात् ॥ १३० ॥

किं च त्वदुक्तहेतुः संदिग्धासिद्धः ; न मदीयः ; इति च प्रदर्शयति— ॥ प्रत्यक्ष च मदुक्तत्वमिति ॥

'बुद्धः न सर्वज्ञः' इति पक्षतया अभिमते वाक्ये, मदुक्तत्वं प्रत्यक्षसिद्धं न सन्देहविषयः। एवं तदुदाहरणतया प्रयुक्त अग्न्युष्णत्वादिवाक्ये च तत् प्रत्यक्षसिद्धमिति न मद्धेतौ संन्देहासिद्धिः । त्वदुक्तानुमाने, 'सर्वज्ञोऽस्मी'ति वचनं बुद्धोक्तं नवेति निश्चेतुं न पार्यते ; एतादृशोक्तवचनस्य असंदावितस्य चात एवानृतस्य प्रेक्षापूर्वकारिबुद्धोक्तत्वासंभवात् । न केवलं पक्षे परं हेतोः संशयः ; किं तर्हि दृष्टान्ततया स्वीकृतक्षणिकत्ववचनानामपि बुद्धोक्ततया सिद्ध्येदिति तत्रापि बुद्धो-

प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।
सद्भाववारणे शक्य को नु त कल्पयिष्यति ॥ १३२ ॥
न चापि स्मृत्यविच्छेदात् सर्वज्ञः परिकल्प्यते ।

---

क्तता त्वया साध्यैव भवेत् । तथा च न दृष्टान्तसिद्धः । क्षणिकत्व-साधनं च न शक्यमिति च शब्दनित्यत्वाधिकरणे सुस्पष्टीभविष्यति । तथा च नानयोर्हेत्वोस्तुल्यत्वं, येन संशयहेतुत्वं इति चाक्षिप्येत; किंतु मद्धेतुः प्रसिद्धव्याप्तिकः स्वयं सिद्धश्च । एवं दृष्टान्तोऽपि न साध्य-हेतुविहीनः इति सिद्ध्यतीति निराबाधोऽस्मदीयः पक्षः ।

**भवतस्तु** हेतुः एतद्विपरीतया सन्दिग्धासिद्धः । दृष्टान्तश्च संदिग्ध-साधनकः, इत्यप्रसिद्धानुमान न साध्यसाधनायालमिति महानयमावयोर्विशेषः जागर्ति ॥ १३१ ॥

बौद्धाभिमतसर्वज्ञसद्भाववादोऽयं ( सुतरां परिहरणीयः ) सुपरिहर-श्चेति प्रदर्शयति– ॥ **प्रत्यक्षाद्यविसंवादीति** ॥

**यस्य च** सर्वज्ञस्य सद्भावारणं प्रमेयत्वादिसाधनजातमपि प्रत्यक्षादिप्रमाणाविरुद्ध कर्तुं भवति; तस्य सद्भावं को वा साध-येत्; 'बुद्धः न सर्वज्ञ, प्रमेयत्वात, घटवत्, इत्यादिप्रयोगजात-मत्राभिप्रेतम् । नचात्रप्रयोजकत्वशङ्का युज्यते; सर्वज्ञानकारणाभावेनैव सर्व-ज्ञासंभवस्योपपादितत्वात् ॥ १३२ ॥

ननु सर्वज्ञसद्भावे अनुमानं प्रमाणं; तत्र च हेतुः '**बुद्धः सर्वज्ञः**' इति दृढा स्मृतिः; अतः अष्टकादिस्मृतिवत् इयं स्मृतिः समूल-मनुमापयेत् इति चेदाह– ॥ **न चापि स्मृत्यविच्छेदादिति** ॥

विगानात् छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् ॥ १३३ ॥

---

न हि सर्वज्ञः अविच्छिन्नस्मृतेः परिकल्पयितुं शक्यते । तत्र च हेतुत्रयं प्रदर्शयति— विगानात् छिन्नमूलत्वात् , कैश्चदेव परिग्रहात् इति ।

अयमाशयः— या स्मृतिः प्रमाणान्तराविरुद्धा । सा हि स्वमूलप्रमाणमुपस्थापयितुमर्हति । सर्वज्ञस्मृतौ तु नास्तिका अपि परस्परं विगायन्ति ; तद्भेदाश्रयणात् । वेदवादिनस्तु सुतरां सर्वज्ञं निराकुर्वन्तीति तु प्रत्यक्षसिद्धमेव ।

ननु चास्तिकसंमतमन्वादिस्मृतीनामपि नास्तिकापरिग्रहादेतादृशविगानं सममिति ताभिरपि स्मृतिभिः श्रुत्यनुमानं न प्रभवेदिति चेदाह— ॥ छिन्नमूलत्वादिति ॥ सर्वत्र स्मृतिः पूर्वज्ञानकार्यतया स्वमूलभूतं ज्ञानमनुमपयति । सर्वज्ञस्मृतौ तु सर्वज्ञानकारणभावात् पूर्वज्ञानं स्मृतिमूलभूतं असंभवितमेवेति मूलच्छेदः एव । नैतावन्मात्रम् ; वैपरीत्यपरिच्छेदोऽपि वर्तते । इदं च पूर्वमेव सुस्पष्ट निरूपितमेव । अतः नानुमानावकाशः । मन्वादिस्मृतीनां तु वेदसंयोगः त्रैवर्णिकानां संभवतीति नैव मूलोच्छेदः, वेदस्यैव मूलत्वेन कल्पयितुं शक्यत्वादिति । अतः छिन्नमूलत्वात् न स्मृत्या सर्वज्ञानुमानसंभवः इति सिद्धम् ।

विगानस्यैव विवरणमाह— ॥ कैश्चिदेवपरिग्रहात् इति ॥ कैश्चिदेव शाक्यभिक्षुभिः परिग्रहात् सर्वज्ञस्मृतिर्विगीता न मूलकल्पनायालम् । अष्टकादिस्मृतीनां एतद्विपर्ययं स्मृत्यधिकरणे वक्ष्यामः । विप्रलिप्सुना बुद्धेनागमः प्रणीतः इत्यपि स्मृतिरस्ति ॥ १३३ ॥

**सर्वज्ञोमावितिति ह्येव तत्काले तु बुभुत्सुभिः ।**
**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥**

---

इदानीं युक्तितः सर्वज्ञकल्पनां निराकुर्वन् छिन्नमूलत्वं विवृणोति–

॥ सर्वज्ञोऽसावितीति ॥

बौद्धैर्भवद्भिः '**बुद्ध एव सर्वज्ञः; नत्वन्ये**' इति किलेष्यते। इदं च तदा घटेत– यदा बुद्धज्ञाने यत् सर्वं ज्ञेयं तत् अन्ये यदि जानीयुः। अन्यथा तु नैव बुद्धः सर्वज्ञः इति ज्ञातुं पार्येत। यः घट न जानाति, अन्य सः घटज्ञः इति कथं वा जानीयात्? ततश्च तज्ज्ञानज्ञेयविषयकविज्ञानशून्यैः, (बुद्धज्ञानविज्ञेयक्षणिकत्वशून्यत्वदुःखात्मकत्वादिविषयज्ञानरहितैः अतीतानागतवर्तमानपुरुषैः सर्वज्ञविज्ञानासंभवात् सर्वप्रमाणशून्यतया सर्वज्ञसद्भावाभाव एव सिद्ध्येत्।

**एवं चायं प्रयोगः**– '**कालत्रयवर्तिनः पुरुषाः, कालत्रयेऽपि सर्वज्ञ न जानन्ति**'; (इति प्रतिज्ञा) 'तज्ज्ञानज्ञेयविज्ञानरहितत्वात्' (हेतुः) '**अस्मादादिवत्**' (सपक्ष) तेनचेदं सिद्ध्ये। यश्च न कदाचित् गृह्यते, स नास्ति, शशविषाणवदिति। एवं च सर्वज्ञस्य प्रमाणेनानवगतत्वात् न तद्विषयकस्मृतिरपि घटेत। अतश्चैवाशक्यज्ञानमूला एवं जातीया स्मृतिरप्रामणिकैवेति न भवदीयप्रत्याशा घटेत।
॥ १३४ ॥

कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यते ॥ १३५ ॥

सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्नतं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ १३६ ॥

---

ननु यदि च स्मृतेरस्याः प्रामाण्यं विहन्येत तर्हि स्यादसत्पक्षहानिः; तत्तु न भवति ; बुद्धादन्यं च कंचित् सर्वज्ञं स्वीकुर्मः तेन च सर्वज्ञो बुद्धः इति ज्ञात्वा स्मृतं, ततः एषा स्मृतिपरंपरा प्रवृत्ता । ततो न स्मृतिहानिरिति चेदाह— ॥ **कल्पनीयाश्चेति** ॥

यदि पूर्वोक्तरीत्या सर्वज्ञसिद्ध्यर्थं अन्यः कश्चन सर्वज्ञ परिकल्प्येत, तर्हि तादृशसर्वज्ञसिद्ध्यर्थं अन्योऽपि कश्चनेति सर्वज्ञपरंपराकल्पनायामनवस्था स्यात् । तत्र च कारणं प्रदर्शयति— ॥ **य एवेति** ॥ **यः स्वयमसर्वज्ञः स** अन्यं सर्वज्ञत्वेन कथं वेदितुमर्हति ? न ह्यन्धः कश्चन स्वान्यं रूपज्ञानवत्वेन ज्ञातुं प्रभवेत् ॥ १३५ ।

एतावता सर्वज्ञस्य सिद्धिर्न भवितुमर्हतीत्युक्त्वा चेदानीं तदनवगमे च सर्वज्ञप्रणीतत्वादागमस्तदीयः प्रमाणमिति च न घटते इत्याह— ॥ **सर्वज्ञोऽनवबुद्धश्च इति** ॥

**येन** पुरुषेण **सर्वज्ञ**एवा**नवबुद्धः तं प्रति** कथं **तद्वाक्यानां** ( सर्वज्ञवाक्यानां ) प्रामाण्यं सिद्ध्येत् ; सर्वज्ञप्रणीतत्वमेव हि तदागम-

**रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।**
**देशना अन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥**

---

प्रामाण्यमूलकारणं, तदभावे च तद्वाक्यानां न प्रामाण्यं रथ्यापुरुषवाक्यवत् सिद्ध्येत् ॥ १६६ ।

पूर्वं बुद्धोक्तत्वादिति हेतुना बौध्दागमस्य प्रामाण्यं इति वदतां मते सर्वज्ञासिध्देः तन्मतासाधुत्वं प्रदर्शितम् । इदानीं बुद्धोक्तत्वहेतोरसिद्धिमप्याह— ॥ **रागादिरहितेति** ।

सर्वज्ञस्य सिद्धावपि च न तेनागमः प्रणीतः इति कल्पयितुं शक्यते; वीतरागस्य तस्य निर्व्यापरतया उपदेशकर्तृत्वासंभवात् । अतः विप्रलिप्सुभिः अन्यैरेव कैश्चित् प्रणीताश्चैत्यवन्दनादिचोदनाः प्रत्यक्षादिभिः प्रत्यवेक्षणं विनैवेति न बुद्धागमः प्रमाणम्— तदुक्तत्वस्यैवानिश्चितत्वात् ।

श्लोके चास्मिन् बुद्धागमस्यन्यप्रणीतत्त्वे (बुद्धप्रणीतत्वाभावे च कारणत्रयं प्रदर्श्यते तच्च—

१) **रागादिरहितत्वम्**

२) **निर्व्यापारत्वम्**

३) **व्यवस्थितिः** । इति ।

इदं च विशदीकुर्मः— आगमप्रणयनं हि बुद्धस्य लोकानुग्रहणरागाद्वा, इतरेषु द्वेषाद्वा, तान् कुमार्गे प्रवर्तयितुम् भवति।

सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।

---

भवदभिमतबुद्धस्तु रागद्वेषरहितः,अतस्तस्य नास्त्येवागमप्रणयने हेतुः इति आगम भवदीयः बुद्धान्येनैव केनचित् प्रणीतो भवेत् ।

ननु महाकारुणिको बुद्धः दुःखपीडितलोकजनान् दृष्ट्वा नितरां खिन्नमनाः हितप्राप्त्युपायान् अहितपरिहारोपायांश्च उपदेष्टुं स्वागमं प्रणिनायेति कुतो नोपपद्यते इति चेत् परिहारं प्रदर्शयति– ॥ निर्व्यापारेति ॥ योगारूढः भवद्बुद्धः प्रत्यक्षतया सर्वं जानीयात् । भवन्मते च– 'कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्' इति स्वीकारात् , ध्यानस्तिमितलोचनो बुद्धः अखिलमपि जगत् अविकल्पनेन विलोकयति ; तदा च तस्य शब्दादिसंबन्धस्मरणस्यैवाभावात , विवक्षाप्रयत्नादिरूपव्यापारासंभवेन न कथंचिदप्यस्य आगमप्रणयनादिक ( उपदेशः ) संभवति; ततश्च कारुण्यपूर्णोऽप्ययं उपेक्षावानेवेति न तत्प्रणीतत्वमागमस्येति अन्यप्रणीतत्वमेव ।

किंच व्युत्थितो बुद्धः उपदिशति ? उतानुत्थितः? नाद्यः- युष्मद्रीत्या व्युत्थितस्य प्रतीतिः अभिलापिनी भ्रान्तिरिति भ्रान्तभाषितरूपागमस्याप्रामाण्यमेव भवेत् । नान्त्यः– अनुत्थितस्य व्यापारोगात् । अतः केनापि प्रकारेण बुद्धागमस्य प्रामाण्यं वक्तु न शक्यते ॥ १३७ ॥

ननु यद्यपि बुद्धस्य व्यापाराः न संभवन्ति ; तथापि तस्यैतावान् महिमा, यत् तत्सन्निधानमात्रेण कुड्यादिभ्यो उपदेशाः प्रादुर्भवन्ति । बुद्धस्य संनिधानस्य तत्र कारणत्वात् बुद्धागमत्वेन व्यवहारः इति चेदाह– ॥ सान्निध्यमात्रेति ॥

निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ १३८ ॥

एवमाद्युच्यमानं हि श्रद्दधानस्य शोभते ।
कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥ १३९ ॥

किं नु बुद्धप्रणीताः स्युः किमु कैश्चिद् दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥

---

तस्य पुंसः बुद्धस्येति यावत् । सान्निध्यमात्रतः सन्निधिमात्रेणैव, भित्त्यादिभ्यो देशनाः ( उपदेशाः ) निस्सरन्ति प्रादुर्भवन्ति । तत्र च दृष्टान्तः ॥ चिन्तामणेरिवेति ॥ यथा चिन्तामणिरूपरत्नसन्निधानादेव अभीष्टफलसिद्धिः तद्वत् । अत्र मात्रपदेन व्यापारादिव्यावृत्तिः । एवं प्राप्ते- तत्र परिहारमाह- ॥ एवमादीति ॥ एतादृशकथनं हि श्रद्धाजडेषु शोभते । तत्राश्रद्दधानाश्च वयं न बुद्ध्यामहे । कुड्यादिभ्यो निस्सृतत्वादेव च तद्देशनासु न विश्वासः संजायेत । किं बुद्धप्रणीता एताः देशनाः उत अन्येन केनचित् इति संशयप्रसङ्गात् ॥ १३८-१३९ ॥

तदेतत् स्पष्टयति- ॥ किं नु बुद्धप्रणीतास्स्युरिति ॥

किमेताः देशनाः बुद्धमहिम्ना निःसृताः? उत अदृश्यैः कैश्चिद् दुरात्मभिः पिशाचादिभिः प्रेरिताः इति सन्देहप्रसक्तेरवारणात् । पिशाचानां अदृश्यातिवाहिकायोनिजदेहवत्त्वं च पुराणादिषु प्रसिद्धमिति 'अदृश्य' इति पदेन द्योत्यते । अतः नास्मभ्यं संशयानेभ्यः बुद्धदेशनाः प्रमाणं भवितुमर्हन्ति ॥ १४० ॥

एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥

नर्ते तदागमात् सिद्ध्येत् न च तेनागमोऽपि वा ।
दृष्टान्तोपि न तस्यान्यो नृषु कश्चित् प्रवर्तते ॥ १४२ ॥

---

एवं तावत् बौद्धसंमतसर्वज्ञं निराकृत्य संप्रति जैनसंमतसर्वज्ञनिराकरणाय यतते– ॥ **एवं यैः केवलमिति** ॥

**जैनास्तावदेवं वदन्ति–** आत्मा स्वभावत एव सर्वार्थग्रहणशक्तो भवति । तादृगज्ञानस्यावरणं कर्मायत्तशरीरम्; इन्द्रियाण्यपि तस्यावरणमेव। जीवः ग्रहणे तत्तज्ज्ञाने न तदपेक्षवान भवति। यदा च जीवः कर्मक्षयवान् (धर्माधर्मरहितः) अत एव च अपगतशरीरेन्द्रियादिसंबन्धो (मुक्तः) भवति, तदा ज्ञानावरणाभावात् स्वाभाविक ज्ञानं अतीतानगतसूक्ष्मविप्रकृष्टार्थविषयकं भवति । अतश्च सर्वज्ञत्वमर्हतानामिति । तदिदं '**एव**'मिति वार्तिकेण प्रतिपादितम् ।तन्निराकरणमाह– ॥ **नर्ते इत्यादिना** ॥ एतादृशसर्वज्ञसिद्धौ किं प्रमाणम्? किमागमः? उतानुमानम्?

**नाद्यः–** अन्योन्याश्रयापत्तेः; आगमोक्तत्वात् सर्वज्ञसिद्धिः सर्वज्ञप्रणीतत्वादागमप्रामाण्यमिति । इदं च बौध्दाभिमतसर्वज्ञनिराकरणावसरेस्पष्टीकृतम् । न च वेदान्तिवत् नित्यागमः भवद्भिरङ्गीक्रियते, येन आगमप्रामाण्ये सर्वज्ञापेक्षा न स्यात्, यतश्चान्योन्याश्रयदोषः परिह्रियेत ।

**नाप्यनुमान –** व्याप्तिग्रहणोपयिदृष्टान्तालाभात् । न च एतादृशातिशययुक्तः, पुरुषो लोके कश्चन कुत्रापि परिदृश्यते । अतः नैतन्मतमपि युज्यते; इति '**चोदनैव प्रमाणं**' इति पक्ष एव युज्यते ॥ १४१ ॥

नित्यागमावबोधोऽपि प्रत्याख्येयोऽनया दिशा ।
न हि तत्रापि विश्रम्भो दृष्टोऽनेन कृतोऽथवा ॥ १४३ ॥

---

एतावता प्रबन्धेन पुरुषविशेषे कंचनातिशयमाश्रित्य तत्प्रत्ययेनागमप्रामाण्यमिति यैरभिहितम्, ते निराकृताः । अथेदानीं सृष्ट्यादौ नित्य एवागमः सुप्तप्रतिबुद्धन्यायेन हिरण्यगर्भं प्रति चावभातः ततः-प्रभृति वेदपरंपरैषा प्रवर्तितेति ये प्राहुः तानपि निराकर्तुमुपक्रमते— ॥ नित्यागमावबोधोऽपीति ॥

अनया दिशा बुद्धनिराकरणन्यायेन नित्यागमावबोधोऽपि (हिरण्यगर्भस्य) प्रत्याख्येयः, निराकार्यः इति ।

इदं चात्र विचारणीयम्— अयं च पक्षः सिद्धान्तस्य, न प्रतिकूलः, वेदनित्यत्वस्यैवाभ्युपगमात । अस्मिंश्च पक्षे धर्माधर्मौ शब्दैकसमाधिगम्यावेव भवतः । तथा च भवदभिमतचोदनैकगम्यत्वं धर्मस्येति, प्रतिज्ञाहानिरपि न भवति । स्थिते चैवं कुतो वा एतत्पक्षस्य निरासः क्रियते इति ।

अत्र ब्रूमः— सृष्टेरादौ यत् हिरण्यगर्भस्य (चतुर्मुखस्य) ज्ञानं तत् किं ग्रहणात्मकम्? उत, स्मरणरूपम्? आद्येऽपि, किंतत् प्रमाणरूपम्? उत अप्रमाणरूपम्? न द्वितीयद्वितीयः अप्रमाणादर्थ_ तथात्वनिश्चयासंभवात्, प्रमाणं चेत् नाप्रत्यक्षं तत् भवतीति कुतस्तन्निराकरणेन बुद्धातिशये प्रयत्नः ।

यदि च हिरण्यगर्भस्य साक्षात्कारिप्रत्यक्षमेतदित्याश्रीयते, तथा-सति हिरण्यगर्भः अनुच्चारितशब्दमेव शृणोतीति अतीन्द्रियदर्शनमेवा-

सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।
यथाद्यत्वे न विस्रम्भः तथातीतादिकीर्तने ॥ १४४ ॥

---

पनितम् । अयं च निराकरणीय एवेति पूर्वमुक्तम् । न केवलं वेदे-परमेवम्, तुल्यन्यायतया धर्माधर्मावपि कश्चित् प्रत्यक्षत एव पश्यतीत्यप्यापतेत् । तथा च चोदनैवेति प्रतिज्ञायाः हानिरिति । अत एव वार्तिके 'अनया दिशा' इत्यभिहितम् । अयमपि सिद्धान्तविरोधीति । स्मरणं तु (आद्यद्वितीयविकल्पः) सपद्येवोत्तरत्र निराकरिष्यते ।

किंचायं कल्पः वेदस्य कृतकत्वशङ्कामप्यापादयेदिति हेतोरपि निरासार्हो भवति । अनभिव्यक्तशब्दग्रहणसमर्थपुरुषसद्भाव प्रमाणासंभवादपि नायं कल्पः घटते । न च प्रत्यक्षं तत्समर्थम् ; तस्येन्द्रियागोचरत्वात् । नाप्यनुमानम् व्याप्तिग्रहणौपयिकदृष्टान्तासंभवात् । न च हिरण्यगर्भवाक्यमेव प्रमाणम् ; पुरुषाणां विप्रलम्भभूयिष्ठानामेव ( अनृतवादिनामेव ) प्रायशः दर्शनात् ।

तदेतदाह– ॥ सर्वदा चापिपुरुषाः इति ॥

इदानींतनपुरुषदृष्टान्तेन गतकालीनपुरुषा अपि अनृतवादिनः इत्येव निश्चेतु शक्यते । वेदोऽपि प्राह– 'अनृतवादिनी वागि'ति जैमिनिरपि उत्तरत्र वक्ष्यति 'प्रायोऽनृतवादिनीवागि'ति । 'प्रायात्' इति सूत्रखण्डेन । अतः हिरण्यगर्भवाक्येपि न विस्रंभः युज्यते ॥ १३४ ॥

**स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः ।**
**भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥ १४५ ॥**

**पुरुषातिशयश्चेष्टः सत्र चागमनित्यता ।**
**कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥ १४६ ॥**

---

भवतु वा आगमस्य अकस्मात् भानं हिरण्यगर्भे, परंतु तत् प्रमात्मकमेवेति न वक्तुं पार्यते इत्याह– ॥ **स्वप्नादिज्ञानवच्चापि इति** ॥

हिरण्यगर्भस्य **आगमार्थयोः प्रत्ययः** ज्ञानं आगमविषयकं तदर्थविषयकं च ज्ञानं स्वप्नादिज्ञानवत् **स्वप्नादिजज्ञानवत्** स्यात् ; प्रमाणमूलकत्वात् इति शङ्का येषां जायते, तान् प्रति कथमागमस्य तदीयस्य प्रामाण्यं भवेत् । अत्रादिपदेन मदादेर्ग्रहणम् ॥ १४५ ॥

पूर्वं **नित्यागमाववोधोऽपि** इति वार्तिके ( १४३ ) **अनया दिशा** ' इति सर्वज्ञनिराकरणमार्गेण निराकरणं प्रतिज्ञातम् । तदेव विवृण्वन् दोषान्तरं चाह- ॥ **पुरुषातिशयश्चेष्ट इति** ॥

हिरण्यगर्भस्यागमप्रतिभानमित्यस्मिन् पक्षे पुरुषस्य तावदतीन्द्रियार्थदर्शनशक्तिरभ्युपेयते; अनुच्चारिशब्दग्रहणस्य हिरण्यगर्भे अङ्गीकारात् । यदि च सा स्वीकृता, कुतस्तर्हि वेदनित्यत्वस्यापि स्वीकारः ; वैयर्थ्यात् । एतदपेक्षया पूर्वोक्तपक्ष एव (बौद्धार्हत) श्रेयान् ; पुरुषस्य प्रत्ययादेवागमप्रामाण्यमित्येव तैः स्वीकारात् । एवं **'ग्रहणपक्षः'** निराकृतः । अथेदानीं **स्मरणपक्षमपि** निराकरोति- ॥ **कल्पितमिति** ॥

स्मरणं च अनुभवाधीनम् ; हिरण्यगर्भस्य न्यातिशयवतः जन्मान्तरीयान भवनिबन्धनं वेदस्मरणं इति किल कल्पनीयम् तत्र च न किञ्चित् प्रमाणं कल्पनानुकूलं परिदृश्यते । कथं वा द्विपरार्धसख्याकप्रलय-कालव्यवहितं स्मरणं एतादृशग्रन्थराशिविषयकं अन्यूयानतिरिक्ततया भवतीति कल्पना घटते ?

ननु जन्मन्तरीयनिबन्धनस्मरणे का नामानुपपत्तिः ? यद्यपि ग्रहणं अनुच्चरितशब्दगोचरं न घटेत ; न तु स्मरणम् । लोकेऽपि चिरतरानुभूतानां अनेकान्तरायपरंपरातिरोहितानामपि स्मरणं दृश्यते । जन्मान्तरीयस्मृतौ च तत् कथं न भवेत् ? न च देहध्वंसात् स्मृतिहेतु-संस्कारानवस्थानात स्मृत्यनुपपत्तिरिति वाच्यम् ; देहनाधारत्वात् संस्कारस्य, ज्ञानसमानाधिकरणत्वात् संस्कारस्मृत्योः , आत्मन एव च ज्ञानाधिकरणत्वात् , तस्य च नाशाभावात् न काप्यनुपपत्तिः ; इति चेत् , ब्रूमः- मरणस्य अशेषसंस्कारोच्छेदलक्षणत्वात् जन्मान्तरानुभूतं स्मर्यते इत्येतन्न घटत एव ।

**वस्तुतस्तु इदं त्विह तत्त्वम्— भट्टपादैः** अत्र क्रियमाणं सर्वज्ञ-निराकरणं, न परमात्मविषये घटते; यश्च परमपुरुषः परब्रह्माभिधानः वासुदेवः आदित्यमण्डलवर्ती '**यस्सर्वज्ञस्सर्ववित्**' इत्यादिवेदवाक्यैरेव सर्वज्ञत्वेन वेद्यमानः सः नैव निराकर्तुं , शक्यते । अयं च **वार्तिककारः तन्त्रवार्तिके ग्रहैकत्वाधिकरणे** स्पष्टमाह—

**तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।**
**इज्यते वारिणा नित्यं कं खं ब्रह्मेति चोदितः ॥**

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वं एकेन परमात्मना ॥ इति ।

अत्र परमात्मसद्भावपक्षः उपनिषत्संमतः वार्तिककारादृतः इत्यत्र न मनागपि संशीतिः । तस्य सर्वज्ञत्वं च वेदेष्वेव स्पष्टमभ्यधायि । एतद्वार्तिकव्याख्याने **न्यायसुधायां भट्टसोमेश्वरेणापि** व्योमशरीरपद-व्याख्यानावसरे '**यस्याकाशश्शरीरं**' इत्यादिश्रुतीरुदाहृत्य सुबालोपनिषदनुसारं नारायणः परमात्मा सर्वशरीरी सर्वज्ञः इति सम्यक् निरणायि । अतस्तादृशसर्वज्ञपरमपुरुषोक्तत्वस्वीकारे नापौरुषेयत्वानुपपत्तिः । **वेदापौरुषेयत्वं** नाम पूर्वोच्चारणक्रमज्ञानाधीनस्मृतिमात्राधीनपूर्वक्रमसजातीय-क्रमविशिष्टोच्चारणविषयत्वमेव । **पौरुषेयत्वं तु** पुरुषसंकल्पाधीनापूर्व-क्रमविशिष्टोच्चारणविषयत्वम् । एतदभाव **एवापौरुषेयत्वं** पूर्वनिरूपितम् । अत वार्तिककारीयमिदं सर्वज्ञनिराकरणं परब्रह्मभूतपरमपुरुष-भिन्नसर्वज्ञनिराकरणपरमेवेति पण्डितरूपवेद्यं भवति । **सूत्रकारः** भगवान् **जैमिनिरपि** न परब्रह्मनिराकर्ता । '**परं जैमिनिः मुख्यत्वात्**' '**साक्षादप्यविरोधं जैमिनिः**' इत्यादिभिराध्यात्मिकसूत्रैः जैमिने-र्व्यासान्तेवासिनः ब्रह्मज्ञाग्रेसरत्वनिश्चयात ।

वार्तिककारश्चायं **विरोधाधिकरणे** भारतेतिहासानां प्रामाण्यं प्रदर्शयन् गीताप्रामाण्यं स्पष्टयति । **गीतायां** च स्पष्टं भगवतः सर्वज्ञत्वमुक्तम् "**वेदाहं समतीतानि वर्तमानानि चार्जुन**" इत्यादौ ।

ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।
यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥१४७॥

---

सुचरितमिश्रः श्लोकवार्तिव्याख्याता, काशिकायामेवमेवह्याह-

'यदि नामेतिहासपुराणप्रामाण्याश्रयणेनायोनिजदेहा एव कृतादियुगभेदेषु केचिदृषयः स्मरन्ति वेदानिति साङ्गिरन्ते । तदस्तु । नैवमपि नः काचित् सिद्धान्तहानिः' इति ॥

इतरेषां जन्मान्तरीयस्मरणं परमात्मसंकल्पायत्तम् ; न स्वाभाविकम् ; सर्वज्ञत्वं च । परमात्मनस्तु न तथेति तादृशस्य सर्वज्ञस्य भगवतो वास्तुदेवस्य परब्रह्मणः कर्मानधीनस्य न वार्तिककृता कुमारिलेनात्र निषेधः क्रियते । अन्यथा वार्तिकविरोधापरिहारात् । अत एव चात्र व्याख्यातृभिः, पार्थसारथि-सुचरितमिश्रादिभिः हिरण्यगर्भेति नाम्ना निर्दिश्य सर्वज्ञत्वनिराकरणं क्रियते । न भगवन्नामोल्लेखः । अतोऽपि ज्ञायते, भगवद्भिन्नसर्वज्ञसद्भावनिराकरण एव वार्तिककाराणामाभिसंधिः इति । एतद्विस्तरस्तु आत्मवादे भविता ।

प्रकृतमनुसरामः । स्मरणपक्षं दूषयित्वा सिंहावलोकनन्यायेन पुनरपि हिरण्यगर्भादीनां ग्रहणपक्षमेव दूषयति- ॥ ग्राह्यत्वेति ॥

एवं अनुच्चारितत्वेऽपि आगमस्य ग्राह्यत्वं हिरण्यगर्भादीनां, चेति यदीष्यते अर्थोऽपि धर्माधर्मादिः गृह्यते इति चेष्यताम् । तत्र को द्वेषः ? ननु शब्दः इन्द्रियजन्यप्रत्यक्षयोग्यः, न तु धर्माधर्मादिः

**पुमांस्तावत् स्वतन्त्रः स्यात् अर्थग्रहणवादिनाम् ।**
**आगमप्रतिभाने तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥**

**अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।**

---

अतः आगमस्य ग्राह्यत्वसंभवेऽपि, नार्थो गृहीतुं पार्यते ; अतीन्द्रियत्वात् धमादेरर्थस्येति चेत् तत्राह– ॥ **योहीति** ॥ शब्दः ( आगमः ) अनुच्चरितः अतीन्द्रिय एव । तस्यैव यदि ग्राह्यत्वं, **का कथा** तदर्थग्रहणे । अतः नायं पक्षः युज्यते ॥ १४७ ॥

अथ, उभयोरतीन्द्रियत्वे समानेऽपि विनिगमकाभावात् आगमग्रहणमेवाश्रीयते ; अस्माभिः नत्वर्थग्रहणम् ; इति चेदाह– ॥ **पुमांस्तावदिति** ॥

नात्र समानत्वम् । अर्थप्रतिभाने पुरुषस्य स्वातन्त्र्यमव्याहतम्, अर्थनिश्चयस्य पुरुषप्रतिभानाधीनत्वात् । आगमप्रतिभाने अर्थज्ञानं पुरुषस्यागमपारतन्त्र्यम् । हिरण्यगर्भस्तावदागमाद्धर्मं जानाति । आगमश्च तत्प्रतिभातत्वेन प्रमाणम् । ततश्चोभयोः पारतन्त्र्यात् ( सापेक्षत्वात् ) उभयाप्रामाण्यम् ॥ १४८ ॥

अथ भवन्मतेऽपि वेदानां पुरुषपारतन्त्र्यमपरिहार्यमेव भवति ; वेदानां स्वरूपावधारणस्य पूर्वपूर्वपुरुषाधीनत्वात् । अध्ययनस्वरूपस्य गुरुमुखोच्चारणपूर्वकानूच्चारणरूपत्वाच्चेति चेदाह– ॥ **अनेकपुरुषस्थत्वादिति** ॥

ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥

अन्यथाकरणे चास्य बहुभिः स्यान्निवारणम् ।
एकस्य प्रातिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥

---

यदि भवद्भिरिव अस्माभिरपि एकपुरुषाधीनत्वं स्वीक्रियेत तर्हि दोषः न परिह्रियेत ; नानासंशयप्रसरात् । कथं, ? किमनेन आगमः कृतः ? उत दृष्टः ? दृष्टत्वपक्षेऽपि यथावस्थितः दृष्टः, उत अन्यथा वेति । एतादृशे च संशये चापरिहृते न प्रामाण्यं सिद्ध्येत् । अनेक पुरुषाधारे वेदे न दोषः इत्युत्तरत्र वक्ष्यते ।

अतः अप्रहीणस्वातन्त्र्यः वेदः प्रामाण्यं न त्यजति । वेदस्यानेकपुरुषस्थत्वमित्यस्माभिः स्वीकारात, एकत्रैव जन्मति ग्रहणस्मरणयोस्स्वीकाराच्च न वेदस्वातन्त्र्यहानिर्भवति । युष्माभिस्तु भवान्तरेष्वनुभूतानां जन्मान्तरे स्मृतिरिति कल्पनात् अतिदीर्घकालव्यवहितं स्मरणायोग्यं मन्यमानाः जनाः एवं हि मन्येरन् । नूनं कृत्वैव वेदमयं श्रद्धार्थं उपदिशतीति । तथा च न वेदे विश्वासप्रसक्तिः । अस्मन्मते तु बहूनां पुरुषाणां एकस्मिन्नेव जन्मनि ग्रहणस्मरणयोः स्वीकरणेन नास्य दोषस्यावसरः वर्तते । अतः नैव वेदस्वातन्त्र्यहानिर्भवेत् ।

मीमांसकमते अनेकपुरुषस्थत्वस्वीकारान्नायं दोषः इति कथमिति चेदाह— ॥ **अन्यथाकरणेति** ॥

अनेके वेदसंप्रदायप्रवर्तकाः इति वदतां मीमांसकानां मते हि एकेन वेदस्यान्यथाकरणे कृते बहवः तं निवारयेयुः ; नैतदेवमिति ।

अतश्च संप्रदाये च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥ १५१ ॥

एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।

---

यथावस्थितं च लोकस्य प्रदर्शयेयुश्च । यथा वने गच्छद्भ्यः मार्ग ज्ञानरहितेभ्यः, एकेन मार्गव्यत्ययोपदेशेऽपि, तज्ज्ञाश्च इतरे तं प्रतिषिध्य यथावस्थितं मार्गं मार्गजिज्ञासुभ्यः प्रदर्शयेयुः । एकाधीनत्वे तु कृतकवेदकल्पनापक्षान्न विशिष्यते ; उभयत्राप्यविश्वासस्य समानत्वात् । अतः बहुसंवादादेव वेदस्य यथावस्थितस्वरूपावधारणं भवेदिति न मीमांसकमते दोषः ॥

एवं वेदसंप्रदायोऽपि नैकेन प्रवर्तितः इति निरूप्योपसंहरति—
॥ अतश्च सम्प्रदायेति ॥

अतः एकेनान्यथाकरणे अन्ये निषेद्धारः स्युः; इति पूर्वोक्तहेतुत एव, अध्ययनसंप्रदायेऽपि च नैकः पुरुषः प्रवर्तक इष्यते । अमुमर्थं प्रयोगेण प्रदर्शयति— अतीतः कालः, पारतन्त्र्याध्येतृविशिष्टः, कालत्वात्, अद्यतनकालवत् इति ॥ १५१ ॥

एतावता च पुरुषे एकस्मिन् अतिशयमङ्गीकृत्य पौरुषेयत्वमेव वेदस्येति वादिमतस्य अपौरुषेयत्ववादिनां मतस्य च न तौल्यमित्यावेदितं । स्थिते चैवं ये, तावत्, यथा अन्येषां सर्वज्ञकल्पना निष्प्रमाणिका, तद्वत् मीमांसकानामपौरुषेयत्वकल्पनापीति वदन्ति । तान् सोपहासं निराकुरुते—
॥ एवं च कल्पयन्त्यन्येति ॥

**तावन्न कल्पयत्येतत् समत्वं जैमिनेः परैः ॥१५२॥**

**न हि दृष्टाधिकं किंचित् प्रामाण्ये तेन कल्प्यते ।**
**अप्रामाण्यनिमित्ते च परस्यादृष्टकल्पना ॥ १५३ ॥**

---

**एवंच– तदेवमुक्तेन न्यायेन** यथा सर्वज्ञकल्पनायां नैव प्रमाणं किञ्चित् उपलभ्यते इत्युक्तत्वेन, **जैमिने**र्मते वेदस्य पौरुषेयत्वे किल प्रमाण-निरूपणस्यावश्यकता भवेत् , नापौरुषेयत्वे, तस्य कर्तृस्मरणदर्शनादेरभावादेव सिद्धत्वात् । एवं सिद्धेऽपि वैषम्ये यत् साम्यमापाद्यते तदेतावतेति सोप-हासं वदति, यावत् परे चैत्यवन्दनादिवाक्यप्रामाण्यसिद्ध्यर्थं **एवम-ग्निहोत्रं जुहोती**'त्यादिवेदवाक्याप्रामाण्यसिद्ध्यर्थं च यावत् कल्पयन्ति , तावदयं **जैमिनिः** न वेदप्रामाण्यसिद्ध्यर्थं किञ्चिदपि कल्पयतीति एतादृशमेव समत्वमनेति । पर्यवसानं तु अधिककल्पनायुक्तत्वं भवतां मीमांसकानां तु नैकापि कल्पनेति, कल्पनासाम्यमत्रापाद्यते चेत् तत् भवतां मौढ्यमेव हि सूचयेत् इति ॥ १५२ ॥

तदेतत् विवृणोति–॥ **न हि दृष्टाधिकमिति** ॥

**तेन– जैमिनिना** वेदप्रामाण्ये इदानीं यथा दृश्यते वेदव्यव-हारः प्रामाणिकः एवमेव पूर्वमप्यासीत् इति दृष्टानुसारी मार्गः किल समाश्रीयते ; नाधिकं किञ्चित् अलौकिकं **जैमिनिना** परिकल्प्यते । **परैस्तु** पुरुषातिशयः अदृष्टपूर्वः परिकल्पितः इति तेषां महद्धि गौरव-मनिवार्यमेव स्यात् । न केवलमेतावत् दृष्टहानिश्च तेषामिति चाह– ॥ **अप्रामाण्यनिमित्तेति** ॥

दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।
उत्पन्ने सति विज्ञाने बलात् बाधप्रकल्पना ॥ १५४ ॥

साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः ।

---

बोधकत्वादेव प्रामाण्यवतः वेदस्य अप्रामाण्यस्वीकारे तत्र कारणं च वक्तव्यम् । तच्च कारणं दोषः; स च वेदे अदृष्ट एव परिकल्पनीयः परैः । नापि बाधकज्ञानं प्रामाण्यापवादकं वेदोत्थज्ञानस्य समस्तीति । अतश्च, भवति चोदनातो (पदात्) ज्ञानं, न च बाधकमुत्पद्यते, पुरुषाभावेन च दोषोऽपि नास्ति । एवं च त्रिविधाप्रामाण्य रहितस्य वेदोत्थज्ञानस्य दृष्टं प्रामाण्य परैर्हातव्यमेवेति दृष्टविरोधः न लङ्घयितुं शक्यते । अतश्चाप्रामाण्यं वेदस्येति वदतां दृष्टविरोधः, अदृष्टकल्पना चापतत इति ।

ननु योऽयं दृष्टबाधः दोषः आपाद्यते; वेदात् ज्ञानं जायते, तदपवादः भवद्भिरुच्यते, इति, तदिदं न युज्यते । भ्रान्तिस्थलेऽपि ज्ञानोत्पत्तेस्समत्वात् इति चेदाह— ॥ उत्पन्ने इति ॥ वेदात् जातस्य अग्निहोत्रादिनिष्ठस्वर्गादिसाधनत्वविषयकस्य ज्ञानस्य न सन्देहविपर्ययौ वर्तते । भ्रान्तिस्थले तु विपर्ययस्य प्रामाण्यापवादकस्य सत्त्वादप्रामाण्यप्रसक्तिः न तत्तौल्यमत्र भवति । एवं सत्यपि हठात् विनैव कारणं बाधः प्रकल्प्यते परैः । अप्रामाण्यसाधकानां परोक्तानुमानानां च आगमविरोधः प्रतिहेतुप्रतिहतिश्चेति पूर्वमेव विशदं निरूपयांबभूविम ॥

नास्तिका अपि भवन्त, प्रत्यक्षस्य प्रामाण्ये नैव विबदन्ते; तत्र च सामग्री दोषविरहः बोधकत्वं (ज्ञानजनकत्वं) इति भवतामाशयः । सा च यदि चोदनाजनित-

प्रत्यक्षात् नास्तिकैर्वाच्यः विशेषश्चोदनाधियः ॥१५५॥

उपदेशोऽन्यथा न स्यात् अतीन्द्रियानिबन्धनः ।
तस्य कर्ता न चेत् दृष्टः सोऽर्थ इत्यर्थकल्पना ॥ १५६ ॥

---

ज्ञानेऽप्यस्ति कुतो वेदे प्रामाण्यासद्भावः?- इति चाह- ॥साधिते पुरुषाभावेति ॥

वेदस्य पुरुषाभावः पूर्वं निपुणं साधितः ; शब्दस्य च स्वतोनिर्दुष्टत्वात् , पुरुषद्वारैव शब्दे दोषो वक्तव्यः ; पुरुषाभावेन निर्दुष्टायाः चोधनाधियः निर्दोषज्ञानजन्मनः प्रत्यक्षात् न भेदः । अतः प्रत्यक्षप्रामाण्यवत् चोदनाप्रामाण्यमप्रकम्प्यमेव भवेत् । नास्तिकैर्विशेषः अत्र परं प्रामाण्यं नास्तीत्यत्र कल्पनीय एव । तत्र च दोषाः प्रागुदीरिताः ; इति दृष्टबाधः अपरिहार्यस्तेषामिति ॥ १५५ ॥

अत्रापरं भाष्यं, सर्वज्ञसद्भावे अर्थापत्तिं अनुमानं वा प्रमाणं साधयत् बौद्धशङ्कासूचकमुपलभ्यते । ' नन्वविदुषामुपदेशो नावकल्पते । उपदिष्टवन्तश्च मन्वादयः ' इत्यादि । तस्यार्थं प्रदर्शयति- ॥ उपदेशोऽन्यथेति ॥

अनेन च वार्तिकेण अर्थापत्तिपरतया भाष्यं व्याख्यायते धर्माधर्मोपदेशो हि बुद्धमन्वादीनां तदीयग्रन्थैरुपलभ्यते । अर्थज्ञानाभावे च तद्विषयकोपदेशः नैव घटेतेति उपदेशविषयः अर्थः चैत्यवन्दना-

यद्वानुमानमेवेदं उपदेशित्वमुच्यते ।
दृष्टार्थपूर्वताव्याप्तं व्यतिरेकोऽस्य नन्विति ॥ १५७ ॥

---

ष्टकादिः तैः दृष्टः इति कल्पयामः ; पीनत्वान्यथानुपपत्त्या रात्रिभोजनवत् । अत्र मन्वादिग्रहणं प्ररोचनार्थम् । यथा भवन्तो मीमांसकाः अतीन्द्रियार्थबोधकमन्वादिस्मृतिसत्त्वदशः मन्वाद्युपदेशदर्शनेन मन्वादीनां तज्ज्ञानवत्त्वं स्वीकुर्वन्ति, तथा वयमपि ( बौद्धाः ) स्वागमार्थविषयकज्ञानमपि बुद्धस्यानायासेनोपपादयिष्याम इति ॥ १५६ ॥

अथवा पूर्वोक्तं अनुमानाभिप्रायमित्यपि वा स्यादित्याह- ॥ **यद्वानुमानमेवेदमिति** ॥

अत्र उपदेशोकर्तृत्वहेतुना तद्विषयकज्ञानं साध्यते । एवमत्र प्रयोगः ; अष्टकाचैत्यवन्दनादिविषयकः उपदेशः, ( पक्षः ) दृष्टार्थपूर्वः ( साध्यधर्मः ) उपदेशत्वात् ( हेतुः ) उभयप्रसिद्धाप्तप्रणीतोपदेशवत् ( दृष्टान्तः ) । वैद्योपदेशादौ च उपदेशित्वं दृष्टार्थपूर्वत्वया ( साध्यव्याप्ततया ) अवगतम् । तदतीन्द्रियगोचरमपि सत् दृष्टार्थपूर्वतामनुमापयेत् ; इति ।

ननु चात्र भाष्ये उपदेशित्वं हेतुरिति, नैवोक्तं ; किंतु अविदुषामुपदेशो नैव घटते इति । एवं च कथमस्यानुमानपरत्वेन व्याख्या युज्यते इति चेदाह- **व्यतिरेकोऽस्य नन्विति** ॥ अत्र ज्ञानाभावे उपदेशो नैव घटते ; इति 'अविदुषामुपदेशो' नावकल्पते ; इति अप्रयोजकत्वाशङ्कानिवारकानुकूलतर्कप्रदर्शनपरं, अतः साध्यान्वयः प्रकृतहेतो

अन्यथाप्युपपन्नत्वं व्यामोहादिति कथ्यते ।
लिङ्गस्य व्यभिचारो वा बालवाक्ये निदर्शनात् ॥ १५८ ॥

वेदात् ज्ञात्वोपदिष्टं चेत् इत्येवं सिद्धसाधनम् ।

---

राक्षिप्यते,। **'उपदिष्टवन्तश्च मन्वादयः'** इति भाष्यं च पक्षधर्मत्वप्रदर्शनपरम् अतः नियतसाध्यकहेतोः पक्षवृत्तित्वकथनमुखेन अनुमानपरमेवेदं भाष्यं इति **कथने** न काप्यनुपपत्तिः ॥ १५७ ॥

एवमुभयथापि चाक्षेपभास्यच्यस्यार्थमुपवर्ण्य **'उपदेशो हि व्यामोहादपि भवति'** इति च सिद्धान्तभाष्यं तद्व्याचष्टे ॥ **अन्यथाप्युपपन्नत्वमिति** ॥

अर्थापत्तिरिति पक्षे दोषनिरूपणं, अन्यथाप्युपपन्नत्वरूपं प्रथमतः क्रियते ; अन्यथाप्यनुपपन्नः किलार्थः स्वोपपादस्य ज्ञापकः ( साधकः ) । अत्र चोपदेशस्य व्यामोहादपि भवितुमर्हत्वेन न तात्त्विकज्ञानकल्पकत्वं तस्येति अर्थापत्तिभङ्गः क्रियते । यदि चानुमानपक्षः तत्रापि दोषः उद्भाव्यते ; लिङ्गस्य ( हेतोः ) व्यभिचारः इति । यदिदं दृष्टपूर्वत्वं उपदेशात् साध्यते, तत्र विकल्पयामः किं, प्रत्यक्षदृष्टपूर्वत्वं, उत वेदात् दृष्टपूर्वत्वम् इति ।

**नाद्यः**— बालोन्मत्तादिवाक्येषु व्यभिचारात । ते हि प्रत्यक्षादिभिरदृष्ट्वैव किञ्चिदिवोपदिशन्ति । अतः प्रत्यक्षदृष्टपूर्वत्वसाध्याभावेऽपि उपदेशस्य बालवाक्यादौ दर्शनात् हेतोरनेकान्त्यम् ।

**द्वितीयकल्पो**ऽपि न घटते इत्याह- ॥**वेदात् ज्ञात्वोपदिष्टमिति** ॥

वेदादपीत्यनेनोक्तं मन्वादेश्चैतदिष्यते ॥ १५९ ॥

---

वेदात् ज्ञात्वा उपदेशश्चेत्, सिद्धसाधनं दोषः; मन्वादेः ज्ञानानां वेदपूर्वकत्वस्येष्टत्वात्, स्मृत्यधिकरणादौ चास्य स्पष्टमेव साधनात्। तथा च किं भवेत्? वेदात् विदितवतां अतीन्द्रियार्थविषयोपदेशः? एवं च वेद एवातीन्द्रियार्थे प्रमाणं, न सातिशयः पुरुषः इति। इदं च सिद्धसाधनवर्णनं पक्षैकदेशभूतमन्वादिवैदिकवाक्येष्वेव न बौद्धवाक्ये, तैर्वेदप्रामाण्यानङ्गीकारात् तदिदमाह— ॥ मन्वादेश्चैतदिष्यत इति॥

भाष्ये वेदवाक्यलौकिकवाक्ययोः वैलक्षण्यप्रतिपादकं वाक्यं, "अपि च पौरुषेयाद्वचनात् एवमयं पुरुषो वेदेति भवति प्रत्ययः, नैवमयमर्थः इति। विप्लवते खल्वपि कुतश्चित् पुरुषकृतात् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति; इति।

अस्य चायमर्थः— पूर्वं लौकिकवचनात् (पुरुषवचनात्) जातोऽपि निश्चयः अनन्तरं मूलदोषावगमश्चेत् भवेत् बाध्येत। अतः बुद्धवाक्यानामपि प्रामाण्यं नैव वक्तुं युक्तम्, पुरुषमात्रसाधारणभ्रमादेस्संभवात्; इत्युक्तम्। अधुना च पुरुषवाक्यानां न अर्थे प्रामाण्यम्; किंतु तज्ज्ञाने परं, वाक्यरचनां दृष्ट्वा, ज्ञानमन्तरा वाक्यरचनायाः असंभवात् एवं जानात्ययमिति निश्चिनुमः। न तदर्थोऽपि एवमेवेति। प्रत्ययोऽथ न प्रतितिष्ठतीति भावः; इति।

अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः ।
तस्मादेकान्ततो नास्ति पुंवाक्यात्तद्धियां गतिः ॥ १६० ॥

भ्रान्तस्यान्यविवक्षायां अन्यद्वाक्यं च दृश्यते ।
यथाविवक्षमप्येतत् तस्मान्नैव प्रवर्तते ॥ १६१ ॥

---

तदिदं भाष्यं व्याख्यास्यन् प्रथमतः विकल्प्य दूषयति– ॥ **अन्यथा संविदानोपीति** ॥

लौकिकवाक्येन तद्वक्तुः ज्ञानमनुमीयते ; वक्तृज्ञानपूर्वकः पुंवाक्येभ्यो अर्थनिश्चयः इति यदुक्तं । तदनेकदोषग्रस्तमिति ; वाक्यत्वहेतोः तज्ज्ञाननिश्चयकत्वाभावात । अनाप्तो हि पुरुषः विपरीततया जानन्नपि अन्यथा किल वक्तुमिच्छति ? यथा, **"नद्यास्तीरे फलानि संतीति"** वाक्यरचनायाः विवक्षाधीनत्वात् । तथाचान्यथा ज्ञायते अन्यथा च विवक्षावशात् वाक्यं प्रयुज्यते ; अतश्च, अव्याभिचारितया, पुरुषवाक्यात् तद्वाक्यप्रतिपाद्यार्थज्ञानं नैवानुमातुं पार्यते ।

वाक्यं च पुरुषकृतं विवक्षामपि नानुमातुं प्रभवतीत्यपि चाह– ॥ **भ्रान्तस्येत्यादिना** ॥ वाक्यरचनां प्रति अव्यवहितकारणं विवक्षा ज्ञानं तु तत् पुरस्कृत्यैवकारणम् । तस्मात् तद्व्यवहितं कारणं भवेत । सन्निहित विवक्षां प्रति च व्यभिचारी भवात वाक्यत्वहेतुः । यथा भ्रान्तपुरुषोक्तवाक्ये विवक्षायां अन्यथासत्यामपि अन्यथावाक्यरचना दृश्यते । अतो यथाविवक्षमपि वाक्यं न प्रवर्तत एव । एवंस्थिते भाष्यकारः **अपि च पौरुषेयद्वचना**'दित्यादि कथं प्राहेते आक्षेपः ।

वक्तृधीराप्तवाक्येषु गम्यतेऽन्यत्र विप्लुतिः ।
तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते ॥ १६२ ॥

पदार्थरचनायत्तो वाक्यार्थप्रत्ययोद्भवः ।

---

एवं दूषिते समर्थयितुमाह— ॥ **वक्तृधीराप्तवाक्येष्विति** ॥

लोके हि वाक्यप्रयोक्ता उभयधा दृश्यते— **आप्तः अनाप्तश्चेति** यत्र च ( वाक्यश्रवणान्तरं ) वक्ता पूर्वं आप्तत्वेन निर्धारितः तत्प्रयुक्तवाक्य-श्रवणानन्तरं च तद्वाक्यादेवमयं वेदेति भवति प्रत्ययः । व्यवहारश्च प्रवृत्तः, विसंवादप्रसक्तिरपि न भवति । कदाचित् जाताशङ्कोऽपि श्रोता वाक्यप्रयोक्तुराप्तत्वानुसंधानेन तज्ज्ञानपुरस्सरमेवार्थे निश्चयं भजते । अन्यत्र चानाप्तवाक्ये च विप्लुतिरेव ( अप्रमाण्यमेव )। इदं च भाष्यकार-एव प्राह— "**विप्लवते खल्वपि कश्चित् पुरुकृतात् वचनात् प्रत्ययः**" इत्यादिना । तथा च भाष्यकृता उत्सर्गापवादद्वारेण वाक्यस्य द्विविध-स्यापि ईदृशं सामर्थ्यमुक्तं , आप्तवाक्यस्य वक्तृज्ञाने प्रामाण्यं, आप्त त्वस्य यथार्थदर्शनत्प्रतिपादनरूपत्वात् । अनाप्तवाक्यस्य तु बाह्यार्थत्वात् वक्तृज्ञानेप्यप्रामाण्यमेवेति । एवं च पूर्वं यत् वाक्यत्वं अतथाभूतत्वे हेतुत्वेनोक्तं तस्याप्रयोजकत्वं दृढीकृतं भवति । मिथ्यात्वे दोषमूलकत्व-मेव कारणम्; तथा च वाक्यत्वहेतुः वेदवचनानां मिथ्यात्वे सोपाधिकः निषिद्धत्वप्रयुक्त इवाधर्मत्वे हिंसात्वहेतुरिति ॥ १६२ ॥

आप्तवाक्यानां वक्तृज्ञानगमकत्वे हेतुमाह— ॥ **पदार्थरचनायत्त** इति ॥

विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः ॥ १६३ ॥

विवक्षान्तरयुक्ता हि कुर्वाणा रचनांतरम् ।
आवापोद्वापयोगेन दृश्यंतेऽर्थेषु मानवाः ॥ १६४ ॥

---

लोके तावदेवं वाक्यरचनाक्रमः परिदृश्यते । प्रथमतः पदार्थान् ( वस्तूनि ) प्रत्यक्षादिप्रमाणैः विषयीकरोति (जानाति) ; ततस्तान् परस्मै प्रतिबोधयितु विवक्षति ; ततस्तत्प्रतिपादनसमर्थां पदरचनां करोति ; (वाक्यं करोति) अनन्तरं च श्रोता पदरचनात्मकात्तस्मात् अर्थं प्रत्येति । एवं क्रमेण विवक्षाद्वारेण वक्तृज्ञानकार्यत्वं वाक्यस्य पदरचनात्मकस्येति सिद्ध्यति । अत्र वाक्यकरणाऽव्यवहितपूर्विका या विवक्षा सा विना ज्ञानं न भवति ; इति पूर्वज्ञानमपेक्षते ; धूम इवाग्निम् । तया च ज्ञान गम्यते इति ॥ १६३ ॥

वाक्यरचना विवक्षाधीनैवेत्यतेत् अन्वयव्यतिरेकाभ्यां प्रदर्शयति—
॥ विवक्षान्तरयुक्ता हीति ॥

**मानवाः** वाक्यप्रयोक्तारः कयाचित विवक्षया रचनाविशेषं प्रयुञ्जते । यथा "**घटमानयति चैत्रः**" इति । विवक्षान्तरसत्त्वे तु पूर्वरचनाविलक्षणरचनायुक्तं ( वाक्यं ) प्रयुञ्जते च । यथा **घटं नयतीति** । इदं च वैलक्षण्यं रचनायां विवक्षाधीनमेव अवापोद्वापाभ्यामवगम्यते । सा च रचना हेतुभूतविवक्षा ज्ञानाधीनैव ; इच्छायाश्च ज्ञानाधीनत्वात् ॥ १६४ ॥

तेनार्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि तत्त्वतः ।
ज्ञातो नूनमनेनेति वक्तृज्ञाने मतिर्भवेत् । १६५ ॥

आप्तोक्तकारिणं कंचिदनुयुङ्क्ते नरं यदा ।
तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥

---

कार्यं च वाक्यं पदरचनात्मकं कारणे वक्तृज्ञाने प्रमाणं (अनुमानं) इत्याह– ॥ **तेनार्थप्रत्ययोत्पादेति** ॥

**तेन**- पूर्वोक्तरीत्या विवक्षाधीना रचना, विवक्षा च ज्ञानाधीनेति क्रमतरककारणेन, श्रोतुर्वाक्यात् अर्थज्ञाने **जातेऽपि** एतद्वाक्यप्रतिपाद्यार्थः अनेन श्रोत्रा ज्ञातः इति वक्तृज्ञाने मतिर्भवति । तथा च लौकिकवाक्यानां वाक्यप्रयोक्तृज्ञानमात्रे प्रामाण्यं न त्वर्थसद्भावेऽपि इति पूर्वोक्तं सुदृढमेति । अत एव भाष्ये **"एवमयं वेदेति भवति प्रत्ययः नायमर्थः"** इति प्रोक्तम् ॥ १६५ ॥

वक्तृज्ञानमुखेनार्थनिश्चयः; इत्यत्रैव साधकान्तरमप्याह– ॥ **आप्तोक्तिकारिणं इति** ॥

यदा पुरुषः कश्चित् स्वाप्तोक्तं अर्थं (कर्म) अनुतिष्ठति; तदा तं अन्यः पुरुषः पृच्छति; एवमनुष्ठाने तव किं प्रमाणं ? इति । तदा चानुतिष्ठन् प्रष्टारं ब्रूते; स्वस्योपदेष्टारं आप्तं निर्दिशति; स एव मम निर्देशकः स एव जानातीति । यदि वाक्यस्यैव स्वातन्त्र्यं स्यात् तदा आप्तनिर्देशः व्यर्थ एव हि भवेत् ॥ १६६ ॥

**तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।**
**प्रामाण्यस्थापनं तु स्याद्वक्तृधीहेतुसंभवात् ॥ १६७ ॥**

---

नन्वेवं किं तर्हि वाक्यमाप्तोक्त अर्थे प्रमाणमेव न भवतीति ? नैवं आप्तोक्तवाक्ये मूलप्रमाणनवधारणे जाताशङ्कः न तद्वाक्यान्निश्चयं भजते । तदा च वाक्यमुदास्ते । यदा च वक्तृज्ञानकारणभूते न्द्रियादीनामदुष्टत्वावगमः तदा दोषाशङ्कादूरीकरणात् वाक्यप्रामाण्यमक्षतं वर्तते । तथा च ज्ञानकारणं शब्दः ( वाक्यं ) प्रमाणभूतमपि अप्रामाण्यशङ्कया किञ्चिदिव शिथिलं मूलप्रमाणादधारणेन दूरीकृतदोषं प्रामाण्यदार्ढ्यं लभते । तदेतदाह— ॥ **तज्ज्ञानान्तरितत्वाच्चेति** ॥

शब्देन आप्तवाक्यरूपेण निश्चयजनने **वक्तृज्ञानान्तरितत्वात् शब्दाः उदासते**–, निश्चयं न जनयन्ति । अत्र **तावदिति** शब्दः अत्यन्ताप्रामाण्यनिवारकः शब्दानाम् । किञ्चिद्विलम्बेनापि प्रामाण्यं प्रतिष्ठितं भवतीत्यर्थः ।

**इदमत्र विचारणीयम्**– वक्तृप्रामाण्यानुसारित्वं शब्दस्येति किल एतावता प्रबन्धेनोक्तम् । तथाचानुवाद एव शब्दः, प्रागनिश्चयाच्चाप्रमाणमिति शब्दः प्रमाणमित्येव न भवति । ततश्च, एकस्य प्रमाणस्य तिलाञ्जलिरेवेति शङ्कायां किं समाधानम् ? इति ।

**अत्रोच्यते**– आप्तोक्तवाक्यश्रवणकाले श्रोतुः शब्दः प्रमाणमेव, ज्ञानजननात् सन्देहाविपर्ययादेरभावाच्च । एवं स्वकाले शब्दः प्रमाणमेव दोषाशङ्कानिराकरणे परं वक्तृज्ञानस्य व्यापारः । श्रोत्रा स्वेना-

विदित एव चार्थः आप्तवाक्यादवगम्यते। अन्यत्र कदाचित् आप्त-वाक्यस्य स्वार्थे व्यभिचारदर्शनेन अत्रापि तथा स्याद्वेति अन्यथात्वशङ्कायां जातायां तद्दूरीकरणायैव वक्तृज्ञानापेक्षा, भवति। सन्मूलकत्वे चाव-गते प्रामाण्यं प्रतिष्ठाप्यते। अत एवचात्र वार्तिके 'प्रामाण्यस्थापनं' इति स्थापनशब्दप्रयोगः।

ननु यदुक्तं 'शब्दास्तावदुदासते' इति तदिदं नैव घटते, शब्दार्थयोर्नियतसबन्धसत्वात्, अर्थः वाक्येन आप्तोक्तेन प्रत्यायितो न वा.? यदि न, कथं तर्हि एवमयं वेदेति वक्तृज्ञानानुमानमुच्यते? एवं शब्दस्य प्रकारवाचित्वेन तज्ज्ञानस्यावश्यं स्वीकर्तव्यत्वात्। न हि लोके निराकारं विज्ञानं अर्थसबन्धाभावे प्रकारवत् स्यात्। न वा श्रोतृबुद्धौ अविषयीभूतं अर्थं वक्तृबुद्धौ एवंभूतमिति वक्तुं शक्नुमः।

यदि च पूर्वमप्यर्थप्रत्ययोऽवगम्यते इति प्रथमः कल्पः तदा पारतन्त्र्यमिति कुतः उच्यते? उत्पत्तिवेलायामेव तेन अर्थनिश्चयः कृत एव हि। अतश्च नान्यापेक्षा। वक्तृप्रमाणापेक्षा हि सर्वत्र निश्चयार्थ-मेवेति लोकविदितम्। अत्र च निश्चयस्य जातत्वात् नान्यापेक्षा। अतः शब्दोदासीनतावर्णनं कथं घटते? न च उत्पन्नमपि ज्ञानं निश्च-यार्थं वक्तृप्रमाणमपेक्षत एवेति वाच्यम्। अनिश्चयात्मकज्ञानासंभवात् इति सपद्येवोक्तम्।

अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ।
तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥

अतोऽत्र पुन्निमितत्त्वादुपपन्ना मृषार्थता ।

---

अतः यदिदं पूर्वोक्तं अर्थज्ञानगम्यैव वक्तृधीः तत्प्रामण्ये कारणमिति तदनुपपन्नमेवेति चेदाह– ॥ अर्थे पूर्वप्रतीतेपीति ॥

प्रतीताप्रतीतविकल्पे प्रथमपक्षमेव स्वीकुर्मः । प्रतीतोऽप्यर्थः अनिश्चित इति न घटत इति तु न, जातशब्दस्यानिश्चयोपपत्तेः । कथं ?

यद्यपि शब्दात् न संशयो भवति । व्यभिचारदर्शनात् संशयो जायत एव । अत एव च व्याप्तिग्रहे भूयोदर्शनापेक्षा इति स्वीक्रियते । अनिश्चयात्मकं ज्ञानमेव न भवति तु निरूपणानर्हमेव । संशयस्यापि ज्ञानकोटावेव निवेशः इति सुष्ठु शास्त्रज्ञैरङ्गीकारात् । एवं च जातेऽपि ज्ञाने कारणान्तरात् संशयापत्तौ, निश्चयस्य वक्तृप्रमाणाश्रयत्वात् अर्थज्ञानगम्यापि वक्तृधीः पूर्वज्ञानप्रामाण्ये प्राथम्यमनुभवति । तथा विशिष्टार्थधिया प्रामाण्यस्याध्यवसानमिति ॥ १६८ ॥

भाष्ये चोदना ( वेदवाक्य ) लौकिकवाक्ययोः वैलक्षण्यं तावद् दनिरूप्यत, ' न वेदवाक्यस्य मिथ्यात्वे किञ्चित् प्रमाणमस्ति ' इति तद्व्याचष्टे– ॥ अतोऽत्र पुंनिमित्तत्वादिति ॥

पूर्वं हि लौकिकवाक्येषु ( पौरुषेयेषु ) ज्ञानान्तरापेक्षया प्रामाण्यम् ; क्वचित्तु तदभावः । स चौपधिकः ; पुरुषाधीनत्वाच्च लौकिक-

न तु स्यात् तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥

न तद्बुद्ध्यन्तरयोनास्तीत्यर्थोऽर्थैश्च प्रतीयते ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं नायथार्थता ॥ १७० ॥

अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।

---

वाक्यानां अप्रामाण्योपाधिः संभवति । **वेदे** तु वक्तुरभावात् न तत्स्वभावत्व (अप्रामाण्य) संभवः । स्वभावत एव वेदे अर्थपरिच्छेदशक्तेः न मिथ्यात्वसंभवः इति भावः ।

वेदवाक्यानां अर्थबोधकत्वस्वभावं लौकिकवाक्यापेक्षया वैलक्षण्ययुवां स्फुष्टयति- ॥ **न तद्बुध्यन्तरयोनास्तीति** ॥

पौरुषेयवाक्यानां पुरुषबुद्धिज्ञापने ( अनुमाने ) एव व्यापारात् तन्मूलप्रमाणान्वेषणपूर्वकमेव प्रामाण्यं वक्तव्यमिति पूर्वं प्रपञ्चितम् । अपौरुषेयवाक्यात्मके वेदे तु वाक्यरचयितुरभावेन वक्तृज्ञानपरत्वाभावात् , पदार्थैरेव वाक्यार्थः प्रतीयते । ततश्च न प्रत्ययान्तरापेक्षा , न वा अयथार्थत्वम् ( अप्रमाण्यं ) । अतश्च वाक्यत्वहेतोर्मिथ्यात्वे अप्रयोजकत्वात् स्वाभाविकप्रामाण्यस्य निर्दुष्टे वेदे चाप्रकम्प्यत्वात् वेदः प्रमाणमिति सुदृढं सिद्ध्यतीति ॥ १७० ॥

पूर्वोक्तभाष्यस्य बौद्धस्य पूर्वपक्षित्वे अर्थमुपवर्ण्य चार्वाके तु पूर्वपक्षवादिनि भाष्यग्रन्थस्य पूर्वमुपवर्णितार्थस्यार्थान्तरमाह- ॥ **अप्रमाणत्व सिद्धौ वेति** ॥

बुद्धादिवचनं तस्य साध्यानासङ्गितोच्यते ॥ १७१ ॥

तेषामपि हि यत् कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥ १७२ ॥

---

पूर्वं वेदानामप्रामाण्यस्थापनार्थं '**यत् किञ्चन लौकिकं वचनं नद्यास्तीरे फलानि सन्तीति**' इति दृष्टान्तोऽभ्यधायि । तस्यानेन- साध्यवैकल्यमुच्यते ॥ १७१ ॥

तदेव साध्यवैकल्यं प्रदर्शयति ॥ **तेषामपि** ॥

**भाष्यकारैः एवमभिमन्यते**— यदा तावत् लोकायतिक (चार्वाक) मते स्थित्वा अयं प्रयोगः क्रियते,— '**चोदना, मृषा, प्रत्यक्षाद्यगतार्थत्वात् ईदृग्बुद्धादिवाक्यवत्**' इति, तदा **बौद्धानुसारेणेदमभिधीयते**— साध्यानसङ्गी ( साध्यविकलः ) दृष्टान्तः इति । बौद्धमते **हि** शब्दस्य नार्थे प्रामाण्यं स्वीक्रियते । पदानां सर्वत्रार्थस्मारकत्वमात्रमेव, न तु कुत्रापि किञ्चिदर्थापनयोपनयहेतुत्वं, पदसमुदायात्मकवाक्यमपि चानेकत्र व्यभिचारित्वात् नार्थे प्रमाणं भवेत् । वक्त्रभिप्रायः परं नित्यसंबन्धित्वात् शब्दैः बोध्यते ; अर्थं बुद्ध्वा शब्दरचनेति नियमात् ।

**तथा चाहुः** '**नान्वेतेभ्योऽर्थसिद्धिः तेषां तत्र प्रतिबंधासिद्धेः** (व्याप्त्यभावात्) । **वक्तुरभिप्रायं तु सूचयेयु**'रिति । तथा च दृष्टान्तत्वेन कथितानां बुद्धवाक्यानां यत् कार्यं ज्ञानात्मकं उक्तं तत्र तेषां

स्वव्यापारातिरिक्तेऽर्थे वेदस्यापि मृषार्थता ।
पूर्वपक्षार्थवत्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥

अज्ञात्वैवमभिप्रायं कृतकाकृतकत्वयोः ।

---

प्रामाण्यमक्षतमेव । अर्थे तु तेषां प्रामाण्यं नैवाभ्युपगम्यते । अतो हेतोः चार्वाकोक्तानुमानं दृष्टान्ते साध्यविकलत्वात् दुष्टमेवेति न किञ्चित् वेदवाक्यानां मिथ्यात्वे कारणमिति पूर्वं प्रतिपादितम् ॥ १७२ ॥

'**पदार्थरचनायत्तः**' इति वार्तिके नित्यसंबन्धसत्त्वात् , वाक्यात् वक्तृज्ञानानुमानं भवति ; इति । तस्मात् तत्र तत् प्रमाणमेवेति पूर्वोक्तानुमानस्य दृष्टान्ते साध्यवैकल्यमेवेति । यदि च यत्र व्यापारः, ( वक्तृज्ञाने ) तद्भिन्ने अर्थे अप्रमाणं पुंवाक्यस्य इति तात्पर्यं तर्हि सिद्धसाधनमिति प्राह– ॥ **स्वव्यापारातिरिक्तेऽर्थे** इति ॥

वेदवाक्यानामपि स्वप्रतिपाद्यार्थाभिन्नेऽर्थे मिथ्यात्वमस्माकमपीष्टमेवेति सिद्धसाधनपरिहारार्थम् । न हि '**दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत**' त्यादिवाक्यं स्वार्थे प्रमाणं भवत् , तद्भिन्नेऽर्थे घटसद्भावादौ प्रमाणमिति केनचित् इष्यते । यद्वा तत्तद्वेदवाक्यं पूर्वपक्षार्थे मृषैवेति हि तत्तद् **धिकरणे** स्पष्टमिदम् ॥ १७३ ॥

अपरमपि भाष्यमत्रोपलभ्यते– **ननु सामान्यतो दृष्टमनुमानं भविष्यति । पुरुषवचनं वितथमुपलभ्य वचनसामान्यात् वेदवचनं मिथ्येत्यनुमीयते**' इति तद्व्याख्यातुं प्रयतते– ॥ **अज्ञात्वैवमभिप्राय मिति** ॥

सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात् परोऽब्रवीत् ॥ १७४ ॥

ननु सामान्यतो दृष्टं नान्यत्वादित्यदूषणम् ।
एतस्मादेव दृष्टान्तो न हि पक्षे सपक्षता ॥ १७५ ॥

---

वाक्यत्वं न प्रयोजकं मिथ्यात्वे, इति भाष्यकाराशयमज्ञात्वैव, आप्तवाक्यप्रामाण्ये दोषासद्भावः, हेतुः, तदप्रामाण्ये तु दोषसद्भावः, इत्येव भाष्यकाराशयः; इति ज्ञात्वा पूर्वपक्षी शङ्कते— ॥ **ननु सामान्यतो दृष्टमिति** ॥

**शङ्कितुश्चायमभिप्रायः**- भवतु येन केनचित् कारणेन लौकिकवाक्यानां मिथ्यात्वं, तथापि, मिथ्यात्वयुक्ते लौकिकवाक्ये वाक्यत्वमपि प्रतिबद्धं वर्तते; तच्च वेदवाक्येऽपि समस्तीति तदविनाभूतं मिथ्यात्वं वेदवाक्यानामपि साधयेदेव । अतः **नैवमत्र शङ्कनीयम्** हेतोरप्रयोजकत्वस्य पूर्वमुक्तत्वात् पुनः कथं प्रत्यवस्थानमिति; अज्ञाताभिप्रायपुरुषपरिचोदनात् ॥

अत्र **परीहारभाष्यम् 'नान्यत्वात्, न ह्यन्यस्य वितथभावेन्यस्य वैतथ्यं भवति। अन्यत्वादेव । न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति'**

**अस्य चायमर्थः**— न हि लौकिकवचनसाधर्म्येण वैदिकस्य मिथ्यात्व भवति। वैदिकादन्यत्वात् लौकिकवाक्यस्येति ।

**इदं च** भाष्यं न घटते इत्याक्षिपति- ॥ **नान्यत्वात् इति** ॥ **अन्यत्वात्** इति दूषणं भाष्ये क्रियमाणं न घटते। कुत इति

तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।
अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ॥ १७६ ॥

यदि स्यात्व्यवधानेऽपि वाक्यार्थापेक्षयाऽनृतम् ।

---

चेदाह– ॥ एतस्मादेवेति ॥ पूर्वपक्षिणा च वेदवाक्याप्रामाण्यसाधने पुरुषवाक्यं दृष्टान्ततया उपात्तम् । तत्र अन्यत्वं कथं दूषणं भवेत् । प्रत्युत गुणायैव च भवेत् । पक्षसपक्षयोर्भेदस्यैव युक्तत्वात् । अत एव च दृष्टान्तः भवति । अनन्यत्वे तु साध्यसमत्वरूपदूषणापत्तेः । साध्यः पक्षः, सपक्षश्च सिद्धः ; इति किल भिदा, न हि पक्षे सपक्षता । सिद्धसाध्ययोश्चैकत्वासंभवात् ॥ १७५ ॥

पूर्वोक्तरीत्या यथाश्रुतभाष्यस्यानुपपन्नार्थकत्वात् भाष्यकाराभिप्रायमुपवर्ण्य भाष्यं समर्थयितुमपक्रमते श्लोकत्रयेण–। तस्मादयमभिप्राय इति ॥

तस्मात् भाष्यस्य यथाश्रुतस्यानुपपन्नत्वा भाष्यकारस्य अयमभिप्रायो वर्ण्यते । कस्सः ? इति चेत् तमेव अभ्युपेत्यादिना प्रदर्शयति । पूर्वं पुरुषवाक्यस्तनां वक्तृज्ञान एव प्रामाण्यम्, न तु अर्थविषये । तथा च दृष्टान्तत्वेनाभिमते पुरुषवाक्ये अप्रामाण्यरूपप्रकृतानुमानसाध्याभावात् ( अप्रामाण्याभावात् ) दृष्टान्तः साध्यविकलः इति तावदुक्तम् । इदानी तु पुंवाक्यं बाह्ये एवार्थे प्रमणमिति ; न तु वक्तृज्ञाने । बाह्यार्थापेक्षयैव च अप्रामाण्यवादिनामयं दृष्टान्तः इत्यपि स्वीक्रियतां नाम । तथाऽपि हेतोरनैकान्त्यमपरिहरणीयमेवेति वदामः ।

दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो भवेत् ॥१७७॥

सत्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता ।
अतीन्द्रियेऽपि किञ्चिद्धि सत्यं दृष्टं यदृच्छया ॥ १७८ ॥

---

यद्यपि लौकिकवाक्यं ज्ञाने अव्यवहिते प्रमाणं ज्ञानव्यवहिते अर्थे, अप्रमाणं; इति वस्तुस्थितिः तथाऽपि अर्थेऽपि व्यवहिते प्रामाण्याभ्युपगमेन भवदुक्तस्य प्रयोगस्य दृष्टान्ते साध्यवैकल्यं वदामः । न ह्याप्तवाक्यं पौरुषेयमप्यप्रमाणं दृश्यते; लोके तस्याप्तवाक्यस्य सत्यत्व (प्रमाणत्व) स्यैवाभ्युपगमात् । तथा च, अप्रामाण्यभाववति तस्मिन् वाक्यत्वस्य प्रकृतहेतोर्दर्शनात् साधारण्यं, (व्यभिचारः) कथं परिह्रियेत? **पौरुषेयेषु सत्येष्वेव वाक्यता दृष्टैवेत्यन्वयः** ।

अथ पूर्वमस्माभिः प्रतिपादिते '**वेदवचनं**' वितथं ( मिथ्या ) **वाक्यत्वात्** इति प्रयोगे हेतुविशेषणत्वेन अतीन्द्रियार्थप्रतिपादकत्वे सतीति योजयामः । न च तदा लौकिकवाक्ये अनैकान्त्यशङ्कायाः अवकाशः अतीन्द्रियेर्थे पुंवाक्यस्य सर्वथा प्रामाण्याप्रसक्तेरिति चेदाह— ॥**अतीन्द्रियेपीति** ।

एवं हेतोर्विशेषितत्त्वेपि न दोषपरिहारो भविता । पुरुषवाक्यस्य अतीन्द्रियार्थबोधकस्यापि क्वचित् यदृच्छया सत्यत्वस्यैव दृष्टत्वात् । स्वर्गादिकमस्तीति **केचन** पुरुषा वदन्ति । **केचित्तु** नेति । तत्र अन्यतरेण वाक्येन सत्येनैव भाव्यम् । ततश्च वाक्यस्य सत्यता स्यादेवेति, अतीन्द्रियार्थबोधकत्वरूपविशेषणदानेऽपि लौकिकवाक्ये सत्यत्वसत्वात् वाक्यत्वहेतोरनैकान्त्यमवर्जनीयमवेति ॥

नान्यत्वादिति चान्येन परोक्तादन्यतोच्यते ।
अन्यो ह्येष तदाभासः विपक्षं वान्यमब्रवीत् ॥ १७९ ॥

यद्वान्यस्मात् विसंवादात् मिथ्यात्वं तत्र न त्विह ।

---

एवं भाष्यवाक्याभिप्रायमुपवर्ण्य, '**नान्यत्वात्**' इति भाष्यं योजयति– ॥ **नान्यत्वादिति** ॥

पूर्वपक्षिभिः सामान्यतो दृष्टमनुमानं यदुक्त ततोऽन्यदिदं तदाभासानुमानं ; कुतोऽवगतमेतदेवमिति चेत्– अनैकान्तिकहेतुकत्वात् । एवं चैतादृशात् सामान्यतो दृष्टानुमानात भवदभिमतसाध्यं न सिद्ध्यति ।

**तथा चायमर्थः पर्यवसन्नः**- प्रमाणभूतात् सामान्यतो दृष्टादस्य तदाभासस्यान्यत्वात् इति भाष्यार्थः ; इति। अस्यैव भाष्यस्य योजनान्तरं प्रदर्शयति '**विपक्षं**' वेति । अन्यं '**विपक्षं**' विलक्षणं **विपक्षमब्रवीत्**। अन्यत्र सामान्यतो दृष्टानुमानेषु 'वह्निमान् धूमादि' त्यादिषु विपक्षत्वेनाभिमतः महाह्रदादिः, साध्यहेतूभयशून्यः परिदृश्यते। अत्र तु पूर्वोक्तानुमानविपक्षभूतं आप्तवाक्यं हेतुयुक्तं भवति ; वाक्यत्वहेतोः, अप्रमाणभूतानाप्तवाक्यवृत्तित्ववत् प्रमाणभूताप्तवाक्येपि सत्त्वात् ! अतः विलक्षणविपक्षत्वमत्रेति '**अन्यत्वा**'दिति भाष्यकारः प्राहेति । विपक्षवृत्तिहेतोश्च न साध्यसाधकत्वसंभवः ॥ १७९ ॥

'**अन्यत्वा**'दिति भाष्यस्यैव व्याख्यानान्तरमाह–॥ **यद्वान्यस्मात् विसंवादादिति** ॥

विषयस्यापि चान्यत्वात् साधनासङ्गितैव सा ॥ १८० ॥

नह्यन्यस्येति नैकस्मिन् मृषाऽर्थेऽन्यमृषार्थता ।

---

लौकिकवाक्यदृष्टान्तेन वैदिकवाक्यानां मिथ्यात्वं नैव वाक्यत्व हेतुना साधयितुं शक्यते । कुत इति चेत् वाक्यत्वहेतोः भवत्संमतमिथ्यात्व प्रत्यप्रयोजकत्वात् । लौकिकवाक्यानामपि मिथ्यात्वं विसंवादनिबन्धनं, ( विसंवादहेतुकं ) न वाक्यत्वहेतुकम् ; इदं च पूर्व विस्तरेणोपपादितम् । ततश्चान्यत्वादित्यस्य लौकिकवाक्याप्रामाण्यसाधकविसंवादापेक्षया, भवत्प्रयुक्तहेतोः भिन्नत्वात् नेदं प्रामाण्याभावप्रयोजकमिति भाष्यार्थः ।

' **अन्यत्वादि** 'ति भाष्यस्यैव, पुनरर्थान्तरमाह– ॥ **विषयस्येति** ॥ साध्यानासङ्गित्वं ( दृष्टान्ते साध्यवैकल्यं ) प्रकारान्तरेण प्रतिपादयति । लौकिकवाक्यानां विषयः ( प्रमेयभूतः ) वक्तृज्ञानं, विवक्षा वा । नार्थः, तत्र च लौकिकं वाक्यं प्रमाणमेवाव्यभिचारात् । वेदवाक्यानां तु विषयः वक्तुरभिप्रायः न भवति, अपौरुषेयत्वात्तेषाम् । अपि तु अग्निहोत्रादिरर्थ एवेति, कथं तत् दृष्टान्तीकृत्य वेदवाक्यमिथ्यात्वसाधनं कर्तुं शक्यते, तदपेक्षया **विषयान्यत्वादिति** । ततश्च पुरुषवाक्यानां ज्ञाने प्रामाण्यात् , प्रकृतसाध्यस्याप्रामाण्यस्य तत्राभावात् साध्यानासङ्गित्वं दृष्टान्तस्य । अनुमाने भग्ने, वेदरूपपक्षेऽपि अप्रामाण्यरूपप्रकृतसाध्यानासङ्गित्वं स्वत एवायास्यति ॥ १८० ॥

' **नह्यन्यस्य मिथ्यात्वं** 'इति भाष्यस्यार्थमाह– ॥ **न ह्यन्यस्येति नैकस्मिन्निति** ॥

**विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता ॥ १८१ ॥**

---

एकस्मिन् लौकिकवाक्ये **मृषार्थो** (अप्रमाणे) **तदन्यस्य** वैदिकस्य वाक्यस्यापि न **मृषार्थता** हेतोर्वाक्यत्वस्य पूर्वोक्तरीत्या अप्रयोजकत्वात् । एवं **प्रथमा योजना** । तद्रीत्या व्याख्यानं **प्रदर्शितम्** । **द्वितीययोजनारीत्या** वक्तृज्ञाने एव लौकिकवाक्यानां व्यापारः न त्वर्थे, इत्यर्थवर्णनात् वक्तृज्ञानस्य मिथ्यात्वे अस्त्येव वाक्यस्यापि मिथ्यात्वमिति चेत् न । न ह्यन्यस्य वक्तृज्ञानस्य मिथ्यात्वेऽपि न तत्प्रतिपादकवाक्यस्य मृषार्थतेति वार्तिके विवक्षाग्रहणं वक्तृज्ञानोपलक्षणार्थं ज्ञेयम् ; ज्ञानविवक्षयोरविनाभावात् ।

एवं वा स्यात्— विवक्षा यद्यपि लौकिकवाक्ये मृषार्था स्यात् वक्तुरयथार्थगोचरत्वात् । न तु वाक्यम् ; तस्य तत्प्रतिपादनमात्रेणैव प्रामाण्यात् । इदं च वाक्यं प्रति अव्यवहितपूर्ववृत्तिर्विवक्षेति पूर्वप्रदर्शितरीत्यनुसारेणेति ध्येयम् ।

तथा च वाक्यत्वमप्रयोजकमित्यत्र न वैमत्यमिति परोक्तानुमानं वाक्यत्वहेतुकमनुमनुमानं दुष्टमिति सिद्धम् । एवमन्यस्येति भाष्यस्य तृतीयव्याख्यायां तु, विसंवादवैतथ्ये साध्येऽपि न वाक्यत्वं वैतथ्यसाधकमिति व्याख्येयम् । चतुर्थार्थे तु वार्तिकस्यैव व्याख्येति न वक्तव्यमवशिष्यते ॥ १८१ ॥

श्यामत्वे पुंस्त्ववच्चैतत् साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वात् विकल्पसममुच्यते ॥ १८२ ॥

---

'न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं मिति' भाष्यस्याशयं विवृणोति ॥ श्यामत्वे पुंस्त्ववच्चैतदिति ॥

यथा 'देवदत्तः श्यामः, पुंस्त्वात्' इति प्रयोगे गौरेऽपि पुंस्त्वस्य सत्वात् हेतुरनैकान्तिकः; तद्वत् वाक्यत्वं अपि अप्रामाण्ये साध्ये अनैकान्तिको हेतुः, इति दृष्टान्तप्रदर्शनपरमिदं भाष्यमिति ।

'अन्यत्वादि'ति भाष्यस्य व्याख्यानान्तरं प्राह— ॥ परोक्तेरिति ॥ पिशाचानां पिशाचभाष्यैवोत्तरं देयम्; इति मार्गमाश्रित्य, भाष्यकारोऽपि परैर्दुष्टसाधनप्रयोगे दुष्टमेवोत्तरं देयमिति मन्वानः, जात्युत्तरं (विकल्पसमं) 'नान्यत्वादि'त्याह परोक्तेः पूर्वपक्ष्युक्तसाधनवाक्यस्य, दुष्टत्वात् विकल्पसमं जात्युत्तरमुच्यते । विकल्पसमं नाम, धर्मिणि साधनधर्मयुक्ते धर्मान्तरविकल्पनेन साध्यधर्मविकल्पापादनम् । अयमर्थः, वाक्यं द्विविधं हि दृश्यते; लौकिकं किञ्चित् । ततोऽन्यच्चवैदिकं किञ्चित् । तथा च लौकिकत्ववैदिकत्वे विकल्पेन वाक्ये भवतः । एवं च लौकिक वायानन्यत्वे,मिथ्यात्वं, अन्यत्वे तु सत्यत्वं इति ।

यदि हि साधर्म्यमात्रात् वाक्यत्वेन अप्रयोजकेन मिथ्यात्वं भविष्यति; तर्हि वैधर्म्यमात्रात् अन्यत्वलक्षणात् (वैदिकत्वात्) सत्यत्वं कुतो वा न स्यात्? न हि वाक्यत्वं वर्तते; इत्येतावन्मात्रेण धर्मान्तरस्य मिथ्यात्वस्याप्यनुसंधानं भविष्यति; अप्रयोजकत्वात्तस्येति ।

यद्वा प्रमाणमेवेदं सत्यत्वेऽन्यत्वमुच्यते ।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ १८३ ॥
चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।

---

इदानीं च '**अन्यत्वात्**' इत्यादिभाष्यं वैदिकत्वधर्मविशिष्टवाक्यत्वस्य भवदुक्तहेतोरन्यत्वान्न भवदभिमतसाध्यसिद्धिः । '**नह्यन्यस्ये**'त्यादिकं च भाष्यं पूर्ववत् योज्यमिति । तथा च '**नान्यत्वा**'दिति दूषणोक्तिरिति सिद्धम् ॥ १८२ ॥

अथवा नान्यत्वादिति परप्रयुक्तस्य अनुमानस्य दूषणमाह इत्युक्त्वा अथ व्याख्यान्तरमाह– ॥ **तियद्वा प्रमाणमेवेदमिति** ॥

पूर्वपक्षिणा वेदवाक्यानां मिथ्यात्वे सिषाधयिषिते हेत्वन्तरेण सत्यत्वं साधयामः ; इति सिद्धान्तिनोच्यते । '**सत्यत्वे**' ( वेदवाक्यानां ) **अन्यत्** प्रमाणं अनुमानाख्यं, **उच्यते** । तच्च कीदृशमिति तु उत्तरत्र वक्ष्यते । तदा च तादृशस्य वक्ष्यमाणस्य, प्रमाणस्य परोक्तानुमानेन यदि तुल्यबलत्वं, विरुद्धाव्यभिचारित्वं ( विरुद्धत्वं ) स्यात् । तथा च भवदीयानुमाने साध्यसंशयः, यदि च बलीयस्त्वं, तर्हि भवदुक्तं चानुमानं वह्निशैत्यानुमानवत् बाधितं भवेत् । सत्यत्वहेतोर्बलीयस्त्वेन सत्यत्वहेतुना'**मन्यत्वात्**' इति भाष्यस्यार्थः ॥ १८३ ॥

कीदृशं च तदनुमानान्तरमिति चेदाह– ॥ **चोदनाजनितेति** ॥

**चोदनाजनिता बुद्धिः** ( वेदवाक्यजन्यं ज्ञानं ) इति पक्षनिर्देशः ; **प्रमाणं** ( सत्यं ) इति साध्यो धर्मः ; **दोषवर्जितैः कारणै-**

कारणैर्जन्यमानत्वात् लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ १८४ ॥

---

जन्यमानत्वात् इति हेतुः । 'लिङ्गाप्तोक्त्यक्षबुद्धिवत्' इति दृष्टान्तः । अस्मिन् हेतुवाचकपदे प्रत्येकं बुद्धिशब्दः संबध्यते । लिङ्गजबुद्धिवत् आप्तोक्तिजबुद्धिवत्, अक्षबुद्धिवत् इति । इदं चानुमानं पूर्वपक्ष्युक्त-व्यभिचारितवाक्यत्वहेतुकानुमानात् प्रबलं, ऐकान्तिकहेतुकत्वात् । अतश्चा-नेन प्रबलेनानुमानेन मिथ्यात्वानुमानस्य बाधः; इति सिध्यति ।

इदमत्र विचारणीयम् । अनुमानेन प्रामाण्ये साध्ये शब्दस्यान-वस्था, साधकस्यापि प्रामाण्यस्य साधकतरसाध्यत्वात् । उक्तं चेदं पूर्व-मेतैरेव वार्तिककारैः–

नचानुमानतः साध्या शब्दादीनां प्रमाणता ।
सर्वस्यैव हि मा प्रापत् प्रमाणान्तरसाध्यता ॥ इति । (चो॰सू 81 श्लो)

एवं प्रयोगे चास्मिन् 'दोषवर्जितैः कारणैर्जन्यमानत्वात्' इत्ययं हेतुः घटादावपि वर्तते; तत्र च न प्रकृतसाध्यस्य प्रमाण-त्वस्य सद्भावः इति हेतोस्साध्याभाववति घटादावपि सत्वादनैकान्तिकं च । यदि च तत्परिहारार्थं बुद्धित्वविशेषणदानं, तर्हि घटादौ व्यभि-चारपरिहारोऽपि स्मृतिज्ञानमादायानैकान्तिकता, प्रमाणबुद्धित्वानवच्छिन्ने स्मृति-ज्ञाने प्रकृतहेतोस्सत्वात् । अतः कथं प्रयोगो घटते ? इति ।

तत्रेदं वदामः– अत्र प्रमाणपदस्य साध्यवाचकस्य अथयार्था-भावः अर्थः इति स्वीकारेणादोषात् । पक्षवाचके पदे चोदनाजनितेति विशेषणदानं च सिद्धसाधनतापरिहारार्थम् । घटादिविषयकबुद्धिषु प्रत्यक्षादि-जासु प्रमाणत्वस्य सिद्धत्वात् ॥ १८४ ॥

तथाऽनाप्ताप्रणीतोक्तिजन्यत्वात् बाधवर्जनात् ।
देशकालादिभेदादौ चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥

अकर्तृकत्वसिद्ध्या च हेतुत्वं साधयिष्यते ।

---

पूर्वोक्त एव साध्ये हेतुद्वयं (प्रमाणद्वयं) दृष्टान्तान्तरं चाह—
**तथानाप्ताप्रणीतोक्तिजन्तत्वादिति ॥**

चोदनाजनिता बुद्धिः, प्रमाणम, **अनाप्ताप्रणीतोक्तिजन्यत्वात्**, आप्तोक्तिजन्यबुद्धिवत्, इति एकः प्रयोगः । अपरस्तु प्रयोगः, पूर्वप्रतिज्ञायामेव **देशकालादिभेदादौ बाधवर्जनात्** इति हेतुयुक्तः ज्ञेयः । दृष्टान्तस्तु पूर्वोक्त एव । पूर्वोदाहृतदृष्टान्तोऽपि, लिङ्गाप्तोक्त्यक्षबुद्धयोऽपि दृष्टान्तीभवितुमर्हन्ति ; इत्यपि भवति ॥ १८५ ॥

नन्विदं हेतुद्वय चासिद्धमेव ; वाक्यानां सर्वेषां कृतकत्वस्यैव लोके दर्शनात् । अत. प्रयोगद्वयमप्यनुपपन्नमिति चेदाह— ॥ **अकर्तृकत्वसिध्येति** ।

अस्मिन्नेव पादे **अन्तिमाधिकरणे** वेदानामपौरुषेयत्वं (**अकर्तृकत्वं**) साधयिष्यते । ततश्चाकर्तृकत्वसिध्या, न पूर्वोक्तहेतोरसिद्धिः भविता । एवं वेदसत्यत्वसाधकानुमानसद्भावाभिप्रायेण **भाष्यकारः** '**अन्यत्वात्**' इति उपसंहरति ॥ **एवमाद्यवबुध्येति** ॥ अत्रादिशब्देन अन्यस्यापि दोषजातस्य संग्रहः । ते संबन्धाक्षेपे स्पष्टाः इति नात्र विव्रियन्ते । एवं भाष्ये ह्यत्र **अन्यत्वात्** इत्यस्य **षोढा** व्याख्याविकल्पाः इति **वार्तिके** प्रावोचत् ।

एवमाद्यवबुद्ध्यैवं नान्यत्वादित्यवोचत ॥ १८६ ॥

प्रत्यक्षास्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत् ।
स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥

---

अत्र चापरं भाष्य परप्रयुक्तानुमानबाधकं **वेदजन्यज्ञानं**, प्रत्यक्षमित्यर्थं प्रतिपादकं परिदृश्यते— **अपि च पुरुषवचनसाधर्म्यात् वेदवचनं मिथ्येत्यनुमानं प्रत्यक्षस्तु वेदवचनेन प्रत्ययः । न च प्रत्यक्षविरुद्धं अनुमानम्** आत्मानं लभते इति, इदं न युक्तम् ।

अत्र भाष्ये **'वेदवचनेन प्रत्ययः'** इत्यत्र प्रत्ययशब्देन किं वाक्यविषयकप्रत्ययो विवक्षितः; उत तदर्थविषयकः । **नाद्यः—** अनाप्तवाक्येऽपि वाक्यविषयकप्रत्ययस्य प्रत्यक्षत्वेन वेदे विशेषाभावात् । **न द्वितीयः—** वेदवाक्यार्थस्य धर्मस्यातीन्द्रियत्वेन प्रत्यक्षाविषयत्वमिति प्रत्यक्षसूत्रे वक्ष्यमाणत्वात् ।

न च प्रत्ययस्वरूपं ( ज्ञानं ) प्रत्यक्षमिति भावः इति वाच्यम् । **शून्यवादे** प्राकट्यलिङ्गेन ज्ञानस्यानुमेयत्वमेवेति वक्ष्यमाणत्वात् । अतो भाष्यं चेदमनुपपन्नमेवेति चोद्यं परिहर्तुमाह- ॥ **प्रत्यक्षास्त्विति** ॥

अत्र **प्रत्यक्षशब्दः** गौणार्थकतया भाष्ये प्रयुज्यते; ऐन्द्रियिकज्ञाने एव प्रत्यक्षशब्दस्य मुख्यवृत्तत्वात् । गौणी निमित्तं चात्र चतुष्टयं वर्तते ।

ज्ञानाभावश्च मिथ्यात्वं द्वयस्यासंभवाद्यदि ।

---

१) दार्ढ्यम् ।

२) प्राथमिकत्वम् ।

३) स्वतः प्रामाण्यम् ।

४) परतश्चाप्रामाण्यम् । इति ।

प्रत्यक्षे चेदं चतुष्टयमपि स्पष्टतयैवोपलभ्यते; दृढत्वात्, सर्वप्रमाणापेक्षया प्रथमप्रवृत्तत्वात्, स्वतः प्रमाणत्वात् परतो (विसंवादे) अप्रमात्वाच्च प्रत्यक्षज्ञानस्य । एतच्चतुष्टयान्यतमगुणविवक्षया आगमिकप्रत्यये प्रत्यक्षशब्दः प्रयुज्यते । आगमजन्यप्रत्ययोऽपि दृढः, संशयविपर्ययोरभावात् दृष्टान्ताद्यपेक्षावतः विलंबप्रवृत्तिकात् मिथ्यात्वानुमानात् पूर्वप्रवृत्त्या शीघ्रप्रवृत्तिकत्वात् । स्वतः प्रामाण्यात्, अप्रामाण्यस्य विसंवादाधीनत्वात् (अत्र तदभावाच्च) अतः प्रत्यक्षसमानोऽयं प्रत्ययः कथमन्यथा भविष्यति? एतद्विरुद्धतया अप्रामाण्यसाधकानुमानं तु अनेन विरुध्यते; बाध्यते च ॥ १८६ ॥

इदानीं च परमतरीत्या मुख्यमेव प्रत्यक्षविरोधं निरूपयितुं प्रवर्तते– ॥ ज्ञानाभावश्च मिथ्यात्वमिति ॥

भवता वेदविद्वेषिणा वेदवाक्यानां यदप्रामाण्यमुच्यते, तत्र मिथ्यात्वं तव कीदृशमभिप्रेतं; संशयविपर्ययरूपमिथ्यात्वद्वयमपि न संभवति; इति "**न तावत् संशयविपर्ययौ स्तः**"; इति भाष्य एव निरस्तत्वात् न ते प्रभवतः । यदि च ज्ञानाभावात्मकं मिथ्यात्वं तवाभिप्रेतम्, तर्हि ते प्रतिज्ञा प्रत्यक्षविरुद्धा; भवन्मते ज्ञानस्य प्रत्यक्षत्वेन, तद्

प्रत्यक्षं तत् परेषां च सिद्धमस्यासंभवाद्यपि ॥ १८८ ॥

यथा च तव मिथ्यात्वं साधनं साधयेदिदम् ।
तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत ॥१८९॥

---

भावस्य साधने प्रत्यक्षविरोधात् । अतसूक्तम्– " **प्रत्यक्षस्तु वेदवचनेन प्रत्ययः** " इति भाष्यकारैः । मम पुनः श्रोत्रियस्य मीमांसकस्य ज्ञानमनुमेयं स्यात् कामं, तव च, वेदवाक्यश्रवणादुत्पन्नं ज्ञानं प्रत्यक्षं विलोकयमानस्य कथं तदभावात्मकं मिथ्यात्वं ? स्यात् ॥ १८८ ॥

अथ च वाक्यत्वहेतोः मिथ्यात्वसाधकत्वेन पूर्वपक्षिसंमतस्य विशेषविरुद्धत्वं साधयति ॥ **यथा च तव मिथ्यात्वमिति** ॥

इदं वाक्यत्वरूपं **साधनं यथा** ते, पुरुषवाक्यसादृश्यात् **मिथ्यात्वं साधयेत्** **तथा** वाक्यत्वस्य बाधकाधीनस्यैव तत्साधकत्वस्य ( मिथ्यात्वसाधकत्वस्य ) लोके दृष्टत्वात् वेदेऽपि तथा भाव्यम् । न च तथा वेदे संभवति , वेदोत्थज्ञानस्य बाधकाभावात् ; इदं च पूर्वं भाष्यकारैः अस्माभिश्च विस्तरेणोपपादितम् । ततश्च प्रत्यक्षो हि दृढः वेदवचनेन प्रत्ययः, नचासौ बाध्यते च क्वचित् । अतोऽयं हेतुः विशेषविरुद्धः ।

**अयमाशयः** वाक्यत्वमात्रस्य आप्तवाक्यानाप्तवाक्योभयसाधारणस्य, मिथ्यात्वंप्रत्ययप्रयोजकत्वं, पराधीन ( बाधक ) तयैव मिथ्यात्वसाधनदर्शनात्; इति ॥ १८९ ॥

धर्म इत्युपसंहर्तव्ये यच्छ्रेयस्करभाषणम् ।
तत् धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।

---

एतावत्पर्यन्तं सूत्रघटकीभूतचोदनालक्षणपदं व्याख्याय भाष्यकारैरुपसंहृतं 'तस्माच्चोदनः श्रेयस्करः' इति । इदं च केनाभिप्रायेण ? उपक्रमानुसारेण, ("चोदनालक्षणोऽर्थो धर्मः" इति सूत्रानुसारेण) चोदलक्षणः धर्मः इति किल वक्तव्यं स्यात् । शब्दान्तरेण श्रेयस्करशब्देनोपसंहारः किमर्थं, इत्यत्राह— ॥ धर्म इत्युपसहर्तव्ये इति ॥

धर्मशब्दार्थः श्रेयस्करशब्देन विवियते । य एव श्रेयस्करः, स एव धर्म इति निरूपणविवक्षाया भाष्यकारः प्राहैवम् । तथा च इदमपि सिद्ध्यति यत् तीर्थान्तरपरिकल्पित धर्मत्वनिषेधेन श्रेयस्करस्यैव धर्मत्वं, तच्च द्रव्यक्रियागुणादीनामपि वर्तत इति तेषामपि धर्मत्वस्थापनमिति । अन्यथा हि गुणकामाधिकरणादीनामत्र शास्त्रे विचारः असङ्गत एव हि स्यात् । एतद्विस्तरस्तूत्तरत्र ॥ १९० ॥

एतदेव स्पष्टयति— ॥ श्रेयो हि पुरुषप्रीतिरिति ॥

भाष्यकारो हि 'एवं तर्हि श्रेयस्करो जिज्ञासितव्यः' इति, चोदयन्नाह— 'य एव श्रेयस्करः स एव धर्मशब्देनोच्यत' इति । अत्र भाष्ये धर्मत्वं कस्येति तु भाष्ये नोक्तम् । तत्र स्पष्टतां प्रदर्शयति— ॥ श्रेयोहीति ॥ श्रेयशब्दः, पुरुषप्रीतिवाची । तच्च येन भवति, स धर्मः इति भाष्यार्थः । श्रेयसः साधनं च, द्रव्यं, कर्म, गुणः इति वेदैरवगम्यते ; यथा 'दध्नेन्द्रियकामस्य जुहुयात् ; ज्योतिष्टोमेन

तत् धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ ९१ ॥

अन्यत् साध्यमदृष्टं च यागादीषुनुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते । ९२ ॥

---

**स्वर्गकामो यजेत; पञ्चमे ब्रह्मवर्चसकामस्य, इत्यादिवाक्यैः,** दध्यादिद्रव्यं ज्योतिष्टोमादिकर्म, पञ्चमवर्षादिगुणानां पुरुषप्रीतिविषयफलसाधनत्वावगमात् तेष्वेव धर्मता संमतेति ज्ञायते ।

यागादीनामेव धर्मशब्दवाच्यत्वमित्यस्य साधनार्थं, **भाष्यकारः** प्राह- '**यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते**'; इति ।

**अस्यार्थः**- यागयोगात् तत्प्रयोक्तरि धार्मिकत्वव्यवहारदर्शनात् लोकव्यवहारमनुसृत्यापि यागादिरेव धर्मः इति सिद्ध्यतीति । इदं च न घटते । नायं लोकव्यवहारः यागादेरेव धर्मत्वं साधयितुं प्रभवेत्; आत्मगुणभूतापूर्वेणापि, पुरुषसमवेतेन धार्मिक इति व्यवहारोपपत्तेः । यो यागादिकर्ता स एव हि अपूर्वमपि साधयति । स्थिते चैवं कथमयं विवेको भविता ? यागाचरणादेवायं धार्मिकः, नापूर्वादिसाधना इति ।

तथाचापूर्वस्यापि धर्मत्वं स्यादिति अतः भाष्यमनुपपन्नमेवेति शङ्कामपनयन्नाह- ॥ **अन्यत्साध्यमदृष्टं एवेति** ॥

यद्यपि यागादिसाध्यमपूर्वं भवति । परं तु लोकव्यवहारः नापूर्वं निमित्तीकृत्य प्रवर्तते; तस्यात्यन्तमतीन्द्रियत्वात् जनैर्ज्ञातुमशक्तेः । अतः

अन्यत् यागादिभिन्नं, यागादिसाध्यं अदृष्टमेव- अगृहीत्वैव, लोके व्यवस्थितं यागादिकर्तृषु **धार्मिकत्वसमाख्यानं** यागादियोगादेव भवितुमर्हति; नान्यथा। तस्मात् यागादेरेव धर्मत्वं इति लोकव्यवहारादपि गम्यते।

**इदमत्र विचारणीयम्**- किं यागादीनां स्वरूपमेव धर्मः इत्यभिप्रेतम्? तर्हि पूर्वापरव्याघातः किलापतेत्। पूर्वं हि **वार्तिककारै**रेतैरेव।

**ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः।**

**(चो-सू- २४)**

इति किलोक्तम्। वक्ष्यति च **प्रत्यक्षसूत्रे**- '**फलसाधनरूपेण तदानीं येन नास्त्यसौ**' इति। फलसाधनत्वविशिष्टवेषेणैव यागादीनां धर्मत्वमिति ग्रन्थकाराशयः स्पष्टः; तादृशं च रूपमतीन्द्रियमेवेति नापूर्वाद्विशेषः।

किं च धर्मशब्देन यागादिस्वरूपमात्राभिधाने च धर्मशब्दे स्वीकर्तव्याश्चानन्ताश्शक्तयः स्युः। नानाजातीयेषु द्रव्यगुणकर्मसु एकया शक्त्या निर्वाहासंभवात॥

ननु प्रीतिसाधनत्वे धर्मशब्दशक्तिस्वीकारेण न दोषः; तस्य सर्वानुगतत्वादिति चेन्न; तस्याप्यतीन्द्रियत्वात्। विशेषणमात्राभिधानपत्तेः। कथं? प्रीतिसाधनं धर्मः इति स्वीकारे, विशेषणे प्रीतिरूपार्थे एव शक्तिस्वीकारापत्तेः। नानभिधायविशेषणं विशिष्टमभिधातुं शक्यते।

अतः प्रीतिरेव प्रथममभिधेया भवेत्। तावन्मात्रे उपक्षीणाभिधाव्यापारः न विशिष्टमभिधत्ते। अत्र च आकृत्यधिकरणन्यायोऽप्यनुसंधेयः। आकृत्यधिकरणे, हि गवादिशब्दाः, सामशब्दाश्च विशेषमात्रोपक्षीणाः गोत्वादिकमभिदधति; लाघवात्, इति किलसिद्धान्तितम्। वार्तिककारैरपि धर्मश्चापूर्वविशिष्टं कर्मैवेति निराकुर्वद्भिरेवमभिहितम्—

कर्मापूर्वविशिष्टं चेत् धर्म इत्यभिधीयते।
विशेष्यं नाभिधां गच्छेत् क्षीणशक्तिर्विशेषणे॥" इति।

अथ स्यात्— 'विधेयो धर्मः' इति, न स्यात्, विधेरत्यन्तप्रत्यासन्ना (समानाभिधानश्रुत्या) भावनैव तर्हि धर्मपदार्थः इति स्यात्, सिद्धान्ते चास्माकं अंशत्रयविशिष्टा भावना, विधीयते; इति स्वीकारात्। नचेष्टापत्तिः; अन्वयव्यतिरेकाभ्यां अपूर्वस्यैव धर्मपदबोध्यत्वस्वीकारौचित्यात्। कथं? फलकाले हि कर्मणः अभावेऽपि अपूर्वसद्भावमात्रेण धार्मिकोऽयं इति व्यवहारदर्शनात्; यागादिकर्मसु सत्स्वपि वैगुण्यादिना तैरपूर्वानिष्पत्तौ धर्मपदाप्रयोगाच्च। अतः पूर्वोक्तं यागादियोगादेव धार्मिकत्वसमाख्यानमिति भाष्योक्तं कथं घटतामिति। अतः धर्मपदार्थो निरूपणानर्हः।

**अत्र ब्रूमः**- धर्मशब्दश्चायं प्रीतिसाधनवाची। धातुना धृञ्-प्रीतिः (धृतिः) मनिन्प्रत्ययेन च तत्साधनमभिधीयते; इति प्रकृतिप्रत्ययविभागेन अर्थस्समधिगन्तव्यः। न च प्रीतिसाधनाहारवनितादावपि धर्मशब्दप्रयोगप्रसङ्गः इति वाच्यम्। पङ्कजादिशब्देष्विव योगरूढेस्स्वीकारात्। (प्राचीनप्रयोगाधीननिर्णयाङ्गीकाराद्वा दोषाभावात्)

पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।

---

न वा **आकृत्यधिकरणन्यायेन** प्रीतिरूपविशेषणमात्राभिधायित्वरूपदूषणप्रसङ्गः; योगनिरपेक्षायाः समुदायशक्तेरस्वीकारात् । भावनायाः प्रीतिसाधनत्वाभावादेव तत्र धर्मशब्दप्रयोगप्रसक्तेरप्रसरात्; यागादीनामेव च चोदनाप्रमाणबलात् श्रेयस्साधनत्वात् । रूढ्यभ्युपगमगमादेव उभयस्याप्यभिधानमवर्जनीयम् ।

ननु प्रीतिसाधनत्वरूपमपि अदृश्यमेवेत्युक्तं इति चेत् न; वेदादवगमात् । अपूर्वमगणयित्वा च अभ्युदयसाधनं धर्मः इत्यधिगच्छन्तोपि यागाद्यनुष्ठातृषु धर्मिकशब्दं प्रवर्तयन्तो दृश्यन्ते । अतः श्रेयस्साधनत्वमात्रेणैव यागादयः धर्मा इति निश्चेतव्यम् । अतः श्रेयस्साधनं विहितं च धर्मशब्दार्थः इति सिद्ध्यति यदुक्तं **सत्स्वपि यागादिषु वैगुण्यादलब्धापूर्वानिष्पत्तेषु न धर्मपदं प्रयुञ्जाना दृश्यन्ते,** इति तदपि न तथाविधस्य **श्रेयस्साधनत्वस्यैवास्वीकारात्** प्रत्युत तस्याधर्मत्वात कथं तत्र धर्मशब्दप्रयोगो भविता । फलदशायां धर्मप्रयोगोऽपि अभ्युदयानुकूलाभिप्रायादेव अपूर्वमात्रं न धर्मपदार्थः भवितुमर्हतीति चोत्तरत्र निरूपयिष्यते ॥ १९२ ॥

एवं तावत् लौकिकप्रयोगानुसारेण यागादयः धर्मः इत्युक्तं, पश्वादिफलानां या धर्मफलत्वप्रसिद्धिः साऽपि यागादीनामेव धर्मत्वं साधयतीति निरूपयति ॥ **पश्वादीनि धर्मस्येति** ॥

लोके **पश्वादीनि फलानि** च धर्माधीनानीति प्रसिद्धम् । यस्य च तानि फलानि, स धर्मः इति ज्ञायते । **'चित्रया यजेत पशु-**

चित्रा गोदोहनादीनां तान्युक्तानि फलानि च ॥ १९३ ॥

तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥ १९४ ॥

---

**कामः , गोदोहोनेन पशुकामस्य प्रणयेत्** इत्यादिवेदवाक्यैश्च **चित्रे-**ष्ट्यादीनां एतानि फलानीति च ज्ञायते । अतः ते यागादयः धर्माः इत्यप्रकम्प्यम् । न त्वपूर्वस्य वाक्यैः कैश्चिद्धर्मत्वेनावगमः वर्तते । न केवल लौकिकी प्रसिद्धिः परं यागादीनां धर्मत्वे, किं तु वैदिक्यापि प्रसिद्धिः यागादीनां धर्मत्वसाधका वर्तते इत्याह- ॥ **धर्माणि** इति ॥ **यज्ञेन यज्ञमयजन्त देवाः 'तानि धर्माणि प्रथमान्यासन्'** इति वाक्ये यज्ञानां धर्मत्वं **' तानि धर्माणि '** इति सामानाधिकरण्येन प्रतीयते इति भाष्यकाराभिप्रेतम् ।

ननु सामानाधिकरण्यं, यज्ञशब्दधर्मशब्दयोरत्रेति यदुक्तं तन्न घटते ; यज्ञशब्दस्य एकवचनान्तता पुंलिङ्गान्तता, धर्मशब्दस्य च बहुवचनान्तता नपुम्सकलिङ्गान्तता च वर्तते इति विलिङ्गयोः विसंख्ययोश्च तयोः सामानाधिकरण्यायोगात् । तेन भाष्यकारोक्तं साधकं घटते ; इति चेदाह- ॥ **लिङ्गसंख्याविनिर्मुक्तेति** ॥ **" तानिधर्माणि "** इत्यत्र तच्छब्दः सर्वनामशब्दत्वात् पूर्वप्रकृतवाचीति सर्वसंमतम् । पूर्वप्रकृतश्च **' यज्ञेन यज्ञ** इति वाक्ये याग एव नान्यः ; अप्रकृतत्वात् ।

तत्समानाधिकरणश्च धर्मशब्दः यज्ञस्यैव धर्मत्वं साधयेत् । **लिङ्ग-सख्ययोस्तु सत्वप्रधानानि नामानि'** इति वचनानुरोधेन प्रतिपादिकार्थप्रति

अन्तः करणवृत्तौ वा वासनायां च चेतसः ।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥ १९५ ॥

प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते न च साधनम् ॥ १९६ ॥

---

गुणभूतत्वात् ‘ गुणेत्वन्याय्यकल्पनेति’ न्यायेन व्यत्ययः न दोषाय भवेत् । छान्दसो वा व्यत्ययः ; इत्यपि स्यात् । “ **यज्ञेन यज्ञं** ” इति वेदवाक्ये प्रथमः तृतीयान्तयज्ञशब्दः लक्षणया यज्ञसाधनवाचकः; द्वितीयस्त्व यागवाचकः ; इत्यवसेयम् । १९३-९४ ॥

एतावता सिद्धान्तरीत्या धर्मपदार्थं निरूप्य ( द्रव्यक्रियागुणादयोऽपि धर्मः इति निरूप्य ) संप्रति तीर्थान्तरपरिकल्पितानां धर्मत्वनिषेधं स्पष्टयति— ॥ **अन्तः करणवृत्ताविति** ॥

**सांख्याः** अन्तःकरणस्य, मनसो वृत्तिविशेषं धर्मत्वेन व्यवहरन्ति ।

**बौद्धास्तु** चित्तस्य ( ज्ञानस्य ) चित्तान्तरेण आहितां शुभां वासनां धर्मः इति स्वीकुर्वन्ति ।

**जैनैस्तु** पुद्गलान् कार्यारंभवान् सूक्ष्मान् मूर्तिमतः धर्मः इति स्वीकृतम् । पुद्गला इति परमाणवः इति जैनैः परिभाषितम् ।

आत्मनः विशेषगुणः धर्मः इति **वैशेषिकाः** प्राहुः ।

**प्राभाकरास्तु मीमांसकैकदेशिनः, अपूर्वमेव** धर्मं वदन्ति । न पूर्वं जन्म अस्येति अपूर्वजन्मव्युत्पत्तिः । तद्धि अपूर्वं न यागादिकर्मणः पूर्वं जायते । कर्मनिष्पत्त्यनन्तरमेव तन्निष्पत्तेस्स्वीकारात् ।

एतत्सर्वमपि न युक्तमित्याह— ॥'प्रयोग इति'॥ पूर्वोक्तेषु सर्वेषु धर्मशब्दः लोके न प्रयुज्यते विधिना च तेषां न श्रेयस्साधनत्वं च नावगम्यते। अतस्तेषां न धर्मत्वं युज्यते। नापि प्रत्यक्षादि-गम्या श्रेयस्साधनता एतेषां, अतीन्द्रियत्वात्तस्याः, तस्मात्ते पूर्वोक्ताः न धर्मपदाभिधेया भवितुमर्हन्ति।

ननु अन्तःकरणवृत्तिः धर्मः इति पक्षः कुतो वा निराक्रियते? मीमांसकैर्भवद्भिरपि तस्य धर्मत्वस्वीकरणात्। यथा 'नेक्षेतोद्यन्त-मादित्य'मित्यादौ पर्युदासाश्रयणेन अनीक्षणादिसंकल्पस्यैव, पापक्षयोद्देशेन विहितत्वाभ्युपगमात्। संकल्पश्च मानसवृत्तिरेवेति, कथं अन्तःकरण वृत्तेर्धर्मत्वनिराकरणं घटते? यागोऽपि देवतोद्देशेन द्रव्यत्यागात्मकः सकल्प एव किल भवति। अतः तन्निराकरण नघटते? इति चेन्न।

संकल्पः न मानसः, आत्मकर्तृकः स इति उपनिषत्सु प्रसिद्धेः यथा—

" य आत्मा अपहतपाप्मा विजरो विमृत्युः विशोको विजिघित्सः अपिपासः सत्यकामः सत्यसंकल्पः इति (छान्दोग्ये)

एवं स 'यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति श्रवणात्।

अस्मिन् वाक्ये संकल्पादेवास्येति कृद्योगलक्षणा कर्तरि षष्ठी, संक-ल्पस्यात्मकर्तृकतां स्पष्टयतीति न मनोवृत्तित्वं सङ्कल्पस्य (धर्मस्य) भवति। अतः सांख्यपक्षतौल्यं न सिद्धान्तस्येति तन्निराकरणं नायुक्तं भवेत्।

**बौद्धानां** समये सर्वस्यापि क्षणिकत्वाङ्गीकारात युगपद्भावस्यासंभवात् चित्तानां वास्यवासकभावः नैव घटते । अतश्चित्तवासना धर्मः इति तत्पक्षोऽप्यनुपपन्नः । **एतद्विस्तरस्तु निरालंबनवादादौ** भविता ।

**जैन**रीत्या पुद्गलाः पुण्याः धर्मः इत्यप्ययुक्तम् अणुत्वेनाभिमतेषु पुद्गलेषु धर्मशब्दप्रयोगादर्शनात्, तद्भिन्नत्वे तत्र **प्रमाणा**भावात, न स्वरूपसिद्धिः; का कथा तेषां धर्मत्वे ।

पुरुषगुणो धर्मः इति **वैशेषिक**पक्षे तावत् एवं विकल्पयामः— किं सः पुरुषगुणः नित्यः? उत, अनित्यः कार्यः? इति । **नाद्यः**— यागादिपुण्यकर्मानुष्ठानवैयर्थ्यात् । नापि **द्वितीयः**— अपूर्वाद्यन्यस्यात्मसमवायिनः गुणभेदस्य सुखादिवदनुपलंभात् । अपूर्वं तु न धर्मः इति पूर्वं सुनिरूपितमासीत ।

यदपि लक्षणमुक्तं धर्मस्य पुरुषगुणत्वेनाभिमतस्य '**कर्तृफलदायी आत्मगुणः संयोगजो दृष्टः कार्याविरोधी**' ति । इदमपि न युज्यते— अधर्मे ऽतिव्याप्तेः; तस्यापि कर्तृगतफलजनकत्वात; सुरापानादिकर्मसंबन्धजत्वात; नरकादिफलानुभवनाश्यत्वेन तद्विरोधित्वाच्च । एवं स्मृतिहेतुः यस्संस्कारः तत्रातिव्याप्तिग्रस्तत्वाच्चास्य । न हि संस्कारः धर्मः इति व्यवह्रियते ।

कर्तृफलदायित्वमपि, जातेष्ट्यादौ, अव्याप्तम् । पुत्रादिगतफलजनकत्वात तेषाम् । पुत्रादीनां तत्कर्तृत्वाभावाच्च । एवं श्राद्धे अकर्तृणां पित्रादीनामेव तृप्तिफलश्रवणाच्च । अतः वैशेषिकमतमप्ययुक्तमिति श्रेयस्साधनं धर्मः इति पक्ष एव ज्यायान् ।

---

अत्रेदं तत्त्वम्– वार्तिककारैः पूर्वं अत्रैव (१८१श्लो) वार्तिके-

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥

इत्यत्र पुरुषप्रीतिसाधनं धर्मः, इत्युक्तम । तत्र पुरुषपदेन (जीवः) यागकर्ता विवक्षितश्चेत्– तत्प्रीतिः या इच्छा, तत्साधनं धर्मः इति स्यात् ।

तत्रेयं शङ्का- न हि यागादिः पुरुषप्रीतेः साधनं भवितुमर्हति ; प्रीते (इच्छायाः) वस्तुपरतन्त्रत्वेन अन्यसाध्यत्वाभावात् । अतः प्रीतिविषयः यः स्वर्गादिः, तत्साधनं इत्येव वक्तव्यं स्यात् । तथा च (वार्तिके) लक्षणा स्यात् अतः पुरुषपदमत्र–

" स यस्मात् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मनः औषत् " । " स सर्वासु पूर्षु पुरिशयः "।

(बृ–6 अ)

इति श्रुत्यनुसारेण, तथा–

भगवानिति शब्दोयं तथा पुरुष इत्यपि ।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥ इति

(वि. पु.)

स्मृत्यनुसारेण च, परब्रह्मभूतं आदित्यमण्डलान्तर्वर्तिनं, परब्रह्मभूतं वासुदेवमभिधत्ते । तस्य प्रीतिः विहितैः कर्मभिर्जायते ; इति ।

न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।

---

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादिप्रमाणैरवगम्यते । अतः पुरुषपदवाच्यपरमात्मप्रीतिसाधनं यत्, तदेव धर्मः । तच्च वेदैरेवावगन्तव्यमिति चोदनालक्षणत्वमपि तस्येति सूत्रार्थः ॥

"श्रेयो हि पुरुषप्रीतिः" इति 'पुरुष'पदघटिततया वार्तिकं प्रणेतुः भट्टपादस्यायमेव मुख्याशयः; इति वरिष्ठैः पण्डितैः स्वीकर्तव्यम् । अन्यथा हि– "श्रेयो हि कर्तृसंप्रीतिः" इति वा 'श्रेयः प्रयोक्तृसंप्रीतिः' इति वा उक्तं स्यात् । अतः परमपुरुषपदवाच्यवासुदेवप्रीतिसाधनं धर्मः, तदप्रीतिसाधनं चाधर्मः, इति सिद्धम् । अन्तःकरणवृत्त्यादयश्च पूर्वोक्ताः न धर्मशब्दार्थाः । तेषां श्रेयस्साधनत्वस्य प्रत्यक्षादिभिरवगमात् । तथा चोदनागम्यत्वं तु यागादीनामेवेति स एव धर्मः । तदिदमुक्तं– 'न च साधनं पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः' इति

ननु अन्तःकरणवृत्त्यादीनां धर्मत्वाभावेऽपि अपूर्वस्य धर्मत्वं न त्यक्तुं शक्यते । यागस्य फलसाधनत्वं इति वदन्तोऽपि 'अपूर्वं कृत्वे'ति हि, व्याचक्षते, वेदवाक्यानि । अतश्च कथं अपूर्वं श्रेयस्साधनं न भवेत् ? कुतो वा न भवेत् स धर्मः ? इति ॥ १९६ ॥

एकदेशिनश्चाहुः– 'आरंभात् स्वर्गः कर्मणा चारंभः' इति । अत्र चारंभपदेन आरभ्यते इति व्युत्पत्त्या अपूर्वस्यैवाभिधानम् । अतः अपूर्वं धर्मः इत्येव न्याय्यमिति चेदाह– ॥ न च वस्त्वन्तरमिति ॥

ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥ १९७ ॥

श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।
प्रसज्येतास्य तादृप्ये व्यतिरेके त्वरूपता ॥ १९८ ॥

तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादेः अपूर्वं न ततः पृथक् ॥ १९९ ॥

शक्तयः सर्वभावानां भावशब्दैर्विशेषिताः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ २०० ॥

---

तद्धि धर्मत्वेन कल्प्यमानं अपूर्वं किंरूपम् ? फलयागाभ्यांभिन्नं वा कल्प्येत, तच्छक्तिर्वा । न तावत् भिन्नं, फलं प्रतिसाधनमिति कल्पनामर्हति । श्रुतस्य यागसाधनत्वस्य त्यागः, अश्रुतापूर्वसाधनत्वस्य च परिकल्पनमिति दोषस्यापत्तेः । नापि साध्यमिति कल्पनं घटते, अश्रुतस्यापूर्वसाध्यत्वस्य कल्पनाप्रसङ्गात् । अत एव च नाभयात्मकत्वम् असत्वापत्तेः । अतः शक्तिरूपत्वमेवाश्रयणीयम् ।

यागगता या फलोत्पादनानुकूला शक्तिः सा अपूर्वमिति । फलस्य वा स्वर्गादेः अंकुरावस्थादिः अपूर्वं इति वा । इदमपि न घटते— यागादिवाचकस्य धर्मशब्दस्य तच्छक्तिप्रतिपादकत्वस्याव्युत्पन्नत्वात् । न हि लोके घटादिशब्दाः घटादिनिष्टां जलनयनादिशक्तिं वदन्तीति दृष्टचरम् । अतः अपूर्वं न धर्म इति श्लोकचतुष्टयस्यापि पिण्डीभूतोऽर्थः ।

**पुरस्ताच्चोदनाशब्दः विधावेव व्यवस्थितः ।**
**न च तत् लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥**

---

अपूर्वस्य शक्तिरूपत्वाङ्गीकारे, तस्याः कारकरूपत्वाभावात् , न साधनत्वेन वा साध्यत्वेन वा स्वीकारः कर्तुं शक्यते । साध्य-साधनान्यतररूपत्वाभावे च निःस्वभावत्वात् अभावे एव हि पर्यवसानं स्यात् । तदिदमुक्तं व्यतिरेकत्वरूपेणेति । अपूर्वविषये वक्तव्यमन्यत् सर्वं अपूर्वाधिकरणे (२-१-२) भविष्यति व्यक्तम् ॥ १९७-२०० ॥

भाष्ये **चोदनालक्षणधर्म** शब्दयोः चोदनासूत्रघटकीभूतयोः व्याख्याना-नन्तरं, '**अर्थ**' शब्दः व्याख्यायते "**उभयमिह चोदनया लक्ष्यते ; अर्थोऽनर्थश्च । कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः । को-ऽनर्थः ? यः प्रत्यवायाय श्येनो, वज्रः, इषुः, इत्येवमादिः तत्र अनर्थो धर्मः उक्तो माभूदित्यर्थग्रहणम्**' इति भाष्येण । एतद्भाष्य-संदर्भस्य चायमर्थः– '**चोदनालक्षणोऽर्थो धर्मः**' इति सूत्रे यदि अर्थशब्दो न स्यात् तर्हि, चोदना (वेद) गम्यस्य श्येनादेरनर्थस्यापि धर्मत्वं स्यात् । प्रत्यवायकरत्वादनर्थे श्येनादावपि उक्तलक्षणस्य चोदनागम्यत्वस्य पुष्कलत्वात् । अतः तद्वारणार्थं '**अर्थः**' इति पदं सूत्रे इति । तत्रायमाक्षेपः इत्याह– ॥ **पुरस्ताच्चोदनाशब्दः इति** ॥

धर्मलक्षणकथनपरं हीदं सूत्रं संमतम् । अत्र अंशद्वयं लक्ष्यते– चोदनालक्षणत्वं, अर्थत्वं चेति धर्मप्रत्युदाहरणत्वेनाभिमते अधर्मे एकांश-वैकल्येऽपि तस्य व्यावृत्तिर्भवति । न अंशद्वयवैकल्यस्यावश्यकता । तथा-

**चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।**
**निषेधाभावतस्तस्य कथं ब्रूयादनर्थताम् । २०२ ॥**

---

चात्र अर्थपदव्यावर्त्यत्वेनाभिमतश्येनादेः **चोदनालक्षणपदेनैव** व्यावृत्तौ **अर्थपदं** व्यर्थमेव । कथं ? पूर्वं एतत्सूत्रारंभभाष्ये **'भाष्यकारैः 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः'** इति विधायकवाक्यस्यैव चोदना-पदवाच्यत्वं इत्युक्तम् । तेन चानर्थहेतोः हिंसायाः निषेध्यायाः चोदना-लक्षणत्वाभावात् चोदनालक्षणपदेनैव व्यावर्तितत्वात्, **अर्थपदं** निरर्थकमेव। एवं च हिंसायाः '**न हिंस्यात्**' इति निषेधविषयभूतायाः अनर्थरू-पायाः प्रवर्तकवाक्या (चोदना) प्रतिपाद्यायाः (नार्थप्रत्युदाहरणत्वं) इति अर्थ पदाभावेऽपि व्यावृत्तिसिद्धौ, भाष्यमिदं कथं घटताम् ?॥ २०२ ॥

**'भाष्यकारैः कोऽनर्थः'** ? इति पृष्ट्वा– **'श्येनः, वज्रः, इषुः'** इत्येवमादिः इति यदुक्तं तन्न घटते; इति चाक्षेपं प्रदर्शयति– ॥ **चोदना लक्षणो यश्चेति ॥**

निषेधविषयस्य हिंसादेः किलानर्थत्वं निषेधबलादवगम्यते । श्येना-देस्तु तदभावात् चोदनालक्षणत्वात् कथं अनर्थतां ब्रवीति भाष्यकारः ?

अथवा पूर्वोक्तवार्तिकद्वयस्यार्थः एवं वा भवेत्– धर्मस्य प्रत्युदा-हरणं अधर्मः, श्येनादिरिति कृत्वा तद्व्यावृत्तिसिद्ध्यर्थं 'अर्थ'पदमिति हि भाष्यकारः प्राह– तत्र वदामः– श्येनपदं लक्षणाया फलपरं फलं च श्येनस्य हिंसा । सा च निषिद्धा । तस्मादनर्थत्वमिति यद्यभिप्रायः तदा श्येनपदलक्षणफलभूतायाः हिंसायाः चोदनालक्षणत्वाभावात् उभाभ्या-

**यद्यपि स्यात् विधिस्पृष्टे निषेधो नैव तादृशः ।**
**विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥**

---

मप्यङ्गाभ्यां ( चोदनालक्षणत्वार्थत्व ) विकलत्वान्न प्रत्युदाहरणता भवेत् ; एकाङ्गवैकल्ये सत्येव प्रत्युदाहरणत्वं, नान्यथेति, शास्त्रज्ञैः स्वीकारात् ।

यदि श्येनादिपदं यागमेव बोधयेत् , तदापि न प्रत्युदाहरणता ; श्येनादेः, श्येनयागस्वरूपस्य निषेधविषयत्वाभावेन अनर्थत्वाभावादर्थत्वं, चोदनालक्षणत्वं चेत्युभयभयाङ्गयुक्तत्वात् एकाङ्गवैकल्यासंभवात् न तत्प्रयोज्य-प्रत्युदाहरणतेति ॥ २०२ ॥

ननु श्येनादीनां निषेधाभावात् विहितत्वाच्च अनर्थत्वाभावः इति यदुक्तं तन्न घटते ; विधेयस्यापि श्येनादेः षोडशिग्रहणगृहमेधीयाज्यभागादि-वत् निषेधसंभवात् इति चेदाह– ॥ **यद्यपि स्यात् विधिस्पृष्टे इति** ॥

सामान्यतः विधिना अवरुद्धे निषेधशास्त्रं न प्रवर्तते ; यथा **अग्नी-षोमीय**हिंसायाम् **'न हिंस्यात्'** इति शास्त्रं ( निषेधात्मकम् ) यदि च क्वचित् विहितेऽपि निषेधः प्रवर्तते, तत्र षोडशिग्रहणादौ, तादृशः निषेधात् न हि निषेध्यस्य अनर्थत्वं विज्ञायते ; विध्यसहितनिषेधस्यैव निषेध्ये अनर्थतावगमकत्वात् । यथा षोडशिनि । आज्यभागषोडशिग्रहणादेः विहितत्वेनेष्टसाधनत्वावगते, तत्रैव निषेधेन तदभावा ( अनर्थत्व )वगमस्य कर्तुमशक्यत्वात् । तर्हि निषेधेन, निवृत्तिबोधः कथं– इति चेत् विकल्पबोधन-द्वारा एतदभावेऽपि क्रतुसाद्गुण्यसंपदनावगतिद्वारा निवृत्तिप्रयोजनकत्वो पपत्तेः ।

चोदनालक्षणं चोक्त्वा निषिद्धत्व द्विरुच्यते ।
श्येनादावुपदिष्टे हि हिंसा हीति न युज्यते ॥ २०४ ॥

हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।

---

तथा च प्रकृते यदि श्येनो निषिध्येत तथाऽपि नानार्थत्वं प्रतिपाद्यते ; अभिचारविधिविहितत्वात तस्या रागादिलक्षणाया एव प्रवृत्तेः निषेधशास्त्रमनर्थत्वं बोधयेत् ; न तु विधिलक्षणायाः **अयमर्थः, दशमाध्याये** स्फुटो भविष्यति ॥

अत्र भाष्ये श्येनादीना अनर्थत्वं, प्रश्नपूर्वं साध्यते– **कथं पुनरसावनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धेति** । एवं पूर्वं **उभयमिह चोदनया लक्ष्यते ?** इति च **भाष्यकारैः** श्येनादीनां चोदनालक्षणत्वं चोक्तम् । एतद्दूषणायोपक्रमते– ॥ **चोदनालक्षणं चोक्त्वा इति** ॥

**'उभयमिह चोदनया लक्ष्यते'** इति भाष्येण हि अनर्थत्वेनाभिमते श्येनादौ स्पष्टमुक्तं चोदनालक्षणत्वरूपंविहितत्वम् **'सा च प्रतिषिद्धे'**ति भाष्ये विहितस्य हिंसात्वं निषिद्धत्वं चोच्यते । इदं परस्परं व्याहतभाषितं भवति । उपदिष्टलक्षणस्य श्येनादेः हिंसात्वासंभवात् ' **हिंसे**'त्यस्य भाष्यस्य पूर्वापरविरुद्धत्वात् , ( उपक्रमोपसंहारविरोधात् ॥ २०४ ॥

उपदिष्टस्य श्येनादेः हिंसात्वकथनमयुक्तमित्येतद्विवृणोति– । **हिंसा हि फलमेतेषामिति** ॥

सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत् पृथक् ॥ २०५ ॥

उपदेशाभिधानं न नाविधेयेऽवकल्प्यते ।
श्येनादेरविधाने च कस्यान्यस्य विधेयता ॥ २०६ ॥

---

श्येनादेः साधनस्य कर्मणः न हिंसात्वं, अपि तु तत्फलस्यैव हिंसात्वम् । सा च हिंसा यागस्वरूपात् सुतरां भिन्ना मरणप्रयोजकव्यापाररूपा । सैव अभिचारशब्देनाप्यभिधीयते । प्राणवियोगानुकूलव्यापारः इति यावत् । तथा च श्येनादियागः, हिंसाफलकः न हिंसापदबोध्यः न हि हिंसासाधनस्य खड्गकुठारादेः लोके हिंसापदवाच्यता दृश्यते ; खड्गादिजन्यस्य छेदनादेरेव हिंसात्वात् । एवमेव श्येनादिरपि फलभूतहिंसायाः भिन्न असि(खड्ग) प्रभृतिवत् हिंसापदवाच्यो न भवतीति, भाष्ये श्येनादेरेव हिंसात्वरूपत्वकथनमयुक्तमेव भवेत् ॥ २०५ ॥

अथेदानीं "**कथं पुनरनर्थः कर्तव्यतयोपदिश्यते**" इति प्रचोदनपूर्वकं, **नैव श्येनादयः कर्तव्यतया विज्ञायन्ते । यो हि हिंसितुमिच्छेत् , तस्यायमभ्युपायः इति हि तेषामुपदेशः**" इति उत्तरप्रतिपादकतया प्रवृत्ते भाष्ये अनुपपत्तिं प्रदर्शयति– ॥ **उपदेशाभिधानं नेति** ॥

'**नैव श्येनादयः कर्तव्यतया विज्ञायन्ते**' इति विधेयत्वं श्येनादेर्निराकृत्य, '**इति हि तेषामुपदेशः**' इति भाष्येण, **तेषामिति** तच्छब्देन परामृष्टानां श्येनादीनां '**उपदेशः**' इति विधानप्रतिपादनं हि अत्यन्तव्याहतमेव हि भवति । उपदेशशब्दस्य विधिपर्यायत्वात् ॥

**सर्वत्रावस्थितो न्यायः भावनांशद्वये विधिः ।**
**स बाध्येतेह ये चामी ज्योतिष्टोमादयो मताः ॥ २०७॥**

**धर्मत्वेन न तेऽपि स्युः हिंसासाधनका हि ते ।**
**न चाविधीयमानस्य फलवत्साधनाङ्गता ॥ २०८ ॥**

---

अपि च श्येनादेर्धात्वर्थस्याविधाने, दूषणमाह - ॥ **श्येनादेरिति** ॥ "**श्येनेनाभिचरन् यजेत**" इत्यादिवाक्येषु धात्वर्थो यागः श्येन-नामकः, अभिचाररूपं फलं चेत्यंशद्वयं प्रतिपाद्यते । तत्र **लिप्सासूत्रोक्त-न्यायेन** रागत एव फलस्य प्राप्तत्वेनाविधेयत्वात् न फलांशे विधे-र्व्यापारः भवति । यदि च धात्वर्थोऽपि यागो न विधेयः इति '**नैव श्येनादयः कर्तव्यतया विज्ञायन्ते**' इति भाष्येणोच्येत ; कस्य तर्हि विधेयता ? यदि न कस्यापि ; तर्हि वाक्यवैयर्थ्यमेव स्यात् । अतः भाष्यकारः श्येनादेरविधेयतां यदाह तदनुपपन्नमेवेत्या-क्षेपः ॥ २०६ ॥

न केवलं श्येनादेरविधेयत्वे विधिवाक्यवैयर्थ्यापत्तिरूपदूषणमात्रम्, किं तर्हि स्थितसिद्धान्तहानिरपीत्याह— ॥ **सर्वत्रावस्थितो न्याय इति** ॥

सर्वत्र विधिवाक्येषु "**दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत**" '**ज्योतिष्टोमेन स्वर्गकामो यजेत**' इत्यादौ आख्यतोपात्तायां अंशत्र योपेतायां अर्थीभावनायां यदंशद्वयं साधनेतिकर्तव्यतारूपं तत्र विधान इति स्वीक्रियते ; सिद्धान्ते फलांशस्य परं रागतः प्राप्तत्वात् न विधे-यतेत्यपि । यदि च भाष्यकारैः '**नैव श्येनादयः कर्तव्या विज्ञा-**

साधनत्वेन विहितं न चाविहितमुच्यते ।

---

यन्ते ’ इति भावनासाधनांशस्य श्येनादेर्विधेयता निराक्रियेत ; तदा सिद्धान्तविरोधः स्यादेवेति स्वसिद्धान्तः बाध्येतेति ॥

न केवलमेतावत्– अपि तु भाष्यकारस्य स्वोक्तिविरोधश्च भवति । भाष्ये हि ‘ **को अर्थः ? निःश्रेयमाय यो ज्योतिष्टोमादिः** ’ इति ज्योतिष्टोमादेः धर्मत्व प्रतिपादितम् । तच्चायुक्तमिति भवेत् । तेऽपि हि ज्योतिष्टोमादयः साधनत्वेनोपदिश्यमानत्वात् अविधेयाः स्युः । एव, ते ज्योतिष्टोमादयः स्वेतिकर्तव्यतारूपेण अग्नीषोमादिपशुहिंसायुक्ताः इति स्वरूपेण तेषां हिंसात्वाभावेऽपि अङ्गद्वारा हिंसा युक्ता एवेति अनर्था भवेयुः । तथा चाधर्मा ज्योतिष्टोमादयो भवन्तीति भाष्यकाराणां तेषां धर्मत्वप्रतिपादनं व्याहतं स्यादिति । तदिदमाह– ‘ **येचामीति** ’ संदर्भेण ।

**अपि च**– श्येनादीनां तुल्यन्यायतया तदितिकर्तव्यतारूपाङ्गानां च विधेयत्वास्वीकारे, धात्वर्थस्य ( साधनस्य ) फलाङ्गत्व, अङ्गजातस्य च साधनाङ्गत्वमिति च यत् सिद्धान्तिसंमतं तदपि न सिध्येत् । ‘ **नचाविहितमङ्गं भवती**’ति सिद्धान्तात् ; अङ्गलक्षणस्य विहितत्वघटितत्वात् । तदिदं स्पष्टयति– ॥ **नचाविधीयमानस्ये**’त्यादिना ॥ यथा प्रयाजाद्यङ्गसमुदायस्य अविधीयमानत्वे फलवत्साधनाङ्गत्वं न भवति, तथा ज्योतिष्टोमादेरप्यविधीयमानत्वे फलाङ्गत्वं न भवेदिति । फलभावनां प्रति करणत्वं न स्यात् ; इति २०८ ॥

**साध्यत्वेन विधानं तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥**

**तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते ।**

---

ननु भाष्ये '**नैव श्येनादयः कर्तव्या विज्ञायन्ते**' इत्यभिधाने 'तव्य' प्रत्ययप्रयोगात् तस्य च साध्यत्वाभिधायकत्वात् साध्यतया विधानमेव श्येनादीनां वार्यते; साधनतया विधानं तु स्वीकुर्मः । तथा च साधनत्वेन विहिता अपि श्येनादयः साध्यत्वेन न विधीयन्ते इति कृत्वा अविधेया इत्युच्यते । तथा च न पूर्वोक्तदोषप्रसङ्ग इति चेत ; आह- ॥ **साधनत्वेन विहितमिति** ॥

**साध्यत्वेन साधनत्वेन** वा विधिविषयो यो भवेत् , स तर्हि नानर्थो भवेत् ; विधिविषयस्य सर्वस्यापि अर्थत्वव्याप्तत्वात् । अतः विधिविषये, साध्यत्वेन, साधनत्वेनेति विभागाश्रयणमकिञ्चित्करमेव; यत् साधनत्वेन विहितं तत् अविहितमिति न कस्यापि शास्त्रज्ञस्य संमतम् । इदं चान्वारुह्यैवोक्तम् ।

**वस्तुतस्तु** यत् यत् विधीयते , तत्सर्वं साधनत्वेनैव विधीयते ; न तु साध्यतया; क्वचिदपि साध्यांशस्य विधानादृष्टेः ; साध्यांशस्य कर्मत्वरूपत्वेन कर्मणश्च इच्छाविषयत्वेन प्राप्तत्वात् विधानासंभवात् । अतः साध्यत्वेन विधानमिति वचः लोकवेदविरुद्धमेव भवति । याग दान-तप-उपवासादेरिष्टं प्रति साधनत्वेनैव विधानात् ॥ २०९ ॥

एवं महता प्रबन्धेनाक्षिप्तं भाष्यं समादधाति- ॥ **तेनैवमर्थशब्दस्येति** ॥

प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥

सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ।
प्रवर्तकगृहीतेस्तु स्यादुदाहरणार्थता ॥ २११ ॥

तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।

---

यस्मात् कारणात् यथाश्रुतस्य भाष्यार्थस्यानुपपत्तिः पूर्वोक्ता, तस्मादेव हेतोः, **एवं**, वक्ष्यमाणप्रकारेण **अर्थशब्दस्य** इह सूत्रे **प्रयोजनमुच्यते** ; न यथाश्रुतेन । कः प्रकारः सः ? इति चेदाह— ॥ **प्रवृत्तौ वेति** ॥ यश्शब्दः ( वाक्यं ) प्रवृत्तिविषयिणीं निवृत्तिविषयिणीं वा धियं जनयेत् , तद्वाक्य चोदनेति भाष्यकाराणां **हृदयं** ( अभिप्रायः ) भवति । प्रवर्तिका निवर्तिका च चोदना भवति । तत्र निषेधलक्षणचोदनानां धर्मावबोधकत्वं नाभिमतमिति ज्ञापयितुमर्थशब्दः आवश्यको भवति ।

नन्वेवं '**चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः**' इति एतत्सूत्रप्रारंभे, प्रवर्तकवाक्यस्यैव चोदनात्वेन भाष्यकाराभिधानं घटतां **कथं** ? इति चेदाह— ॥ **प्रवर्तकगृहीतेस्तु इति** ॥ प्रवर्तकवाक्यग्रहणं पूर्वं, प्रदर्शनार्थं, यथा प्रवर्तकवाक्यं, चोदनेति तथा निवर्तकमपि, इति दृष्टान्तकथनमिति ॥ २११ ॥

एवमुदाहरणार्थतया तद्भाष्यमिति व्याख्याने कारणमाह— ॥ **तात्पर्ये ह्यर्थशब्दस्येति** ॥

**अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥**

**धर्मे प्रमाणभूताया: तद्वा लक्षणमुक्तवान् ।**

---

व्याख्यातारो हि मूलं पूर्वापरासङ्गतिपरिहारेण व्याख्यान्ति चेत् - तदा सा व्याख्या समीचीना मूलपरिरक्षका च भवेत् । अन्यथा मूलविरोधे कथं सा व्याख्याख्यां लभेत ।

यदि च **'चोदनेति क्रियायाः प्रवर्तकं वचनं'** इति पूर्वभाष्यं यथाश्रुतं स्वीकृत्य प्रवर्तकैकपरत्वमवेति चोदनायाः स्वीक्रियेत, तर्हि, इदानीं क्रियमाणा व्याख्या चोदनालक्षणस्यानर्थस्य निवृत्त्यर्थः सूत्रे अर्थशब्दः इतीदृशी नोपपद्यते ; अनर्थानामप्रवर्तकवाक्यलक्षितानामचोदनालक्षणत्वात् । ततश्चार्थशब्दवैयर्थ्यमित्यपि दूषणमापद्येत । अतः उभयसाधारणं चोदनापदमित्येव भाष्यकाराणामभिप्रायः इति ।

अथवा अर्थपदावच्छिन्नस्य चोदनाशब्दस्य प्रवर्तकवाक्यामात्रवाचित्वमिति पूर्वभाष्येऽभ्यधायि । अर्थश्च प्रवर्तकवाक्यलक्षण एवेति पूर्वापरविरोधः न इति **भाष्यकाराशयः** । तदिदमाह– ॥ **अर्थग्रहणलभ्यं वेति** ॥

प्रवर्तकवाक्यस्यैव चोदनापदेनाभिधानं अर्थपदसामर्थ्यलभ्यमिति भाष्ये उक्तमिति ॥ २१२ ॥

एवं वा व्याख्या भवितुमर्हति । यथा **'यथा चोदनालक्षणोऽर्थो धर्मः'** इति सूत्रयन् सूत्रकारः धर्मे प्रमाणं प्रवर्तकमेव वाक्य-

एवं सति विधिभ्यः स्यात् विधेयार्थावधारणम् । २१३ ॥

निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।
तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥

---

मित्यभिप्रैति । तच्चोदनालक्षणमेवेति **भाष्यकारेण** प्रदर्शितमिति । तदेतदाह— ॥ **धर्मे प्रमाणभूतायाः इति** ॥

**धर्मे** प्रमाणत्वेनाभिमतायाः चोदनायाः, **तत्** लक्षणं, '**प्रवर्तक-वाक्यं चोदना**' इत्येवंविधं '**चोदनेति क्रियायाः प्रवर्तकं वचन माहुः**' इति भाष्येण भाष्यकारः उवाचेति ।

यदि च **चोदनेत्यब्रवीच्चात्र वेदमात्रविवक्षये**'ति पूर्वोक्त-वार्तिकानुरोधेन ( चो-सू-७ ) चोदनाशब्दः विधिनिषेधोभयमपि बोधय-तीति विभाव्यते । तर्हि कथं निर्वाहः इत्यत्राह— ॥ **एवं सति विधिभ्य इति** ॥

विधिनिषेधयोरुभयोरपि चोदनाशब्दः बोधकः इत्यत्र न कोऽपि क्लेशः, विधिरूपचोदनया विधेयस्य यागादेः अर्थत्वमवगम्यते । निषेध-रूपचोदनया च निषेध्यकलञ्जभक्षणादेरधर्मत्वं इति उभयोरुभाभ्यामर्थान-र्थत्वावगमः भवति । तथा च '**उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति**' भाष्यमञ्जसैवोपपन्न भवति । सूत्रस्यार्थशब्दस्य प्रयो-जनं स्पष्टयति ॥ **तेनेति** ॥ धर्माधर्मयोरुभयोश्चोदनालक्षणत्वे तुल्ये सति निषेध्यस्य सुरापानादेर्धर्मत्वं व्यावर्तयितु सूत्रे सूत्रकारः अर्थशब्दं प्राह ।

निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम् ।
तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः ॥ २१५ ॥

यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।

---

तेषां च सुरापानादीनां चोदनालक्षणत्वे सत्यपि अनर्थरूपत्वात् अर्थ-पदेन तद्व्यावृत्तिः इति सार्थकोऽर्थशब्दः इति ॥ २१३-२१४ ॥

ननु उपादानाय यथा जिज्ञासितव्यो भवति धर्मः तद्वत् अधर्मोऽपि हानार्थं जिज्ञासितव्य एवेति तत्स्वरूपं कुतो नोच्यते इति चेदाह ॥ **निषेध्यानामिति** ॥

अधर्मशब्दघटकीभूतस्य नञः "**तदन्यतद्विरुद्धतदभावेषु नञ्**" इति प्रमाणानुसारेण विरुद्धार्थबोधकत्वेन धर्मविपरीतः अधर्मः इति अर्थस्य धर्मत्वे सूत्रिते तद्विपरीतस्यानर्थस्य निषेध्यस्यानर्थत्वं अर्थादेव सिध्यतीति न पृथक् सूत्रयामास **जैमिनिः** ।

एवं भाष्यकाराभिप्रायं समुपवर्ण्य संप्रति तदनुसारेण '**उभयमिह चोनये**'ति भाष्यं योजयति- ॥ **तस्मादुभयमित्यत्रेति** ॥

यस्मात् भाष्यकाराभिप्रायः पूर्वोक्तरीत्यैव वर्णयितव्यः इति सिद्धं **तस्मादेव** हेतोः '**उभयमिहे**'ति भाष्ये, यागादेर्विधेयस्य , ब्रह्महत्यादे-र्निषेध्यस्य च **निदर्शनं** कार्यमित्यर्थः । तत्र विधेयस्य इष्टसाधनत्वादर्थत्वम् । निषेध्यस्य चानिष्टफलत्वादनर्थत्वमिति । तेन च निषेध्यानर्थानां धर्मत्वं वारायितुं अर्थग्रहणमावश्यकमिति भावः ।

श्येनादीनां निषेध्यत्वादिष्टस्यापि च साधनात् ॥ २१६ ॥

उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।
प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत् करिष्यते ॥२१७॥

---

ननु यदि निषिद्धब्रह्महत्यादिवर्गस्यैव अनर्थत्वेन निदर्शनं कार्यमित्युच्येत, भाष्ये कथं तर्हि 'श्येनो, वज्रः, इषुः' इति श्येनादीनां अनर्थत्वेन निर्देशः क्रियते। ते किल श्येनादयः विधेयाः न प्रतिषेध्या, एवं इष्टसाधनभूताश्च। यदत्यन्तमिष्टं शत्रुवधात्मकं फलं तत्साधनानि किल ते श्येनादयः, अतश्चानर्थत्वाभावात् भाष्यमनुपपन्नमेवेति चेत् आह - ॥ श्येनादीनामिति ॥

यदुक्तं श्येनादीनां विहितत्वात् इष्टतमशत्रुवधात्मकफलसाधनत्वाच्च नानर्थत्वमिति, तत् सत्यमेव। तथाऽपि भाष्यकाराणामयमाशयः— यत् श्येनादीनां यत् फलं हिंसात्मकं तदनर्थात्मकं, तदनुबन्धित्वाच्च श्येनादेरप्यनर्थत्वं श्येनादावुपचरित, कारणे कार्योपचारात्। दृष्टं चैतत् 'देवो वर्षति तण्डुलान्' इत्यादिस्थले लोकेऽपि। तदिदं फलद्वारेण श्येनादीनामनर्थत्वं वर्ण्यते; इति वार्तिककारः प्राह। एवमुपचाराश्रयणे कारणमाह - ॥ प्रतिषिद्धाहीत्यादिना ॥

भाष्यकारो हि उत्तरत्र 'हिंसा हि सा, सा च प्रतिषिद्धा' इत्यादिग्रन्थे स्पष्टं हिंसायाः प्रतिषिद्धत्वं वदति। नहीदं भाष्यं श्येनादिस्वरूपाभिप्राये कथंचिदपि घटते; तेषां श्येनादीनां विहितत्वेन प्रतिषिद्धत्वकथनायोगात्। तत्फलं तु हिंसात्मकं, 'न हिंस्यात्'

हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥ २१८ ॥

विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।

---

इत्यादिना निषिद्धमेवेति फलाभिप्रायेणैव श्येनाद्युपन्यासः भाष्ये ॥२१५-२१७ ॥

अत्रापरमपि भाष्यं लिङ्गदर्शनमित्याह- ॥हिंसा हीति च यच्चापीति॥

**कथं पुनरसावनर्थः ?** इति भाष्यकारैः परिचोद्य '**हिंसा हिसा**' इत्युक्तम् । ततश्चैतदवगम्यते श्येनादिस्वरूपमात्रं न विवक्षितमनर्थत्वेनेति । तथा अन्ते '**श्येनेनाभिचरन् यजेतेति हि समामनन्ति । न अभिचारितव्यमिति**' इति वक्ष्यति । अस्मिन् भाष्ये '**नाभिचारितव्यं**' इति श्येनफलभूतस्याभिचारस्यैव निषेधं प्रदर्शयन् **भाष्यकार**ः तस्यैव चानर्थत्व स्फुटीकरोति । तथाचेद सिद्ध **को अनर्थः?** **इति** पूर्वोक्तभाष्यसंदर्भः न स्वरूपाभिप्रायेण प्रवृत्तः इति । तथासति **सर्वो**ऽयं उत्तरग्रन्थसंदर्भः न सङ्गच्छेत । तदिदमाह- ॥ **श्येनादीनां स्वरूपे तु इत्यादिना** ॥ २१८ ॥

कथं न संगच्छेतेत्येतत् स्पष्टयति- ॥ **विहितत्वान्निषेधस्येति** ॥

'**प्रतिषिद्धाही**'ति भाष्यस्य, श्येनादिस्वरूपपरत्वे असङ्गतत्वमनेन वार्तिकेणोच्यते ।

यदा तु चोदनाशब्दः विधावेव व्यवस्थितः । २१९ ॥

तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।

---

अयमाशयः— श्येनादयः तत्तद्विधायकवाक्येन हिंसात्मकफल-साधनत्वेन विहिताः इति तत्तद्विधिवाक्ये परामृष्टे स्पष्टम् । तत्र च श्येनादौ विधेये न निषेधोऽवकाशं लभते । तेषु श्येनादिषु निषेधस्य प्रवृत्तिः दुर्लभा (न भवति) । कुतः ? विहितत्वादिति तत्र हेतुः विवियते । पूर्वोक्तमेवेदं स्पष्टार्थमुक्तम् ।

यदि पूर्वोक्तस्य 'कोऽनर्थः ? यः प्रत्यवायाय श्येनादिः इति भाष्यस्य श्येनादिकर्मणः अनर्थत्वप्रतिज्ञापरत्वं इतीष्येत, तर्हि निषिद्धत्वानुपपत्तिः ; यागस्वरूपे हिंसात्वानुपपत्तिश्च ।'नाभिचरितव्यं इति वदता भाष्यकारेण श्येन-फलाभिचारस्य अविधेयत्वेन निषेधविषयतेति कथ्यते । तथा च फलमेव अनर्थहेतुत्वेनोक्तमिति स्पष्टीकृतम् । श्येनादिस्वरूपे तस्याप्यस-ङ्गतत्वमेवेति भाष्यम् ।

एतावता प्रबन्धेन निषेधस्यापि विधिवत् चोदनापदबोध्यत्वात् 'उभयमिह चोदनया लक्ष्यते' इति भाष्ये विधेयनिषेध्याभिप्रायमित्यु-क्तम् । इदानीं प्रवर्तिका चोदना इति पक्षे स्वीकृतेऽपि भाष्यं व्याख्यातुं शक्यते इत्याह— ॥ यदा तु चोदनाशब्द इति ॥

यदि चोदनाशब्दः "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः इति भाष्यानुसारेण विधिवाक्यमात्रपरः इति निश्चीयेत, तदा उभय-मिहे'ति भाष्यस्यायमर्थः । चोदनया विधायिकया उभयं लक्ष्यते ;

साध्यसाधनसंबन्धे विधिना प्रतिपादिते ॥ २२० ॥

लक्ष्यमाणत्वमुभयोः द्विविधं च फलं क्रतोः ।

---

किं तदुभयमिति चेत्— साध्यं, साधनं चेति । फलं नत्साधन चेत्यर्थः ।

ननु साध्यस्य फलस्य कथं चोदनया लक्ष्यत्वम् ? तद्धि रागप्राप्त मिति किल सिद्धान्तः ? इति चेदाह— ॥ साध्यसाधनसंबन्धेविधिनेति ॥

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"त्यादिचोदनावाक्यैः, स्वर्ग-यागयोः संबन्धस्य साध्यसाधनरूपस्य प्रतिपादनद्वारा हि प्रवर्तनं क्रियते ? तत्र स्वर्गयागादिगतसाध्यसाधनसंबन्धः विधिप्रमाणक एव भवति । अयं चार्थः उत्तरत्र औत्पत्तिकसूत्रे स्फुटीभविष्यति । तत्र यथा यागादि-रूपधात्वर्थस्य साधनभावः चोदनालक्षणः इति स्वीक्रियते ; तद्वत् स्वर्गादि-फलस्यापि यागादिसाध्यत्वं विधिगम्यमेवेति स्वीकरणीयमेव भवेत् ; स्वर्गादिनिष्ठयागादिसाध्यत्वस्य प्रमाणान्तरेण (चोदनाभिन्नेन) अनवगमात् । तेन रूपेण साध्यस्यापि चोदनागम्यत्वमक्षतमेवेति ।

यद्येवं उभयत्वं साध्यसाधनभावेनेति व्याख्येत, तर्हि 'अर्थो-अनर्थश्च" इति भाष्यस्य कथं संङ्गतिः ? चोदनालक्ष्यस्यानर्थत्वासंभ-वात् इति चेदाह— ॥ द्विविधं चेति ॥ फलं साधनं चेत्युभयं चोदनालक्ष्यमिति यदुक्तं तत्र साधनत्वेन संमतक्रतूनां फलं अर्था-नर्थात्मकत्वेन द्विविधं वर्तते ; इति न भाष्यानुपपत्तिः ।

स्वर्गादि प्राप्यते तत्र प्रतिषेधानतिक्रमात ॥ २२१ ॥

अतिक्रमेण हिंसादि शास्त्रान्तरनिरीक्षया ।

---

कथं अर्थानर्थरूपफलद्वैविध्यनिर्णयः भविष्यति ? सर्वेषामपि फलानां पूर्वोक्तरीत्या चोदनागम्यत्वस्य समत्वात् ; इति शङ्कायां निर्णायकमाह— ॥ **स्वर्गादि प्राप्यते तत्रेति** ॥

प्रतिषेधशास्त्रानतिलङ्घनेन यत् फलं भुज्यते, स अर्थः ; प्रतिषेधातिक्रमेण यदुपभुज्यते सोऽनर्थः ; इति नियामकस्वीकारेणादोषात् । **अयमर्थः** पूर्वोक्तरीत्या अर्थानर्थात्मकफलद्वैविध्ये, यत्स्वर्गापत्यादिफलं ज्योतिष्टोमादीनां तस्य निषेधकशास्त्राभावात् न तदनुभवे निषेधशास्त्रातिलंघनं, कलञ्जभक्षणब्रह्महत्यादिफलानुभव इव भवति ; अनिषिद्धत्वात् । अतः तदर्थरूपम् ।

श्येनादिफलं तु '**न हिंस्यात्**' इत्यादिनिषेधशास्त्रातिक्रमेणैवानुभूयते । अतस्तदनर्थात्मकम् । निषेधशास्त्रोल्लंघनेन नरकप्राप्तेरपरिहारात् । अतः निषेधशास्त्रसदसद्भावकारितः फलार्थानर्थविवेक इति सिद्धम् ।

एवं व्याख्यानस्वीकारे च वार्तिकानुरोधेन '**कोऽर्थः**' इत्यादिभाष्यस्य व्याख्या चैवं भवेत् - अर्थात्मकफलस्य यत् साधनं, ज्योतिष्टोमादिकर्म सोप्यर्थः, इति । अत्र निदानं, भाष्ये - '**काऽर्थः यो निःश्रेयसाय ज्योतिष्टोमादिः**' इति फलमप्यन्तर्भाव्य ज्योतिष्टोमादीनां अर्थत्वकथनमेव । तथा च सूत्रे 'अर्थ'पदप्रयोगः, अर्थरूपफलसाधक-

फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥

---

ज्योतिष्टोमादेर्धर्मत्वप्रतिपादनायेति ज्ञाप्यते। उक्तं च तस्यापि साधनं यत् तदर्थ एवाभिधीयते। वक्तुं तस्यैव धर्मत्वं उक्तमर्थविशेषणम्" इति। एवं 'कोनर्थः' इति च श्येनादिफलपरो लक्षणया श्येनादियागपरः। तथा च अर्थादधर्मत्वं तस्य सिद्ध्यति। अत एवोक्तम्-'श्येनो वज्रः, इषुः इत्येवमादिः' इति भाष्ये।

ननु श्येनादियागविधायकविधिबलेनासाद्यमानस्य फलं प्रतिषेधाति-क्रमेणावाप्यते इति कथं घटतेति चेदाह– ॥ शास्त्रान्तरेति ॥

यद्यपि श्येनचोदना (विधि) लक्षणमेवाभिचारादिफलम्; वाक्येन तदुद्देशेन यागविधानात्। यथाविधिर्विधेयं विषयीकरोति तथा उद्देश्यमपि विगाहते एव, 'क्वचित् विधीयते' इति विधिस्वरूपनिश्चयात्। परं तु शास्त्रान्तरं यत् 'न हिंस्यादि'ति निषेधरूपं तत्पर्यालोचने हिंसारूपस्य श्येनफलस्य प्रतिषिद्धत्वावगमात्। तदुलंघनं भवतीति हेतोरनर्थत्वं निश्चीयते। ततः श्येनादेरप्यनर्थत्वमेवेति।

ननु विधिस्पृष्टे प्रतिषेधस्यानवकाशात् विहितं अभिचारादिकं न निषेधशास्त्रमाक्रमितुमर्हति। यथा अग्नीषोमीयहिंसादिकम्। तथा च यदि चोदनालक्षणा हिंसा कथं निषेधादनर्थः? प्रतिषेधाप्रवृत्तेरेव प्रतिषेधातिलंघनमिति कथनमपि न युज्यते इति चाक्षिपन् परिहरति– ॥ फलांशे भावनायाश्चेति ॥

वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।
तेन सामान्यतः प्राप्तः विधिना न निवारितः ॥ २२३ ॥

फलांशोपनिपातिन्याः हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बोध्यते तत्र यद्यपि ॥ २२४ ॥

---

अंशत्रयोपेतां भावनां विधत्ते विधिः । तत्र भाव्यांशस्य फलस्य विधिर्न विधायकः ; किञ्चित् विधातुंफलमुद्दिश्यते ; इत्येतावन्मात्रेणैव चोदनालक्षणत्वं फलस्य, न तु फलमेव इतरभावनांशवद्विधीयते ; फलस्य रागत एव प्राप्तत्वात् । उत्तरत्र ' उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ' ( चो–सू–२६५ ) इति वक्ष्यमाणत्वात् । तथा वक्ष्यति च भाष्यकारोऽपि ' जानात्येवासौ मयैतत् कर्तव्यमिति । उपायं तु न वेदेति ' । अतः इच्छयैव प्रवृत्तत्वात् न साध्यांशे ( फलांशे ) विधिः प्रेरयति । जैमिनिरपि सूत्रकारः वक्ष्यति चतुर्थप्रथमे द्वितीये तस्य लिप्सार्थलक्षणेति । अतः पूर्वोक्ताक्षेपस्यावसरः कथमपि न भवति ।

यत एवायं सूत्रभाष्यानुसारी सिद्धान्तः फलस्य विधेयता न भवतीति तेन कारणेनैव ' न हिंस्यात् ' इति प्रतिषेधानिवारणं श्येनफले भवति ; इति तस्यानर्थत्वं निषेधः ज्ञापयति । तदिदमाह–॥ तेन सामान्यतः प्राप्त इति ॥

यस्मात् फलं न विधीयते इति सूत्रकारभाष्यकाराणां संमतः सिद्धान्तः ; तस्मादेव हेतोः हिंसानिषेधकं, ' न हिंस्यात् ' इति

श्येनस्वरूपं नानर्थः तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥

---

प्रतिषेधशास्त्रं श्येनफलत्वेनाभिमतायां हिंसायां ( अभिचारे ) प्रवर्तमानं, विधिना न बार्यते । फलस्य विहितत्वाभावेन तत्र निषेधशास्त्रस्य निरातंकप्रवृत्तेः संभवात् । तथा च तस्य फलस्यानर्थत्वं बोध्यते । एवं तस्य फलस्य निषेधेनानर्थत्वे ज्ञाप्यमानेऽपि स्वरूपेण श्येनः नानर्थः, तत्फलं परं हिंसा अनर्थः ; इति । ' उभयमिह चोदनया लक्ष्यते ' इत्यादिभाष्यस्य योजनाक्रमस्त्वेवं स्यात् । उभयं साधनं, साध्यं चेत्युभयं, चोदनया लक्ष्यते ( ज्ञाप्यते ) । तत्र यत् साध्यं तदपि उभयविधं, अर्थात्मकं, अनर्थात्मकं चेति । ' कोऽर्थः ? ' इति प्रश्नभाष्यस्थार्थशब्दः साधनलक्षणार्थः, अर्थात्मकसाध्यस्य ( फलस्य ) साधकमिति चार्थः । तत्र चोत्तरं यो ज्योतिष्टोमादिरिति ( कोऽनर्थः ) इति तु फलस्वरूपतात्पर्यकमेव । यः श्येनादिः फलमित्यर्थः । तत्रानर्थस्य हिंसादेः धर्मत्वनिराकरणपूर्वकं ज्योतिष्टोमादेरेव धर्मत्वं वक्तुं अर्थग्रहणम् । अनर्थात्मकफलसाधनस्य श्येनादेः न धर्मत्वं, न वा अधर्मत्वं चोक्तम् । अतो नासौ धर्म ; नापि स्वरूपेणाधर्मः इति सिद्धं भवति । अत एव चोत्तरत्र वार्तिके वक्ष्यति-

"अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मते"ति

( चो-सू-वा-.66 )

अत्रैव " कथं पुनरसावनर्थः कर्तव्यतया उपादिश्यते " इति चोद्यभाष्यमुपलभ्यते । नेदं युज्यते । पूर्वस्मिन् संदर्भे फलमेव किला-

भावनान्तर्गतत्वाद्वा मत्वानर्थत्वमाक्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥

---

नर्थत्वेनोपवर्णितम् । फलस्य चाविधेयत्वमित्येतत **लिप्सासूत्रादिसिद्धम्**। ततश्च नैव तत् कर्तव्यतोपदिश्यते; इति चेत्तस्याशयमाह— ॥ **परस्तू-भयमित्यादेः इति** ॥

आक्षेप्ता तावत्, पूर्वप्रदर्शितं साधनफलयोः विधेयाविधेय-निबन्धनभेदमजानन् **'उभयमिहेति'** पूर्वोक्तभाष्यस्य यथाश्रुतार्थं गृह्णन् उभयपदेन श्येनफलस्यापि विधेयतमाभिप्रयंश्चाचिक्षेप। अथवा, **त्र्यंशो पेतायाः भावनायाः विधेयत्व**मिति सिद्धान्तिना स्वीकारात् अन्यतमांश-फलस्यापि विधेयत्वमस्तीति जानन् वा आक्षिपति इति न दोषः ।

य कर्तव्यतयोपादिश्यते, कथं सोऽनर्थः ? इति भाष्यस्यार्थः । नन्वत्र यथाश्रुतभाष्यग्रन्थात् कर्तव्यतयोपदेशस्यैवाक्षेपः प्रतीयते । नानर्थत्वस्य, अतः नेयं व्याख्या युज्येते इति चेत्, न वेदे स्वतन्त्रे अपौरुषेये उपदेशपर्यनुयोगः न कर्तुं शक्यते। अतः उपदिश्यमानस्य कथमन-र्थत्वं इत्येव पर्यनुयोगार्थः स्वीकार्यः । अत एव च **वार्तिककारः 'अनर्थ-त्वमाक्षिपदि**त्याह ।

एवमाक्षेपे कृते परिहारभाष्यं **'नैव श्येनादयः कर्तव्यतया विज्ञायन्ते'** इति दृश्यते । इदं च भाष्यं यथाश्रुतं श्येनादीनामवि धेयताप्रतिपादनपरं प्रतीयते । तच्चायुक्तम् ; फलस्य विधेयत्वे चोदिते

**किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।**
**प्रश्नापकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥**

---

श्येनादेर्विधाननिराकरणस्यासङ्गतत्वात् । पूर्वं श्येनादेर्विधानस्य '**इति हि तेषामुपदेशः**' इति भाष्येण प्रतिपादनात् पूर्वापरविरोधश्चेत्याक्षेपे भाष्य विच्छिद्य व्याचष्टे— ॥ **नैवेत्येतावता चास्य इति** ॥

**अस्य** श्येनफलस्य हिंसारूपस्य **नैव** इत्येतावन्मात्रेण, विधेयत्व निराकरणं क्रियते । ततोऽवशिष्टभाष्येण, '**श्येनादयः कर्तव्यतया विज्ञायन्ते**' इत्यनेन, विधेयं किमित्यकाङ्क्षायां **श्येनादयः** विधीयन्ते, इत्युच्यते । तथा च श्येनादयः यागाः कर्तव्याः, न फलं हिंसेति भाष्यार्थ-स्वीकारात् न भाष्यानुपपत्तिः कापि संभवतीति ॥

'**कर्तव्य**' इति पदे विद्यमानः तव्यप्रत्ययः अर्थद्वये स्मर्यते- '**कर्मणि, साध्ये विधौ च**' । तदिदानीं '**नैवे**'ति विच्छिन्नेन भाष्येण, फलस्य कर्तव्यतायां प्रतिषिध्यमानायां साध्यत्वमपि प्रतिषिद्धं भवति ; इति भ्रमः भवितुमर्हति । तमपनेतुमाह— ॥ **प्रश्नापकरणे चात्रेति** ॥

प्रश्नश्च, अपाकरणं च प्रश्नापाकरणं, इति समाहारद्वन्द्वाश्रयणेन, प्रश्नग्रन्थे ( भाष्ये ) पठितः, **अपाकरणग्रन्थे** ( परिहारभाष्ये ) चानु-षक्तः योऽयं तव्यप्रत्ययः सः विधेयतार्थकः ; न साध्यत्वार्थकः इति ।

**अयमाशयः**— '**कथं पुनरनर्थः कर्तव्यतया उपदिश्यते**' इति **प्रश्नभाष्ये** ( **आक्षेपभाष्ये** ) 'कर्तव्य'पदे **विद्यमानतव्यप्रत्ययः** एवं

प्रयुक्तो न तु साध्येऽर्थे द्वयेऽप्यनुपयोगतः ।
अनर्थस्यापि साध्यत्वं अविधेयस्य हीष्यते । २२८॥

---

नैव इति आक्षेपपरिहारपरभाष्ये अनुपक्ते कर्तव्यतापदे विद्यमानतव्य-प्रत्ययश्च, फलस्य विधेयत्वरूपार्थक एव; न तु साध्यत्वार्थकः । तथा च फलस्य विधेयतैव प्रतिषिध्यते न साध्यता ।

यदि च श्येनफलसाध्यता निषिध्येत तर्हि श्येनभावनायाः परिपूर्तिरेव न स्यात् । तत्र च कारणं प्रदर्शयति– ॥द्वयेप्यनुपयोगतः इति॥ कथं पुनरनर्थः' इति 'पूर्वपक्षवादिना फलस्य विधेयस्यानर्थत्वं कथं ? इति अनर्थत्वाक्षेपः कृतः 'नैवे'ति भाष्येण । सिद्धान्तिना फलस्य, विधेयत्वनिरसनेन अनर्थत्वं साधितम् ।

यदि च 'कथंपुन'रिति पूर्वपक्षिणा साध्यत्वानुपपत्तिरुक्ता भवेत्, तर्हि सिद्धान्ती 'नैवेति' तन्निराकुर्यात् नैवं साध्यत्वस्य पूर्वपक्षे कश्चनोपयोगः । न च तन्निरासेन सिद्धान्ते ःकश्चन । अतः फलस्य विधिविषयत्वे निराकृते किं विधेयमिति विधिविषयप्रश्नापकरणार्थं, तव्य-प्रत्ययोऽत्र विधिविवक्षया प्रयुक्तः ; न तु साध्ये कर्मणि, इत्यपि भाव्यम् ।

साध्यत्वरूपार्थस्वीकारः अर्थत्वानर्थत्वोभयपक्षानुपयुक्तः इत्यर्थं स्पष्टयति– ॥ अनर्थस्यापि साध्यत्वमिति ॥

फलस्य अर्थत्वं पूर्वपक्षिणा आपादनीयं, यश्च स्वीकृतोऽर्थः अर्थत्वपक्ष-साधको भवेत् । स एव चाश्रयणीयः । न हि तव्यप्रत्ययस्य साध्यत्व

साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।
शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥

ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।

---

रूपार्थस्वीकारः तस्योपयुज्यते ; अर्थत्वस्य साध्यत्वमात्रसंबन्धित्वाभावात ; अनर्थात्मकसुरापानब्रह्महत्यादेरपि साध्यत्वात् । अतः पूर्वपक्षिणः विधेयत्वमेव त्वनर्थप्रतिभटत्वादुपयुज्यते ।

एवं सिद्धान्तेऽपि साध्यत्वनिराकरणं नोपयुज्यते ; असाध्यस्यापि गोदोहनादेः विधेयस्यार्थत्वदर्शनात् । अर्थत्वं हि फलस्य निराकरणीयं सिद्धान्तिना । तदनुगुणं च विधेयतानिराकरणमेव भवति ; न तु साध्यता-निराकरणमिति ।

एतावता प्रबन्धेन, अविधेयत्ववचनं श्येनाभिफलाभिप्रायम् ; न श्येनादिस्वरूपाभिप्रायमिति स्पष्टीकृतम । एवं व्याख्याने भाष्यकार-वचनमेव निदानमित्याह– ॥ **शतुश्च लक्षणार्थत्वमिति** ॥

भाष्ये चात्र, '**यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः ;**' इति । **श्येनेनाभिचरन् यजेतेति** हि समा-मनन्ति । **'नाभिचरितव्य'**मिति वदन् **भाष्यकारः**, **'अभिचरन्'** इति शतृप्रत्ययस्योत्पत्तिं लक्षणे दर्शयति । लक्षणं च यद्वृत्तायुक्तं सिद्ध-वदेवावगम्यते, न विधेयतया । अतः न हिंसा विधीयते । एवं '**इति हि तेषामुपदेशः**' इति कण्ठरवेण श्येनादीनां विधेयतां जगाद ; अन्यथा अविधेयस्य उपदेशासंभवात् । अतः पूर्वोक्तार्थस्वीकरणमेव युक्तम् ।

**विधित्वमादिशब्दात् स्यादिति कर्तव्यतास्वपि ॥ २३० ॥**
**तस्मात् फलांशे या हिंसाऽवैदिकी सा निषिध्यते ।**

---

'श्येनादयः' इत्यत्रादिशब्देन करणवत् इति कर्तव्यताया अपि विधिसंबन्धात् प्रतिषेध्यत्वाभावः इति भाष्यकाराशयः । तं स्पष्टयति- ॥ **विधित्वमादिशब्दादिति** ॥

धात्वर्थः, फलसाधनानि यागादयः विधीयन्ते । एवं, तदिति-कर्तव्यता हिंसा सत्यपि विधीयते । यथा ज्योतिष्टोमाङ्गभूतदैक्षपश्वादिका । तथा च फलांशस्था या हिंसा सा परं न विधीयते ; इति पर्य-वसितार्थः भवति । अत्र श्लोके '**विधित्वं**' इति पदेन विधिशक्ति-र्बोध्यते ॥ २०८–२३० ॥

एतावता महता प्रबन्धेनोपपादितमर्थमुपसंहरति ॥ **तस्मात् फलांशे येति** ॥

**यस्मादङ्गहिंसा** ( इतिकर्तव्यताहिंसा ) च विहिता एवं साधन-हिंसाऽपि । अतस्ता हिंसाः वैदिकहिंसात्वात् , ( वेदविहितत्वात् ) न निषिध्यन्ते । या तु फलांशस्था अवैदिकी हिंसा सा परं '**न हिंस्यादिति** शास्त्रेण **निषिध्यते** । अत एव चानर्थः इति च भाष्यम् ।

**इदमत्र विचारणीयम्-** अस्ति **सर्वस्वारो** नाम यज्ञः । च स ह '**शुनः करणस्तोमो अग्निष्टोमः, मरणकामो ह्येतेन यजेत ; यः काम-येत अनामयं स्वर्गमियामिति** ;

वाक्यविहितः । अत्र च फलांशोपनिपातिनी हिंसा, भवति । अतः सर्वस्वारहिंसा अनर्थो भवेत् । तच्च सिद्धान्तविरुद्धम् ; दशमद्वितीये (२३,) अधिकरणे तस्य अर्थत्वस्य साधनात् । न च, मरणं सर्वस्वारयज्ञ-

अंशद्वये तु या नाम तन्निषेधाभिधायिनाम् ॥ २३१ ॥

---

फलम् । न च मरणं हिंसा ; मरणानुकूलव्यपारस्यैव हिंसात्वात् । मरणं च न निषिद्धमिति वाच्यम् । असति भाग्यच्छेदे मरणानुपपत्तेः । अतः फलांशोपनिपातिनी सर्वस्वारहिंसा अनर्थ एव भवेदिति दशमाध्यायविरोधः कथं परिहार्यः ?

अत्र ब्रूमः— सर्वस्वारयज्ञे हि वितते तृतीयसवने आर्भवस्तोत्रकाले यजमानः ' ब्राह्मणाः परिसमापयत मे यज्ञ 'मिति प्रैषं ऋत्विग्भ्यः प्रदाय म्रियते । अतः इयं हिंसा विधिकोठिप्रविष्टेव भवति । ' अन्यत्र तीर्थेभ्यः ' इति तीर्थ (यज्ञ) बहिर्भूतैव हिंसा निषिद्धा भवति । सर्वस्वारयज्ञगता हिंसा तु तीर्थमध्यगता, विधिस्पृष्टा चातो नानर्थः । श्येनफलं हिंसा यागे निर्वृत्ते श्येनकर्तृशत्रुषु जायते कालान्तरे । अतस्सा तीर्थबहिर्भूता, अत एव च निषिद्धा अनर्थश्चेति ।

वस्तुतस्तु सर्वस्वारयज्ञस्य फलं न मरणम् 'यः कामयेत स्वर्गमिया'मिति स्वर्गस्यैव फलत्वेन प्रतिपादनात् । अतस्सापि हिंसा अंगभूतैवेति न विरोधप्रसक्तिः । एतद्विस्तारस्तु दशमे भाट्टदीपिकाव्याख्यायां अस्मदीयायां उज्वलायां द्रष्टव्यः ॥ प्रकृतमनुसरामः ।

संख्यास्तावत् साधनेतिकर्तव्यांशस्यापि हिंसात्वरूपनिषेध्यतावच्छेदकधर्मावच्छिन्नत्वात् , निषेधविषय एवेति वर्णयन्ति । तत्पक्षं निराकरोति— ॥ अंशद्वये तु या नामेति ॥

अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।

---

अंशद्वये साधने तेकर्तव्यतांशद्वये या हिंसा साऽपि प्रतिषिध्यते इति वादिनां आक्षेपस्य उत्तरं - **अविशेषेण यच्छास्त्रं, शिरोवदिति,** सूत्राभ्यामुत्तरं दातव्यमित्यर्थः । अत्र सूत्रखण्डोद्धरणं पूर्णसूत्रोपलक्षणार्थम् ।

**अयमाशयः**– ज्योतिष्टोमे श्रूयते, '**पदे जुहोति**' (क्रयसन्निधौ) '**वर्त्मनि जुहोति**' (हविर्धानाख्यशकटमार्गे) '**गार्हपत्ये पत्नीसंयाजान् जुहोति**' इति । **अनारभ्यविधिस्तु '**यदाहवनीये जुहोति**'** इति होमसामान्यस्याहवनीयाधारत्वविधायकः श्रूयते । अत्र चैवं संदेहः– पदवर्त्मादिहोमेषु, किं पदाहवनीयादीनां विकल्पः, उत बाध्यबाधकभावः इति ।

**तत्र पूर्वपक्षः**– पदादिना आहवनीयस्य बाधे आत्यन्तिकबाधापत्तेः पाक्षिकबाधगर्भविकल्प एव न्याय्यः । एकार्थयोस्तु समुच्चयः नैव शङ्कामप्यर्हति । अतो विकल्प एवेति ।

**अत्र सिद्धान्तः**- '**अविशेषेण यच्छास्त्र**' मित्यादिसूत्रेणोच्यते । सामान्यशास्त्रं '**यदाहवनीये जुहोती**'त्येतत् न विशेषविशिष्टे पदहोमादौ प्रवर्तते । अपि तु ततो दूरे वर्तते । कुतः ? इति चेत् विकल्पस्यान्याय्यत्वात् । अन्याय्यत्वं च, सामान्यशास्त्रस्य संदिग्धत्वात् लक्षणयैव विशेषशास्त्रेषु प्रवृत्तिमत्त्वम् । विशेषशास्त्रं तु निश्चितविषयं, अत एव च शीघ्रप्रवृत्तिकम् । अतः वैषम्यात् न विकल्पः संभवति । तस्मात् सामान्यशास्त्रं बाध्यत एवेति । वार्तिककारश्चायं उत्तरत्र संबन्धाक्षेपवादे वक्ष्यति–

कक्षान्तरितसामान्यविशेषेषु हि दुर्बलः ।
सामान्यवचनः शब्दः जायते लक्षणाबलात् ॥ इति ।

अतः आहवनीयस्य, विशेषरूपपदादिना बाध एवेति ।

एवं क्वचित् '**पुरुषशीर्षमुपदधाति**' इति विशेषवचनबलात् सामान्यतः शवशरीरस्पर्शस्य स्मृत्यादिना निषिद्धस्यापि अनुष्ठानं क्रियते एव ; सामान्यनिषेधस्य दुर्बलत्वात् । इदमेव **शिरोवदिति** निर्दिष्टम् । **इदमत्र वक्तव्यम्**— '**अंशद्वये तु या नामे**'त्यत्र साधनेतिकर्तव्यतांशतां गता हिंसेति यत् निर्दिष्टं, तत्र का नाम साधनगत हिंसा ? श्येनादयः इति तु नैव वक्तुं शक्यते ; तेषां हिंसात्वभावस्य सपद्येव साधितत्वात् । सत्यम् । प्रधानपशुयागानां वायव्यादीनां यागादीनां स्वीकारेणादोषात् ; प्रधानपशुहिंसायाः तत्र सत्त्वात् ।

यदिदं भाष्ये श्येनादीनामनर्थत्वेनोदाहरणं, दात नाततवतायिभिन्नविषये द्रष्टव्यम् । आततायिविषये अभिचारकर्मणः दोषाभावस्मरणात् । '**षट्स्वभिचरन् न पतेत्**' इति **बौधायनाः** पठन्ति । एवमन्यत्राप्युक्तम् ।

नाततायिवधे दोषो हन्तुर्भवति कश्चन । इति ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ इति च ।

आततायिनश्च '**अग्निदो गरदश्चैव**' इत्यादिप्रमाणैर्बोधिताः द्रष्टव्याः ।

निषेधेनानवष्टब्धे विषये नह्यनर्थता ॥ २३२ ॥
प्रत्यक्षादेरशक्यत्वात् कल्प्यते, निष्प्रमाणिका ।

न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥ २३३ ॥

बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते ।

---

ननु साधनेतिकर्तव्यतांशगतायाः हिंसायाः निषेधकशास्त्राभावेऽपि अनर्थत्वं कुतो न स्यात् ? इति चेदाह– ॥ **निषेधेनानवष्टब्धे** इति ॥

निषेधसत्त्वादेव निषेध्यानर्थत्वं ज्ञायते, नान्यथा, प्रत्यक्षादिप्रमाणस्य तत्राप्रसरात् ; निष्प्रमाणिकल्पनायाश्चायुक्तत्वात् ।

प्रत्यक्षादिप्रमाणानां अनर्थत्वसाधने सामर्थ्याभावात् निषेध एव चानर्थत्वसाधने प्रमाणम् । अप्रतिषिद्धस्य चानर्थत्वसाधनं प्रमाणरहितमेवेति भावः ।

कुतः प्रत्यक्षादिप्रमाणानां सामर्थ्याभावः इत्याक्षेपे समाधानमाह– ॥ **न हि हिंसाद्यनुष्ठाने** ॥

यथा त्रिवृत्पानविरेकयोः, यथा वा भोजनतृप्त्योः साध्यसाधनभावः प्रत्यक्षेण दृश्यते लोके, तद्वत् हिंसाप्रत्यवाययोः साध्यसाधनभावः न प्रत्यक्षेण दृश्यते ॥ २३१-२३३ ॥

ननु दोषदर्शनाभावेऽपि बाह्यहिंसावत् हिंसात्वाक्रान्तत्वेन लौकिकहिंसावदेव वैदिक्यपि हिंसा अनिष्टसाधनं इति विचिकित्सा जायेत

हिंस्यमानस्य दुःखित्वं दृश्यते यत्र तावता ॥ २३४ ॥

कर्तुर्दुःखानुमानं स्यात् तदानीं तद्विपर्ययः ।

---

एव । ततश्च अनर्थत्वं तस्या अपि अनुमास्यामहे इति चेत् आह– ॥ बाह्येऽपीति ॥

बाह्य ( लौकिक ) हिंसायाः अनिष्टसाधनत्वज्ञानं निषेधशास्त्रादेव हि जायते । तादृशं च अनिष्टसाधनताविचिकित्सासाधनं वैदिकहिंसायां नास्ति । अङ्गहिंसाया वा, प्रधानहिंसायाः वा विहितत्त्वेन निषेधशास्त्राप्रसरात्तत्रेति न दोषः ।

अथ प्रत्यक्षेण हिंस्यमानस्य हिंसाकरणवेलायां दुःखमुपलभ्यते । तस्मात् हिंसाकर्तुः कालांतरे दुःखं भवेदित्यनुमास्यामहे । क्रियानुरूपमेव कर्तृणां फलमित्यस्यानुभवसिद्धत्वादिति शङ्कायामाह– ॥ हिंस्यमानस्य दुःखित्वमिति ॥

यदुक्तं हिंसाविषये दुःखानुभवदर्शनेन हिंसाकर्तुरपि दुखं भवेदिति । तन्न ; तावन्मात्रेण हिंसाकर्तुः दुःखभाक्त्वानुमानासंभवात् । अनुमानाङ्गत्वेन व्याप्तिलिङ्गदर्शनादीनां आवश्यकत्वेन तदभावे अनुमानानुदयात् ; चिकित्सकैः क्रियमाणया हिंसया तेषु कालान्तरे दुःखानुपलम्भात । अत एव व्याप्त्याद्यभावः । न केवलमेतावत् सत्प्रतिसाधनत्वं चानुमानस्येत्याह– ॥ तदानीं तद्विपर्ययः इति ॥

प्रत्यक्षेण हि लोके हिंसाकर्तुः स्फुटं संतोष एव चोपलभ्यते । अतः भवता यदनुमानं प्रयुज्यते – हिंसाकर्तुः कालान्तरीयदुखकारणं, हिंसा-

विषयेऽस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् । २३५ ॥
हिंसा क्रियाविशेषत्वात् सूते शास्त्रोक्तदानवत् ।

य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥

---

त्वात् हिंस्यमानगतदुःखजनकत्वात् इति । तत्प्रतिद्वन्द्वित्वेन, हिंसा, कालान्तरेऽपि सुखकरी, हिंसात्वात्, हिंसाकर्तृगतसुखजनकत्वाद्वा इति प्रतिप्रयोगसंभवात् ।

शास्त्रोक्तहिंसाया अपि दुःखजनकत्वमेवेति वादिनां **सांख्यादीनां** प्रयोगस्य दूषणार्थं तत्प्रयोगमनुवदति— ॥ **विषयेऽस्याः फलमिति** ॥

लोके दानादिक्रियाः स्वविषये यादृशफलजनकाः, तथैव कर्तरि कालान्तरे तादृश एव फलस्य जनकत्वेन दृष्टा इति सिद्धम् । दानं संप्रदाने विषये सुखं (संतोषम्) जनयतीति हि प्रत्यक्षमुपलभ्यते । तच्च दानं कालान्तरे दातुः परां प्रीतिं साधयतीति च शास्त्रादेवागम्यते । एवं च तदुदाहरणेन हिंसाया अपि क्रियारूपत्वेन, सा स्वविषये हिंस्यमाने यादृक् दुःखात्मकं फलं जनयति तादृगेव तत्कर्तरि जनयेत्; इति का हानिः वैदिकहिंसायाः अनर्थत्वसाधने ? तथा चैवं प्रयोगः— वैदिकहिंसा, विषयफलतुल्यफलसाधनं, क्रियाविशेषत्वात्, शास्त्रोक्तदानवत् इति ।

एवं परोक्तप्रयोगं दूषणेनापाकरोति— ॥ **य एवमाह तस्यापीति** ॥

सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।
विरुद्धता च यादृग्धि दानैस्तादृक् फलं भवेत् ॥ २३७ ॥

विधिगम्यफलावाप्तिरदुःखात्मकता तथा ।

---

पूर्वोक्तपराभितानुमाने प्रथमतस्तावत् हेतोरनैकान्तत्वं दोषं निरूपयति । भवदीयानुमाने क्रियाविशेषत्वं हि हेतुः । स च, विषयफलतुल्यफलकत्वाभावेन ( साध्याभाववत्वेन ) विपक्षे गुरुदारगमनक्रियादौ वर्तते । अतः व्यभिचारः हेतोः । न हि गुरुदारगमनादीनां क्रियाणां विषयानुरूपफलदायित्वं, तासां क्रियाणां विषये, गुर्वङ्गनादौ तादात्विकप्रीतिजनकत्वात् । कालान्तरे घोरतमनरकप्राप्त्यात्मकदुःखजनकत्वाच्च । एवं सुरापानादौ क्रियाविशेषे, विषयभूतसुरादौ, च न तत्र सुखस्य दुःखस्य वा संभवोऽपि भवति अतः तत्रापि व्यभिचारः द्रष्टव्यः ।

एवं परोक्तहेतोः दूषणान्तरं विरुद्धत्वं चेति निरूपयति— ॥ विरुद्धता च यादृग्धीति ॥

भवदुक्तक्रियाविशेषत्वरूपहेतोः, विरुद्धत्वं दूषणम् । कथमिति चेत् सर्वत्रानुमानस्थले हेतुः दृष्टान्तानुसारेण साध्यस्य गमको भवति । तथा च, भवदुक्तदृष्टान्तः शास्त्रोक्तदानक्रिया, सा यादृशं फलं जनयेत् हिंसायामपि तादृगेव फलं संभवति इत्यङ्गीकारे एव दृष्टान्तोपपत्तिः प्रयोगसिद्धिश्च । तथा च, दानस्य दृष्टान्तत्वेनाभिमतस्य विधिगम्यफलप्राप्तिहेतुत्वमवगतम् । तद्व्याप्तिबलेन च विधिगम्यफलहेतुत्वं प्रकृतहेतुः पक्षे हिंसायां साधयेत् । विधिगम्यफलत्वं च चानर्थस्य, किंतु अर्थस्यैवेति हिंसाया अपि अर्थत्वमेव स्यात् ; नानर्थत्वम् । तथा

न च या संप्रदानस्य प्रीतिः तादृक् फलं भवेत् ॥ २३८ ॥
दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रसज्यते ।

संप्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥

---

च भवत्सिषाधयिषितानर्थफलत्वविपरीतार्थफलत्वसाधनात् भवत्प्रयुक्तो हेतु-विरुद्धः इति सिद्ध्यति ; इति ।

एतावता हेतोः दूषणद्वयदानानन्तरं इदानीं दृष्टान्तदोषं च प्रदर्शयति- ॥ न च या सम्प्रदानस्येति ॥

भवता विषयानुरूपफलदायित्वं साध्यते । विषयश्च पूर्वं भवदुपपादितरीत्या दाने संप्रदानं विषयः, दानेन च संप्रदाने ब्राह्मणादौ या प्रीतिः (फलं) जायते ; तदनुरूपमेव फलं दानकर्तरि जायते ; इति नैव वक्तु शक्यम् । संप्रदानगतप्रीत्यपेक्षया अत्यन्तं विशिष्टतमस्यैव फलस्य दातरि दानेन जननात् । गवादेर्गृहीतुः या प्रीतिः अल्पा जायते ; दातुस्तु सपात्रे दानकरणेन, 'संवत्सरोपसंमितानि तानि वत्सराणि स्वर्गो भवति । समद्विगुणसहस्रानन्तानि फलान्यब्राह्मणश्रोत्रियवेदपारगेभ्यः इति महाफलावाप्तेरवगमात् साध्यवैकल्यं दृष्टान्तस्येति ।

अपि च सपक्षे व्याप्तिग्रहणवेलायां, येनैव साध्येन हेतोर्व्याप्तिग्रहो भवति, हेतुना तेन तदेव साध्यं पक्षेऽपि साधयितव्यम् नान्यत् ; व्याप्तेस्तेन साकमग्रहणात् इति मर्यादा शास्त्रज्ञानां वर्तते । इह च तदभावात् न भवदीयः पक्षसिद्धिरित्याह ॥ संप्रदानं च दाने ते इति ॥

वैषम्यं संप्रदाने तु, पक्षे त्वेतद्विरुद्धता ।
प्रीयते संप्रदानं हि देवतेति स्थितं श्रुतौ ॥ २४० ॥

---

विषयतुल्यफलं ददातीति वदतस्तत्र विषयशब्दः दृष्टान्ते दाने संप्रदानं वदतीत्येवाभिप्रेतम् ; पक्षे ( हिंसायां ) च विषयशब्दः कर्म ( हिंस्यमानं ) वदतीति च । न चैतत् संभवति– वैषम्यात् ; व्याप्ति. संभवाभावात् ; एकस्मिन उभयपरत्वस्य विरुद्धत्वाच्च ।

यदि च वैरूप्यदोषपरिहारार्थं, वैदिकहिंसारूपपक्षे, दानरूप. सपक्षे च, विषयशब्दः संप्रदानस्यैव वाचकः इतीष्येत, तर्हि हेतुः सिषाधयिषितविरुद्धार्थसाधकत्वात् विरुद्धरूपदुष्टहेतुरिति चापद्येत ।

तदेव विवृणोति– ॥ प्रीयते सम्प्रदानं हीति ॥

पशुयागो हि अग्नीषोमीयदेवताकः ; सा च देवता यागेन प्रीयते इति, 'यज देवपूजायां' इति धातुपाठात् अवगम्यते । नैतावन्मात्रम् । किं तर्हि 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्यादिश्रुतिवाक्यैरप्यवगम्यते। भट्टपादश्चायं वार्तिककारः ग्रहैकत्वाधिकरणे वक्ष्यति 'इज्यते वारिणा नित्यं स्व कं ब्रह्मेति चोदितः' इत्यादि । अतः, विषयपदेन उभयत्र संप्रदानग्रहणे प्रीतिरूपफलजनकत्वमेवेति स्यात् नानर्थफलजनकत्वमिति । तच्च भवत्सिषाधयिषितसाध्यविरुद्धमिति विरुद्धः पक्षो भवेत् ।

केचित्त्वत्र वार्तिके 'स्थितं तवे'ति पाठकल्पनां कृत्वा, अस्माकं ( मीमांसकानां ) मते देवतायाः विग्रहाभावेन प्रीत्यभावेऽपि तव

दृष्टान्ते कर्म दाने चेत् तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात् परपीडादिवर्णनात् ॥ २४१ ॥

---

(सांख्य)रीत्या दूषणमुच्यते, इति व्याचख्युः । इदं च न युज्यते—वार्तिकतद्व्याख्यान्यायसुधादिविरोधात् । सांख्यो हि श्रौतहिंसामेव हि पक्षीकृत्य तत्रानर्थतां साधयति । तत्र श्रुतिविरोधोद्भावनमेव न्याय्यम् । अतः 'प्रीयते संप्रदाने हि देवतेति स्थितं श्रुतौ' इति प्राचीनपाठ एवादर्तव्यः । देवताधिकरणसूत्राणां यथा देवताविग्रहादिमत्त्वे स्वीकृते न विरोधः ; तथा अत्रैव आरंभपद्यव्याख्याने अस्माभिः स्पष्टीकृतमेव । आस्तामयम् । प्रकृतमनुसरामः ॥ २३९–२४० ॥

ननु विषयशब्दार्थवैषम्यपरिहाराय उभयत्रापि ( हिंसायां– दाने च ) विषयशब्दः कर्मवाचीत्येव स्वीकुर्मः इति शङ्कायामाह– ॥दृष्टान्ते कर्म दाने चेदिति ॥

पक्षभूतहिंसायामिव दृष्टान्ते दानेऽपि यत् कर्म तदेव विषयशब्दार्थः इति चेत्– इत्याशङ्का तत्र दूषणमाह– ॥ तस्येति ॥ दानकर्मत्वेनाभिमतगवादौ कस्यापि फलस्यादर्शनेन साध्यवैकल्यं दृष्टान्ते इति दूषणमापतति ।

सांख्योक्तानुमानस्य हेत्वन्तरेण विरुद्धाव्यभिचारत्वं चेति निरूपयति ॥ जपहोमादिदृष्टान्तादिति ॥

जपादयश्च क्रियाविशेषाः विधिविषयाश्च । ताश्च क्रियाः नैव परपीडायाः परप्रीतेर्वा हेतवो भवन्तीति च प्रमाणैरवगम्यते । विहि

**चोदितत्त्वस्य हेतुत्वात् विरुद्धाव्यभिचारिता ॥**

**विहितप्रतिषिद्धत्वे मुक्त्वान्यन्न च कारणम् ॥ २४२ ॥**

**धर्माधर्मावबोधस्य तेनायुक्ताऽनुमानगीः ।**

**अनुग्रहाच्च धर्मत्वं पीडातश्चाप्यधर्मताम् ॥ २४३ ॥**

---

तत्त्वात्तु ते अर्थरूपाः भवन्ति । एवं च दृष्टान्तत्वेन ता एव स्वीकृत्य, विहितहिंसायां अर्थत्वं साधयामः ।

तथाचैवं प्रयोगः– दैक्षादिषशुहिंसा अर्थः, विहितत्वात् , जपादिवत् इति । अत्र विषयानुरूपफलप्रदत्वं नैव प्रसिध्यति । विषये जप्ये मन्त्रे कस्यापि फलस्यादर्शनात् । अन्यस्मिन् पीडानुग्रहौ तु नात्र स्तः । एतदवगमयितुमेव **वार्तिके– 'परपीडादिवर्जनादिति'** जगाद ।

शास्त्रैकप्रमाणकयोर्धर्माधर्मयोः अनुमानप्रवर्तनं न घटत इति स्पष्टयति– **॥ विहितप्रतिषिद्धत्वे इति ॥**

विहितत्वं धर्मज्ञाने कारणं ; निषिद्धत्वं चाधर्मबोधं प्रति कारणम् । एतत् विना, नान्यत् धर्माधर्मबोधकारणं संभवति । तयोरलौकिकत्वेन प्रत्यक्षाद्यविषयत्वात् । अतः अत्र अनुमानगीः (वचनं) नैव घटते ।

विषयानुरूपफलवादिना सांख्येन भवता आत्मनो वा परस्य वा पीडाप्रीतिहेतुकं धर्मत्वधर्मत्वेति स्वीकृतं भवति । एवं चेत्– गाय-

यदतो जपसीध्वादिपानादौ नोभयं भवेत ।

क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥

भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ।

---

ग्यादिमन्त्रजपे धर्मत्वेनाभिमते, धर्मत्वं नैव स्यात् ; अनुग्रहाभावात् । एवं सुरापाने चाधर्मत्वमपि न स्यात्, परपीडाभावात् । तथा शास्त्र-विरोधः अपरिहार्यः आपतेत । तदेतदाह— ॥ **अनुग्रहाच्च धर्मत्वमिति** ॥

तथा च भवदुक्तधर्माधर्मलक्षणयोरव्याप्तिः इत्यसूचि ।

नैतावन्मात्रमपि तु अतिव्याप्तिमपि धर्मलक्षणस्येति, प्रदर्शयति— ॥ **क्रोशता हृदयेनापीति** ॥

विषये प्रीतिजनकस्य (अनुग्रहजनकस्य) कर्मणः धर्मत्वमिति चेदिष्येत, गुरुपत्नीगमनं (संबन्धं) कुर्वतो महापातितस्य पुरुषस्य धार्मिकत्वं स्यात् । संबन्धकरणवेलायां विषये गुरुपत्न्यां महासंतोषजनकत्वेन गुरुपत्नीगमनस्य महद्धर्मत्वापत्तेरपरिहार्यत्वात । महानयं धर्मः इति सूचयितुं भूयानित्युक्तम् ।

यद्यपि गुरुपत्नीगमनकर्तुः ससाध्वसस्य (भीतस्य) हृदयं क्रोशति ( शब्दायति ) तथापि, विषये प्रीतिजनकत्वात् गुरुदारगमनस्य धर्मत्वमपरिहार्यम् । इदं अत्यन्तं शास्त्रविरुद्धम् ; महापातकेषु पञ्चसु गुरुदारगमनस्याप्यन्यतमत्वेन शास्त्रेषु परिगणनात् । न च हृदयक्रोशेनाधर्मत्वमप्यनुमीयेतेति वाच्यम् । विषयानुरूपं ( फलं ) क्रियाणां

**अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥ २४५ ॥**
**हृदयक्रोशनं कस्मात् दृष्टां पीडामपश्यतः ।**

**पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ॥ २४६ ॥**

---

इति भवदीयव्याप्तेर्भङ्गापत्तेः । ततश्च भवदुक्तो हेतुरनैकान्तिकः इति सिद्धम् । एवं विरुद्धार्थबोधकहेतुद्वयसमावेशात् धर्मत्वाधर्मत्वसंशयोऽपि च स्यात् ।

ननु कर्तुश्चित्तोद्वेगाजनकत्वे सति प्रीतिजनकत्वं धर्मत्वं इति परिष्कुर्मः, गुरुदारगमनस्य च पूर्वोक्तकर्मणः कर्तृगतोद्वेगजनकत्वान्न दोषः इति चेत्- ॥ **अनुमानप्रधानस्येति** ॥

अनुमानप्रमाणेनैव धर्मत्वाधर्मत्वे साधयतः, अत एव च निषेधशास्त्रापेक्षारहितस्य, भवतो मते गुरुदारादिनिषिद्धकर्मकरणे चित्तोद्वेगः केन कारणेन भविष्यति । अधर्माचरणेन हि चित्तोद्वेगो भविता । आनुमानिकत्वं धर्माधर्मयोरिति वदतो भवतश्च, विषयगतप्रीतिजनके तत एव च धर्मत्वेन भवतो वक्तव्ये नाधर्मत्वे किञ्चित् कारणमस्ति । शास्त्रमनुसृत्य हि तन्निश्चयः । उच्छास्त्रं प्रवर्तमानस्य चाहं अधर्ममाचरामीति चित्तोद्वेगो नैव जायते । प्रत्युत, गुरुदारगतपीडाद्यदर्शनेन महोपकारकरणेन च हृदयस्य प्रीतिरेव भवेत् । तदिदमाह- ॥ **दृष्टां पीडामपश्यतः इति** ॥

अथ यत् कर्म अनुष्ठितं सत् स्वस्य परस्य वा पीडाहेतुर्भवेत् तत् अधर्मः, इत्यस्मत्सम्मतम् । अत एव चात्महिंसाप्यधर्म एवेति

अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।

**एवमादावशास्त्रज्ञः म्लेच्छो नोद्विजते क्वचित् ॥ २४७ ॥**
**तस्य नाधर्मयोगः स्यात् पूर्वोक्ता यदि कल्पना ।**

---

सरन्ति । प्रकृते गुरुदारगमनादि यद्यपि परोपकारजनकं स्वस्य तु चित्तोद्वेगजनकत्वात् पीडाहेतुत्वेनाधर्म एवेति सिद्धम् । अधर्मत्वाच्च पीडोपपत्तिरिति वदाम इति चेन्– ॥ **पीडातश्चाप्यधर्मत्वमिति** ॥

शास्त्रापेक्षारहितस्य ते गुरुदारगमनादौ '**अधर्मोऽयं**' इति ज्ञानोत्पत्तिहेत्वभावात्, कथं जायते पीडा ? अधर्मत्वज्ञानेनेति चेत् तत्र दूषणामुक्तं, निमित्ताभावः इति । पीडैव अधर्मत्वनिमित्तमिति मावोचः ; अन्योन्याश्रयदोषापत्तेः, पीडायाः अधर्मत्वस्य मूलान्तरसंभवात्, चित्तोद्वेगरूपात्मपीडावशादधर्मत्वं, अधर्मत्वाच्च सोतिपरस्पराश्रयत्वापत्तेः । शास्त्रपरवशानामस्माकं तु शास्त्रादेव हि धर्माधर्मत्वनिश्चयः इति स्वीकारान्न कोऽपि दोषः इति निरवद्यम् ।

धर्माधर्मयोश्शास्त्रानधीनसिद्धिरिति वदतां दोषान्तरमाह– ॥ **एवमादावशास्त्रज्ञ इति** ॥

**एवमादौ** गुरुदारगमनादिरूपशास्त्रविरुद्धकर्मणि, यो म्लेच्छादिः शास्त्रज्ञानशून्यः, सः न चित्तोद्वेगं प्राप्नोति । तस्य तत्करणे नाधर्मोत्पत्तिः स्यात् । अतः न पूर्वोक्ता कल्पना युज्यते । अत्र म्लेच्छः इत्युपलक्षणमशास्त्रज्ञस्य सर्वस्यापि । शास्त्रज्ञानं हि निषिद्धकर्मकरणे उद्वेगहेतुः, यस्य तदभावः, तस्योद्वेगरूपपीडायास्संभवाभावात, तेषां तत्करणेऽपि

**तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥**
**धर्माधर्मार्थिभिर्नित्य मृग्यौ विधिनिषेधकौ ।**

**क्वचिदस्याः निषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता ॥ २४९ ॥**
**प्रत्यवायनिमित्तत्वे विधिना नापगच्छति ।**

---

अधर्मयोगो न स्यात् । न चेष्टापत्तिः ; गुरुदारगमनादिपातकानां सर्वैः परिहरणीयत्वेनैव शास्त्रोपदेशात् ।

अतः धर्माधर्मज्ञानापेक्षावद्भिः विधिनिषेधरूपशास्त्राण्येव पुरस्कार्याणीति निगमयति– ॥ **तस्मादनुग्रहं पीडामिति** ॥

यस्मात् अनुग्रहपीडाहेतुत्वं धर्मत्वाधर्मत्वरूपमिति वर्णने पूर्वोक्तदोषापरिहारः, तस्मात् , नानुग्रहो धर्मत्वं प्रति कारणं अधर्मत्वे वा पीडा न हेतुः ।

**एवं**, पीडाभावः धर्मत्वं, अनुग्रहाभावश्चाधर्मत्वं, **इत्यपि** न साधु भवति ; व्यभिचारादिदोषसहस्रग्रस्तत्वात् । अतः धर्माधर्मज्ञानलिप्सुभिः, तज्ज्ञानहेतुभूतविधिनिषधात्मकशास्त्रमेव चानुसरणीयमिति सिद्धम् ।

एवमनुमानेन धर्माधर्मनिर्णये वर्णितो दोषः, तत्परिहर्तुकामः, माभूदनुमानेनाग्नीषोमीयहिंसादेः अधर्मत्वसिद्धिः, शास्त्रादेव तु वैदिक्या अपि हिंसायाः अधर्मत्वं साधयामः ; इति **केचित्** प्रत्यवतिष्ठन्ते– ॥ **क्वचिदस्या निषिद्धत्वादिति** ॥

शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥

विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।
तदेव चेदं कर्मेति शास्त्रमेवानुधावता ॥ २५१ ॥

हिंसादीनामधर्मत्वं कथ्यते नानुमानतः ।

---

अस्याः हिंसायाः निषेधशास्त्रेण 'न हिंस्या'दित्यादिना ब्राह्मणहिंसादिषु प्रत्यवायजनकत्वशक्तिरवगता वर्तते। हिंसात्वं च निषेध्यतावच्छेदकं, तदवच्छिन्ना च सर्वा अपि हिंसा तीर्थातीर्थगता (लौकिकवैदिकी च) प्रत्यवायजनकतावच्छेदकं च हिंसात्वमित्यवगतं यदि शास्त्रेण निषेधात्मकेन, तर्हि वैदिकी या हिंसा, तस्या अपि प्रत्यवायजनकतावच्छेदकहिंसात्वावच्छिन्नत्वेन कथं अनिष्ट (नरक) हेतुत्वं वार्यते?

न च विधिबलात् निषेधशास्त्रावगतानिष्टसाधनत्वशक्तेर्नाशः भवतीति वक्तुं शक्यते। विधिप्रतिषेधशास्त्रे विधेयप्रतिषेध्ययोः इष्टानिष्टशक्तिज्ञापके एव भवतः न पुनः कारके। न शास्त्राणां शक्त्यावापोद्वापने व्यापारः इति यावत्। तथा च सर्वास्वपि हिंसासु तदेवेदं हिंसाकामेति प्रत्यभिज्ञायमानत्वात् हिंसायाः 'न हिंस्यात् सर्वा भूतानि' इति निषेधेन हिंसासामान्ये या अनिष्टसाधनत्वशक्तिरवगता सा न विहितहिंसायामपि प्रतिहन्यते। विहितहिंसाया अपि हिंसात्वानतिरेकात्। अतः शास्त्रानुसारेणैव वैदिकहिंसाया अपि अनिष्टसाधनत्वं (अधर्मत्वं) साधयामः। विधिरपि अग्नीषोमीयहिंसादेः, न पूर्वप्रमितानिष्टसाधनताशक्तिं प्रतिबध्नीयात्।

एवं ये निपुणं प्राहुः तैरप्येतत् परीक्ष्यताम् ॥ २५२ ॥
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।

वैश्यस्तोमेन वा किं स्यात् विप्रराजन्ययोः फलम् ॥ २५३ ॥
पञ्चम्यामिष्टिकरणात् मध्याह्ने चाग्निहोत्रतः ।

---

तथा च विधिबलात् किंचिदिष्टमनुभूय पश्चान्निषेधशास्त्रावगत-मनिष्टफलमप्यनुभवतु तत्कर्तेति । अतः वैदिकहिंसादीनां नानुमानादधर्मत्वं अपि तु शास्त्रादेवेत । **वार्तिके** क्वचित् बाह्यहिंसायां, इत्यर्थः निषिद्धत्वात् प्रत्यवायहेतुत्वे या शक्तिर्बोधिता, सा न विधानात् अपगच्छति, ( नश्यति ) इत्यन्वयः ।

एवमाक्षेपे कृते परोक्तार्थस्यातिप्रसङ्गापादनेन दूषणमाह– ॥ **एवं ये निपुणं प्राहुः इति** ॥

पूर्वोक्तरीत्या केवलं युक्तिनिपुणा **एवं ये प्राहुः तैरेतदपि परीक्ष्यं** विप्रकृतसुरापानस्य नरकोत्पादनशक्तिः **'ब्राह्मणो न सुरां पिबेत्' इति** निषेधबलादवगम्यते; सा शूद्रक्रियमाणसुरापानेऽपि कर्मैकत्वान्नापगच्छतीति सुरापाने शूद्रोऽपि नरकं यायात् । एवं वैश्यकर्तृकस्य वैश्यस्तोमस्य विहितत्वेन स्वर्गोत्पादनशक्तेः सत्वात् विप्रादिकृतवैश्यस्तोमेऽपि तस्याः आनपायात् , विप्रादिरपि स्वस्वकर्तकवैश्यस्तोमेन स्वर्गमवाप्नुयात् ?

एवं, दर्शपूर्णमासकर्मणः दर्शपूर्णमासकालविशिष्टस्य (विहितस्य) या स्वर्गोत्पादिका शक्तिः सा पञ्चम्यादितिथ्यंतरे करणेऽपि नापैतीति, तथा करणेऽपि फलं भवेत ?

**तस्मात् यत् यादृशं कर्म, यत्फलोत्पत्तिशक्तिकम् ॥ २५४ ॥
शास्त्रेण गम्यते तस्य तादृशस्यैव, तत्-फलम् ।**

---

एवं सायंप्रातःकालकरणीयाग्निहोत्रकर्मणः मध्याह्नकरणेनापि कर्मणः एकत्वेन फलप्राप्तिर्भविता ? इत्यादिकं आपतेत् । न चैतत् सर्वं इष्टमेवेति शक्यं वक्तुं; शास्त्रविरोधात् । अतः यथाशास्त्रमेव फलशक्तेरभ्युगमः कर्मस्वावश्यकः, न युक्त्या अन्यथाकरणं कार्यम् ।

तदेतदुपसंहरति– ॥ **तस्मद्यद्यादृशं कर्मेति** ॥

**यच्च कर्म यादृशं** ( यादृशविशेषविशिष्टं, सत्, यत्फलजनकमिति शास्त्रगावगतं, यथा, वैश्यस्तोमः, वैश्यकर्तृकत्व-विशेष विशिष्ट एव स्वर्गदः, सुरापानं च ब्राह्मणकर्तृकत्व-विशेष विशिष्टमेव नरकहेतुः, पूर्णमासादिकालादिरूपविशेषोपेतस्यैव दर्शपूर्णमासकर्मणः स्वर्गादिकारणत्वं, एवं प्रातःकालाद्युपेतस्यैवाग्निहोत्रस्य स्वसाध्यसाधनतेति ; तादृशविशेषाभावे न तत्फलावाप्तिर्भवति इति च स्वीकर्तव्यम् । स्वरूपैक्यं तु न कारणम् । अतः न पूर्वोक्ताक्षेपस्य कथमप्यवकाशः घटते ।

ननु पूर्वोक्तदूषणोपन्यासः विषमः ; तथा हि– वैश्यस्तोम-सुरापाननिषेधदर्शपूर्णमासाग्निहोत्रादीनां किञ्चिद्विशेषण (वैश्यकर्तृकत्वादि) विशिष्टतयैव फलसाधनत्वावगमात् न साङ्कर्यप्रसक्तिर्सम्भवति । प्रकृते तु न तथा– 'न हिंस्यादि'ति निषेधशास्त्रेण हिंसामात्रस्यानर्थफलकत्वबोधनात्, वैदिकहिंसाव्यतिरेकेणेति सङ्कोचः नैव कर्तुं शक्यते । हिंसास्वरूपं च अग्नीषोमीयादिकहिंसायामपि समानमिति, तस्या अपि निषेधेनानर्थत्वबोधने न क्वापि प्रतिहतिर्भवति ।

हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥ २५५ ॥
प्रत्यवायार्थताज्ञानं, विधिनाऽन्यत्र वार्यते ।

ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः ॥ २५६ ॥
ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः ।

---

एवं च निषेधप्रमाणबलात् विहितहिंसानामप्यनर्थत्वमपरिहार्यमेवेति-चेदाह– ॥ **हिंसा चांशद्वयादन्येति** ॥

**न हिंस्यात् सर्वाभूतानि** ' इति निषेधशास्त्रं हि हिंसा-सामान्यस्य न प्रत्यवायार्थत्वं बोधयति ; किं तु साधनभूता ( प्रधान ) या हिंसा, या च इतिकर्तव्यतारूपा, तादृशहिंसाद्वयभिन्नहिंसाया एव। एवं च हिंसायां करणेतिकर्तव्यतारूपायां, विधिशास्त्रेण बाधितत्वात् न निषेधः प्रत्यवायार्थत्वबोधक । अत्र **अन्यत्रेति** पदेन, करणेतिकर्तव्यता-रूपा हिंसा स्वीकरणीया। तत्र निषेधशास्त्राज्जायमानं अनर्थसाधनत्व-ज्ञानं विधिना प्रतिबध्यते। ततश्च करणेतिकर्तव्यतांशाभ्यां उत्कालितश्च निषेधः रागप्राप्तहिंसान्तराण्यवलंबमानः तासामेवानर्थत्वमवबोधयेत् ; न हिंसा-सामान्यस्यापि ।

यदिद पूर्वमभ्यधायि " **शास्त्रेण न हि शक्तिनमावापोद्वापन क्रियाः** " इति तदिष्टमेवेति वदन् तत्र व्यवस्थां प्रदर्शयति– । **ज्ञान मेव च शक्तिनामिति** ॥

तत्तच्छास्त्रैः तत्तत्क्रियाभेदव्यवस्थिताः याः शक्तयः ता एव **ज्ञायन्ते ; नावापोद्वापक्रियाः** । तथा च निषेधशास्त्रेण हिंसायाः

व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥ २५७ ॥
अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ।

रूपाभेदेऽपि हिंसादेर्भेदोऽज्ञानज्ञकारितः ॥ २५८ ॥

---

अनर्थसाधनत्वशक्तिर्या अवगम्यते, सा विहितहिम्साभिन्नहिंसायामेवत्यपि अवगम्यते । तत्र च कारणं विधिशास्त्रमेव । यथा च होमसामान्यप्राप्तस्याहवनीयाग्नेः, पदशास्त्रानुसारेण विशेषव्यतिरिक्ततया स्वीकारः तद्वद् । एतद्विस्तरस्त्वन्यत्र ।

नन्वत्र एकस्यैव कर्मणः ( हिंसायाः ) शक्तिभावाभावव्यवस्था खलूक्ता भवति ; तत् कथं घटताम् ? कर्मणः एकत्वेन तद्गतशक्तेरपि सर्वत्राप्येकरूपत्वस्यापरिहार्यत्वात् इति चेदाह– **व्यवस्थाः शक्तिभेदानामिति** ॥

**दृष्टार्थेष्वपि कर्मसु,** दृष्टफलजनकक्रियासु कर्मणः अभिन्नत्वेऽपि स्थानभेदेन **शक्तिभेदानां व्यवस्थास्तावत् दृश्यन्ते** । यथा भोजनमेकमेव सदपि, आरोग्यपुरुषकर्तृकं रसलोहितमांसपरिमाणपरंपरया शरीराभिवृद्धिजनकशक्तियुक्तं दृश्यते, तदेव भोजनं रोगिणा ( आतुरेण ) क्रियमाणं चेत् धातुविषमपरिमाणजनकं सत् शरीरकार्श्यमेव जनयेत् । तद्वत् अदृष्टार्थान्यपि कर्माणि लौकिकवैदिकभेदयुक्तान्यथानर्थजनकानि ; इति न दोषः ॥

यदुक्तं '**तदेव चेदं कर्मे**'ति इत्यादिना कर्मणः रूपभेदाभावात् हिंसायाः समानफलकत्वमेवेति । तत्रापि समाधानमाह– ॥**रूपाभेदेपि हिंसादेरिति** ॥

**तथाप्येकफलत्वं चेत् क्रियात्वात् सर्वसङ्करः ।**
**यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ॥ २५९ ॥**

---

पूर्वोपपादितरीत्या यथा भोजनस्य एकरूपस्यस्वस्थातुरकर्तृभेदनिबन्धन-भेदमाश्रित्य शक्तिभेदसमर्थनं भवति ; तद्वत् हिंसायामपि सत्यपि हिंसा त्वेनाभेदे इयमङ्ग (विहित) हिंसा, इयमनङ्ग (बाह्य) हिंसेति व्यक्ति-भेदावगतेः शक्तेर्भेदोऽपि (व्यवस्था) भवति । अतः न रूपाभेदः एक-फलकत्वं साधयेत् ॥ २४९—२५८ ॥

यदि चात्रान्तरभेदमधरीकृत्य रूपाभेदमात्रेणैकफलकत्वमित्याग्रहः क्रियेत तत्राह- ॥ **तथाप्येकफलत्वं चेत् इति** ॥

**तथापि** अवान्तरभेदेसत्यपि तमनङ्गीकृत्य रूपभेदमात्रेण एकफल-जनकत्वं यद्-उच्येत तर्हि क्रियात्वरूपव्यापकधर्मस्य सर्वक्रियास्वपि सम-वात् सर्वलौकिकवैदिकक्रियाणां एकफलकत्वमापद्येत । इदं स्वर्गफलकं कर्म, इदं च पुत्रफलकं इति व्यवस्था भज्येत ।

**अथवा-** अवान्तरभेदे सत्यपि यदि हिंसारूपैक्यात् वैदिकहिंसायाः प्रत्यवायोत्पादकत्वमित्युच्येत, तर्हि क्रियारूपतयैक्यात् तस्या एव हिंसायाः स्वर्गोत्पादकत्वमपि स्यात् ।

ननु क्रियात्वेन महासामान्ये नैकत्वं न वदामः, किंत्ववान्तरेण हिंसा त्वेन सामान्येनेति न दोषः इति चेदाह- ॥ **यजित्वाद्यविशेषात् इति** ॥ यागत्वावान्तरसामान्यस्याभेदात् चित्रादीनां कर्मणां फलतुल्यता स्यात् इति ॥ २५९ ॥

भेदात्तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।

विधिना वापि सर्वेषां साक्षाद्व्यवहितोऽपि वा ॥ २६० ॥

पुरुषार्थः फलं तेन नानर्थोऽतः प्रतीयते ।

---

यदि अनेकयागविधायकवाक्यानां वैयर्थ्यापत्तेः यागव्यक्तिभेदाश्रयणेन, व्यवस्थेत्युच्येत, सा हिंसायामपि तुल्येत्याह– ॥ **भेदात्तत्र व्यवस्थेति** ॥

यागव्यक्तिभेदात्तत्र, व्यवस्था, साङ्कर्यपरिहारश्चेत्, इह हिंसायामपि, ऋत्वङ्गहिंसाभेदाश्रयणेन अनर्थत्वार्थत्वव्यावस्था भविष्यति ॥

ननु कामं अङ्गहिंसा विहिता भवतु नाम ; निषेधबलादनर्थत्वं चास्तु ; न विधिना अनर्थफलं न बोध्यते ; इति राजाज्ञा; इति चेदाह– ॥ **विधिना वाऽपि सर्वेषामिति** ॥

सर्वत्र विधिः पुरुषप्रवृत्तेः कारणम् । अत एव च प्रवर्तना विध्यर्थः ; इति स्वीक्रियते । अतः पुरुषप्रवृत्त्यङ्गतया, कर्तव्यताज्ञानं, इष्टसाधनता ज्ञानं च विधेये विधिना लोको भजते । अतश्च **विधिना** नियमेन **साक्षात्** व्यवधानेन वा **पुरुषार्थः** एव विधेयानां **फल**मिति निश्चीयते । साक्षात् प्रधानानां, व्यवधानेन च अङ्गानां प्रयाजादीनां पुरुषार्थत्वज्ञानम् । अतो विधिना नानर्थफलकत्वावसान विधेये कथमपि भवितुमर्हति । तथा च प्रकृते अग्नीषोमीयहिम्सायाः यदि विधेयत्व , न तस्याः अनर्थत्वसंभव, विधिविषयत्वात् ; पुरुषार्थपर्यवसायित्वाद्विधेः तद्विशेषापेक्षायां अनर्थकल्पनावसरस्यैवाप्रसरात् ।

न चैषु श्रूयतेऽनर्थः निषेधान्न च कल्प्यते ॥ २६१ ॥

न च प्रकरणस्थत्वात् पुरुषार्थः फलं भवेत् ।
कर्मोपकारः कल्प्यस्तु दृष्टोऽदृष्टोऽथवा पुनः ॥ २६२ ॥

---

विहितहिंसानां च अनर्थत्वं प्रमाणाभावादपि न स्वीकर्तुं शक्यते इत्याह ॥ न चैषु श्रूयतेऽनर्थ इति ॥

न हि प्रत्यक्षबलात् विहितहिंसानामनर्थत्वं वक्तुं शक्यते ; तस्य तत्रासमर्थत्वात् । अनर्थसमभिव्याहारादस्याः न अनर्थत्वकथनं युज्यते; अनर्थवाचकपदसमभिव्याहाराभावात् ।

ननु अनर्थवाचकपदस्याश्रूयमाणत्वेपि , कलञ्जभक्षण-सुरापानादिष्विव निषेधसत्वात् अनर्थत्वं कल्पयामः ; इति चेत् – तदपि न घटते– कलंजभक्षणादीनां निषेधसत्त्वात् काममनर्थत्वं कल्प्यते । नेह तथा; निषेधशास्त्रस्य विहितहिंसायामप्रसरात् ॥ २६०–२६१ ॥

अग्नीषोमीयादिहिंसानां प्रकरणपाठात् क्रत्वर्थत्वमेवावगम्यते ; प्रयाजादिवत् , न पुरुषार्थत्वं अतः फलकल्पनायाः अवसर एव नास्तीत्याह– ॥ न प्रकरणस्थत्वात् इति ॥

क्रतुप्रकरणस्था हिंसा, तदुपकाररूपप्रयोजनेन शान्ताकांक्षा भवतीति न तस्याः पुरुषार्थः फलम भवेत् । किं तर्हि फलं क्रतुप्रकरणस्थायाः इत्यपेक्षायां प्रधानकर्मोपकारः दृष्टो वा ? अथ अदृष्टो वा ? फल यथा अवघातदेः दृष्टोपकारः, यथा च प्रयाजानुयाजादेरदृष्टोपकारः फलम्, तद्वदिति ॥ २६२ ॥

**कल्पनावसरस्तत्र नानर्थस्यानपेक्षणात् ।**
**क्रत्वर्थश्चापि संस्कारः पशोर्नारादुपक्रिया ॥ २६३ ॥**

**दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।**

---

अनर्थकल्पनस्यानपेक्षितत्वादपि नावसरः इति चाह– ॥ **कल्पनावसरस्तत्र इति** ॥

अग्नीषोमीयादिहिंसायाः अङ्गभूतत्वेन क्रतूपकारेणैव निराकांक्षत्वात् नानर्थरूपकल्पनायाः मनागप्यवसरः कल्पनामूलाकाङ्क्षाया एव उच्छिन्नत्वात् ॥

अयं हिंसारूपव्यापारः क्रत्वर्थभूतोऽपि न प्रयाजादिवदारादुपकारकः, अपि तु पशोस्संस्कारभूता इयं हिंसा अवहननादिवत् संनिपत्योपकारभूतेऽति च विभाव्यम् । अत एव च '**पशुं संज्ञापयति**' इति संज्ञापनविधायकवाक्ये द्वितीयया व्रीह्यादिवत् पशोस्संस्कार्यत्वावगमः ( प्राधान्यावगमः ) दृश्यते । अत पशुद्वारा क्रत्वर्थभूतेयं हिंसेति नात्र फल ( अनर्थ ) कल्पनायाः प्रसक्तिर्भवति । अत्र वार्तिके '**नारादुपक्रिये**'ति आरादुपकारकत्वनिषेधपूर्वकं क्रतुसंस्कार ( सन्निपत्योपकारकत्व ) कथनं क्रत्वर्थबलीयस्त्वस्थापनायेति भाव्यम् ॥ २६३ ॥

वैदिकाहिंसाया सन्निपत्योपकारकत्वेऽपि नादृष्टार्थविषया, अपि तु दृष्टविषयैवोपकारकत्वं अवघातादिवत् इत्याप्याह– ॥ **दृष्टैव त्ववदानानामिति** ॥

आभिचारेऽप्युपायस्था हिंसा नाधम उच्यते ॥ २६४ ॥
तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।

---

अयं हिंसाव्यापारः क्रत्वर्थः क्रत्वपेक्षितैकादशावयवदाननिष्पत्तिहेतुत्वात् दृष्टप्रयोजनक एव भवति । कथं ? ज्योतिष्टोमाङ्गभूतः दैक्षः पशुः हृदयाद्येकादशावयवहविष्कः स्वापेक्षितैकादशावयवावदानान्यपेक्षते । तानि चावदानानि "हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः, अथ वक्षसः इत्यादिवाक्यैर्विधीयन्ते । तदनुकूलश्चायं हिंसासंस्कारः भवति । असति च हिंसासंस्कारे पशोरेकादशावदानानामनिष्पद्यत्वात् । अतश्च क्रतुहिंसायाः दृष्टप्रयोजनकत्वेन प्रयोजनाकांक्षारहितत्वात् नानार्थकल्पनस्यावसरो वर्तते इति ।

यदि च क्रत्वर्थहिम्साया अपि निषेध्यत्वमेवेति नैयात्यात् स्वीकृत्य तस्याः अनर्थत्वमित्युच्येत ; तर्हि -

१) क्रत्वर्थभूतहिम्सायाः पुरुषार्थत्वम् ।

२) संस्कारकर्मभूतायाः तस्याः, अर्थकर्मत्वम् ।

३) अर्थफलकत्वेऽपि तस्याः अनर्थफलकत्वम् ।

४) दृष्टार्थकत्वे संभवति, अदृष्टार्थत्वकल्पनम् ॥

इत्येतच्चतुष्टयमपि प्रमाणविरुद्धं परिकल्पितं स्यात्

एतमेव न्यायं श्येनेऽप्यतिदिश्य तत्र विशेषदर्शनेनोपसंहरति -
॥ अभिचारेऽप्युपायस्थेति ॥

उद्देश्याच्च फलत्वेन श्येनादौ न विधीयते ॥ २६५ ॥
भावनाविधिरप्येषः फलांशाद्विनिवर्तते ।

---

पूर्वं अंशद्वयगतायाः ( साधनेतिकर्तव्यतांश ) हिंसायाः नानर्थत्वम् ; विहितत्वेन तत्र प्रतिषेधाप्रसरात् ; इत्युक्तम् । तेनैव न्यायेन श्येनाद्यभिचारकर्मस्वपि अतिदेशप्राप्स्यमानायां अङ्गहिंसायां नैवाधर्मत्वं; विधिस्पृष्टत्वात् । श्येनसाध्यायाः हिंसायाः (फलभूतायाः) अत एव चानङ्गभूतायाः अनर्थत्वम् ; प्रतिषेधविषयत्वात् ; रागप्राप्तत्वेन विधिविषयत्वाभावाच्च । भाष्येऽपि ‘ कोऽनर्थः, श्येनः ’ इत्यादौ श्येनादिग्रहणं तल्लक्षणार्थमेव, नाङ्ग ( विहित ) हिंसालक्षणार्थमिति च भाव्यम् ; इति ॥

ननु फलांशस्था हिंसा न विधिविषयः इति यदुक्तं, तन्न घटते; तस्याऽपि चोदनलक्षणत्वात् , भावनायाः अंशत्रयमध्यपतितत्वाद्वा विधेयत्वापरिहारात् इति चेदाह– ॥ उद्देश्याच्च फलत्वेनेति ॥

‘ श्येनेनाभिचरन् यजेत ’त्यादौ धात्वर्थः यागः एव विधीयते । तस्य विधेयस्य यागस्य उद्दिश्यते हिंसा फलत्वेन । सर्वत्र च फलमुद्दिश्य साधनमेव विधीयते । न चोद्दिश्यता । ततश्च फलभूतहिंसायाः चोदनालक्षणत्वं नाम, विधीयमानयागसंबन्धित्वमात्रमेव । चोदनया हिंसासाध्यत्वेन लक्ष्यते इति यावत् । न च तावन्मात्रेण विधेयत्वम् । न हि विधिप्रमेयं सर्वं विधिविषयः इति विधेयलक्षणं वक्तुं शक्यते ; अप्राप्तांशस्य विधेयत्वात , हिंसायाश्च रागतः प्राप्तत्वात् विधेयत्वासंभवात् । अत एव देशकालयोरुद्देश्यभूतयोरपि विधेयत्वस्य सिद्धान्ते

**अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥ २६६ ॥**
**फलानर्थानुबन्धित्वात् तद्द्वारेणोपचर्यते ।**

**निराकांक्षस्य चैकेन श्येनस्य न फलद्वयम् ॥ २६७ ॥**

---

स्वीकारात्, फलभूतहिंसाया उद्देश्यत्वेऽपि विधेयताप्यस्तु इति शङ्काऽपि परास्ता भवति ; तयोरप्राप्तत्वेन विधेयत्वाक्षतेः । अतः अत्र रागतः हिंसायां पुरुषः प्रवर्तते न विधिना प्रवर्त्यते ।

अंशत्रयविशिष्टभावनाविधायकोऽपि विधिः **प्राप्ताप्राप्तविवेकन्यायेन** रागतः प्राप्तं फलांशं परित्यज्य साधनेतिकर्तव्यांशयोरेव अवतरति अतश्च तयोरेव विधेयत्वम् ; न फलस्य । सूत्रकारश्चाह— **" तद्गुणास्तु विधीयेरन्न विभागात् नचेदन्येन शिष्टाः "** ॥ (१-४-९) इति ॥

ननु श्येनादेः किंरूपत्वं तर्हि, किं विहितत्वात् धर्मत्वमिष्टमिति चेदाह — **अतः स्वतो न धर्मत्वमिति** ॥

**श्येनादेः** अभिचारकर्मणः, **न** दर्शपूर्णमासादिवत् **स्वतो धर्मत्वम्** ; फलद्वारा अनर्थत्वात् । **नाप्यधर्मत्वं** ; साक्षात् प्रतिषेधाविषयत्वेन, स्वरूपतः अनर्थत्वाभावात् । अतः श्येनफलस्यानर्थानुबन्धित्वात् तद्द्वारा अनर्थत्वमिति श्येनेप्यधर्मत्वमुपचारात् । अतस्तत्रौपचारिकः अनर्थशब्दप्रयोगः भाष्ये भाष्यकृता क्रियते । अत एव शास्त्रे श्येनादेस्तामसधर्मत्वेन गणना क्रियते । **'परस्योत्सादनार्थं यत् तत् तामसमुदाहृत'** मिति ॥

ननु चान्यत्र विधीनां पुरुषार्थफलकत्वदर्शनात् तदुदाहरणेन श्येनेऽपि विधिविषयत्वसत्त्वात्, **विश्वजिन्न्यायेन** अर्थफलकत्वमेव तेषामपीति

तस्मात् क्रियान्तरादेर्वा हिंसातोऽनर्थ उच्यते ।

फलतोऽपि च यत् कर्म नानर्थेनावबुध्यते ॥ २६८ ॥
केवल प्रीतिहेतुत्वात् तद्धर्मत्वे न हीष्यते ।

ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत् ॥ २६९ ॥
फलं तावदधर्मोऽस्य श्येनादेः संप्रधार्यते ।

---

कल्प्यताम् । ततश्च श्येनादीनां स्वरूपेण धर्मत्वं स्यादितिचेदाह— ॥ **निराकांक्षत्वेति** ॥

भावनायाः भावकाङ्क्षायाः एकफलकल्पनयैव शान्तिसंभवात् **'अभिचरन्'** इति श्रुतेन अभिचारेणैव ( शत्रुवधेन ) निराकांक्षत्वात् न फलान्तरकल्पना घटेत । वक्ष्यति च **सूत्रकारः 'एकं वा चोदनैकत्वात्'** इति । अतः श्येनसाध्यहिंसारूपा ( अभिचार ) त् क्रियान्तरादेव श्येनः अनर्थ इत्युच्यते ; न स्वरूपात् । अतः श्येनः न स्वरूपतो भवत्यधर्म ॥

ननु तर्हि माभूदधर्मत्वं, धर्मत्वं स्वरूपत एव भवतु ; इति चेदाह— ॥ **फलतोऽपि च यत्कर्मेति** ॥

फलद्वाराऽपि यस्य कर्मणः नानर्थसंबन्धः, तदेव कर्म प्रीतिमात्रसाधनं, सद्धर्म इत्युच्यते । अतः श्येने न धर्मत्वप्रसक्तिरपि ।

इष्टाभ्युपायः चोदनालक्षणश्च यः स, धर्मः इति पूर्वमुक्तत्वात् श्येनेन च तस्य पुष्कलत्वात् इति शङ्कापरिहारं च दर्शयति— ॥ **ननु चेष्टाभ्युपायत्वादिति** ॥

यदि तेनेष्टसिद्धिः स्यादनिष्टाननुबन्धिनी ।। २७० ।।
तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ।

यदा तु चोदनागम्यः कार्यकार्यानपेक्षया ।। २७१ ।।
धर्मः प्रीतिनिमित्तं स्यात तदा श्येनेऽपि धर्मता ।

यदि त्वप्रीतिहेतुर्यः साक्षात् व्यवहितोऽपि वा ।। २७२ ।।
सोऽधर्मः चोदनार्थः स्यात् तदा, श्येनेष्यधर्मता ।

---

**तत्र समाधानम्** श्येनस्वरूपसाध्यं यत् फलं प्राणवियोगानुकूल-व्यापाररूपं, तस्य **'न हिंस्यात्'** इति निषिद्धत्वेन अधर्मत्वम् । श्येनादेः धर्मत्वमधर्मत्वं वेत्येतत संप्रधारयामः (विचारयामः) ॥

संप्रधारणं नाम वृद्धव्यवहारपर्यालोचनम । तत्र वृद्धव्यवहारः किदृशोऽर्थे वर्तते इत्यत्राह– । **यदि तेनेष्टसिद्धिरिति** ॥

विहितं, यत् कर्म, अनिष्टसंबन्धरहिततया इष्टं साधयति तत् धर्मः ; इति वृद्धैर्यदि निर्णीयेत, तर्हि, श्येनादेः धर्मत्ववर्जनम ( धर्मत्वाभावः ) परंपरया ( फलद्वारा ) अनर्थसंबन्धित्वात् ॥

**यदि तु कार्याकार्यानपेक्षया,** ( कार्यं ) केवलाभ्युदयनिमित्तं तद्भिन्न ( तद्विपरीतं अकार्यं )। एतदनपेक्षया यत् कर्म प्रीतिनिमित्तं तद्धर्मः इत्युच्येत, तर्हि तदा श्येने धर्मत्वं चोदनागम्यत्वात् प्रीति-विषय साधनत्वाच्च ॥

यस्तु हिंसात्वसाधर्म्यात् बाह्यवच्चोदितास्वपि ॥ २७३ ॥
वदेदनर्थहेतुत्वं तस्याप्यागमबाधनम् ।

तमनाहत्य यो ब्रूयात् यागदेरप्यसौ वदेत् ॥ २७४ ॥

---

एवं स्वधर्मविषयेऽपि लौकिकानां प्रयोगः संप्रधरणीयः— तत्र यदि यः चोदनार्थोऽपि (चोदनागम्येऽपि) साक्षात् वा व्यवधानेन वा अनिष्टसाधनं सः अधर्मः इति तर्हि श्येनारदिप्यधर्म एव भवेत् । अत्र प्रथमं, श्येनादेधर्मत्वाभावः इत्युक्तम्, मध्यमेन धर्मत्व, इति, तृतीये, अधर्मत्वमिति च आद्यतृतीयपक्षयोः, फलद्वारैव धर्मत्वाभावाधर्मत्वयोः वार्तिके संप्रधारणात स्वरूपेण श्येनादिर्नाधर्मः इत्युक्तम् । तत्र च निदानं वेदविहितकर्मगोचरः धर्मशब्दः लौकिकानां दृष्ट इति तु विभाव्यम् ॥

यस्तु विहितत्वे सत्यपि अंशद्वयगामिन्याः ( वैदिक्याः ) अनर्थत्वव्याप्तहिंसात्वेनापि प्रतिबद्धत्वात् अनर्थहेतुत्वमनुमिमीमहे, तत्र च लौकिकहिंसैव सपक्षो भवति इति बदेत् । तं दूषयति— ॥ **यस्तु हिंसात्वंसाधर्म्यादिति** ॥

तत्रेदमेव दूषणं भवति यत् '**आगमविरोधः**' इति । '**तस्माद्यज्ञे वधोऽवधः**' '**अन्यत्र तीर्थेभ्यः**' इत्यादि प्रमाणानि यज्ञीयहिंसायाः अहिंसात्वमेव हि बोधयन्ति । तथा च हिंसात्वस्यैवाभावे कथं तदनुबन्धिनः अनर्थत्वस्य साधनं घटेतेति भावः ॥

यदि तु, आगमं च नाद्रियामहे इति धैयात्यादुच्येत तर्हि अनवस्थां प्रपञ्चयति— ॥ **तमनादृत्येति** ॥

स्वर्गादिसाधनाशक्तिं क्रियात्वाद्भोजनादिवत् ।
गीतामन्त्रार्थवादैर्या कल्प्यते अनर्थहेतुता ॥ २७५ ॥

---

यागः दर्शपूर्णमासादिः, न स्वर्गसाधनम् , क्रियात्वात् , भोजन-गमनादिवत् इत्यपि स वक्तुं प्रभवेत् । न च तत्तद्यागफलसबन्ध-बोधकवेदविरोधः; आगमापुरस्कारस्य त्वयैवोक्तत्वात् ।

**इदमुपलक्षणम्**– हिंसायाः अपि नरकाद्यनर्थहेतुत्वं चागमनैव हि बोध्यते इति वक्तव्यम । आगमापुरस्कारे च तदपि न सिध्येत् । तथा च भवदनुमानमेव नोत्थितुमर्हति ; इति ।

ननु नास्माकमागमविरोधः ; प्रत्युत वैदिकहिंसायाः '**नानर्थ हेतुत्व'मिति** वादिनां भवतामेव स भवति । तथा हि– मन्त्रवर्णः "**यत्पशुर्मायुमकृतो रोवापद्भि राहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वगंहसः**' इति वैदिकहिंसायाः एनः ( पापं ) दर्शयति । एवं च गीतादौ **श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परंतप" इति एवं " विधियज्ञात् जपयज्ञः विशिष्टो दशभिर्गुणैः "** इति च द्रव्यमययज्ञस्य ( विधियज्ञ ) निन्दा, जपयज्ञस्य प्रशंसा च हिंसायोग तदभावाभ्यामेवेति स्पष्टीक्रियते । अतः आगमविरोधदूषणं नास्माकं अपि तु वैदिकानामेवेति चेदाह– ॥ **गीतामन्त्रार्थवादेरिति** ॥

गीतामन्त्रार्थवाद क्रतुहिंसाया ( वैदिकहिंसायाः) अपि अनर्थत्व-कल्पनमित्येतत् श्रुत्यपरामर्शनिबन्धनम् । तथा हि– ' अन्यत्र तीर्थेभ्यः '

प्रत्यक्षश्रुतिबाध्यत्वात् सान्यार्थत्वेन नीयते ।

---

इति वैदिकहिंसाव्यतिरिक्तहिंसाया एव चानर्थत्वबोधनात् क्रतुषु हिंसायाः विधानदर्शनात् ; '**न वा उवे तन्मियसेन रिष्यसि**' इति स्पष्टमेव वैदिकहिंसायाः हिंसात्वाभाववचनाच्च प्रत्यक्षश्रुतिविरोधः अपरिहार्यः स्यात् ; वैदिकहिंसायाः अनर्थत्ववर्णने । एवं—

**यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।**
**यज्ञा हि भूत्यै लोकस्य तस्माद्यज्ञे वधोऽवधः ॥**

**स्मृतिवचन**मपि शास्त्रीयहिंसायाः '**अवधः**' इति हिंसात्वाभावमेव बोधयति । अतः पूर्वोक्तवचनानां '**न हि निन्दा**'न्याये नान्यपरत्वंमेवेति बोध्यम् । प्रत्यक्षविधिविरोधमन्त्रवर्णादेरन्यपरत्वस्यैव बहुत्र सिद्धत्वात् ; इति ॥

अत्र **भाष्यकारेण**—

"**नन्वशक्तमिदं सूत्रमिमावर्थौ अभिवदितुं, चोदनालक्षणो धर्मः, अर्थश्च धर्मः नानर्थः इति । एकं हीदं वाक्यम् । तदेवं सति भिद्येत**" इत्याक्षेपं कृत्वा तत्र **समाहितम**— **उच्यते । यत्र वाक्यादर्थोऽवगम्यते, तत्रैवं । तत्तु वैदिकेषु, न सूत्रेषु । अन्यतोऽवगते अर्थे सूत्रमेवमर्थमित्यवगन्तव्य**'मिति । उक्तम् ॥

**एतद्भाष्यसंदर्भस्यायमाशयः**— यश्चार्थः वेदैकसमाधिगम्यो भवति तत्र एकतात्पर्यत्वात अर्थद्वयपरत्वे वाक्यं भिद्येत । वैदिकेष्वेव वाक्येषु

**शिष्यान् प्रत्यविशिष्टत्वात् सूत्रवैदिकवाक्ययोः ॥ २७६ ॥**
**अशक्तेश्चोभयोः साम्यात् न सूत्रेष्वित्यनुत्तरम् ।**

**प्रागुक्तपरिसंख्यायाः फलमेतत् प्रकाश्यते ॥ २७७ ॥**

---

तथा प्रमाणान्तरानधिगतार्थसमर्पकत्वात्तेषां, सूत्राणां तु लौकिकवाक्यत्वान्न वाक्यभेदो दोषायेति ॥

तदेतदाक्षिपति– ॥ **शिष्यान् प्रत्यविशिष्टत्वादिति** ॥

अज्ञातवेदार्थान् **शिष्यान् प्रति** हि **जैमिनिना** सूत्रवाक्यानि प्रणीतानि भवन्ति। तथा च वेदवाक्यानां यथा अनवगतार्थबोधकत्वं, तथा शिष्यान् प्रति सूत्राणामपि इति समानमेत्र। एवं च एकस्य वाक्यस्य अनवगतार्थबोधकस्य अनेकार्थबोधकत्वे वाक्यभेदः यथा वेदे दोषाय, तथा सूत्रेष्वपि स्यात। स्थिते चैवं **'तत्तु' वेदेषु न सूत्रेषु'** इति विभागः **भाष्यकारीयः** कथं घटेत? वेदसूत्रयोर्मनागपि वैषम्याभावात्, अन्यपरस्य चान्यार्थप्रतिपादनाशक्तेरुभयत्र तौल्यात्। अतः न सूत्रेषु इति भाष्योक्तमुत्तरं न युज्यते। (इत्याक्षेपः) उक्तं च पूर्वं **वार्तिके 'नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते'** (प्र सू ४३) इति।

एवं दूषितं भाष्यं समर्थयितुमाह– ॥ **प्रागुक्तपरिसंख्याया इति** ॥

सत्यमशक्तिः वेदसूत्रयोरुभयोरपि शिष्यान् प्रति समेति। तथाऽपि व्याख्यातारः ये सन्ति तैः अवगतार्थैः यो व्याख्याप्रकारः, स एव

**सूत्रेषु त्वनया युक्त्या गतिरेषाऽपि युज्यते ।**

**तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥**

---

**भाष्यकारैः** उक्तः इति प्रदर्शितः । व्याख्याकर्तारो हि न्यायविचार-कुशलाः, विचारसिद्धन्यायबलेन एवं निर्णयन्ति, यत् वाक्यभेदादिना सूत्राणि व्याचक्षते इति । अत्र **वार्तिके** '**अनये**'ति पदेन बुद्धि-स्थपरामर्शकेन युक्तिविशेषणभूतेन भाष्योक्तया प्रमाणान्तरप्रतिपन्नार्थविषय-कत्वयुक्त्या इत्यर्थः । एवं '**एषे**'त्यनेन च भाष्योक्ता वाक्यभेदावगतिश्च परामृश्येते । आह च **भाष्यकारः**– **'भिन्नयोरेव वाक्ययोरिमौ एक-देशौ'** इति ।

इदं च पूर्वं प्रतिज्ञासूत्रे '**लोके येष्वर्थेषु**' इत्यादि प्रथम-भाष्यव्याख्यानावसरे, "**लोक इत्यादि भाष्यस्य षडर्थान् संप्रचक्षते**" इति एतैर्वार्तिककारैरुपक्षिप्य '**परिसंख्या**'रूपः यश्चतुर्थोऽर्थः '**सति संभवे**' इति भाष्यस्य प्रदर्शितः तस्यः फलमिति बोध्यम् ।

एवं न्यायाभासभ्रान्ताः शिष्याः भाष्यकारेण बोध्यन्ते– विव-क्षितार्थस्य यथाश्रुतसूत्रेण बोधासंभवे वाक्यभेदादिभिरपि सूत्राणि व्याख्या-तव्यानि, प्रमाणान्तरप्रतिपन्नार्थसूचकत्वात् सूत्राणां, न सूत्रेष्वयं दोषः ; इति । तत्र चोदाहरणं, इदमेव चोदनासूत्रमिति बोध्यम् ।

यतः प्रमाणान्तरेण चोदनालक्षणोऽर्थः धर्मत्वेन प्रसिद्ध ; अतः तदनुसारेण वाक्यभेदादिभिरपि सूत्रार्थः संपादनीयः । तत्प्रकारश्च

सूत्रस्य आवृत्त्या वा, धर्मादितन्त्रेण वा भवेदिति दर्शयति ॥ **तस्मा-दावर्तते सूत्रमिति** ॥

आवृत्तिपक्षे हि, समग्रस्यैव चोदनालक्षणसूत्रस्यद्विरावृत्तिः क्रियते । तत्र एकस्य "**चोदनालक्षणो धर्मः**" इति बोधने तात्पर्यम् । आवृत्तस्य अन्यस्य तु "**अर्थो धर्मः**" इति बोधने । प्रथमपक्षे '**अर्थ**' इत्यनुवादः, द्वितीये च **चोदनालक्षण** इत्यनुवादः । सूत्र-भेदेन चोभयविधानमित्यङ्गीकारात् , उभयानुवादोपपत्तिः ।

'**चोदनालक्षणोऽर्थो धर्मः**' इति पदत्रयघटितमिदं सूत्रम् । त्रयाणामपि पदानां परस्परसंबद्धार्थः एव वाक्यार्थः । अत्र च अन्यत-मस्य पदस्य तन्त्रेणोभयसंबन्धाङ्गीकारादेव न वाक्यभेदः प्रसज्यते । यदि चा वृत्तिः स्यात् स्यात्तदा वाक्यभेदः । सकृदुक्तस्यैव सामर्थ्येणोभय-संबन्धकरणे शक्तिभेदात् । तद्यथा– धर्मपदस्य तन्त्रेण चोदनालक्षणार्थ-पदाभ्यां संबन्धस्वीकारे '**चोदनालक्षणो धर्मः**' अर्थः धर्म इत्यु-भयं सिध्यति । मध्यमं अर्थपदं तन्त्रेणाद्यन्तपदाभ्यां अन्वेतीति स्वीकृतौ च, अर्थो धर्मः, इति, स च चोदनालक्षणः इति च सिध्येत् । आद्यं चोदनालक्षणपदं, उत्तरपदाभ्यां संबध्यते इति पक्षे च, चोदना-लक्षणोऽर्थः, चोदनालक्षणो धर्मः इति च सिध्येत् । तथा चेदमेक-वाक्यं ( सूत्रं ) त्रयाणामन्यतमस्योभयपदसंबन्धात् अर्थद्वयबोधकमिति च भावः । उक्तं च–

**चोदनालक्षणादीनां तन्त्रेणैकस्य सङ्गतौ ।**
**द्वाभ्यां सहार्थवचित्वात् एकं द्व्यर्थं भविष्यति ॥**

इति ॥ २६३–२७८ ॥

एकदेशानुमानाद्वा द्वे सूत्रे परिकल्पिते ।
इतरेतरसामीप्यादेतावेव परस्परम् ॥ २७९ ॥
कल्प्येते वाक्यशेषाय नान्यावयवकल्पना ।

---

अत्र भाष्यकारेण '**भिन्नयोरेव वाक्ययोरिमावेकदेशा**'विति प्रदर्शितम् । तथा च स्पष्टमेवेदं प्रदर्शितम्, सूत्रद्वयमिदमिति । तत्प्रदर्शयति– ॥ **एकदेशानुमानाद्वा इति** ॥

अत्र '**अर्थो धर्मः**' इत्येकं सूत्रम् । अन्यच्च "**चोदनालक्षणः**" इति । "**चोदनालक्षणः**" इत्येतावन्मात्रेण न निराकांक्षत्वं संभवति । '**कस्य चोदनालक्षणः**' इति अकांक्षायाः अपरिहारात् । तत्र '**धर्मः**' इत्यनन्तरस्थेन धर्मपदेन संबन्धात् एकदेशतया अनुमीयते '**चोदनालक्षणो धर्मः**" इति । तदेतदेकादेशानुमानादिति वार्तिके प्रदर्श्यते ।

नन्वेवं सति सूत्रद्वयपरिकल्पनायां चोदनालक्षणोधर्मइत्येतावन्मात्रोक्तौ अनर्थस्यापि प्राप्नुयात्; तथा लौकिकभोजनादेरपि धर्मत्वं स्यात्, अर्थत्वात्; इति शङ्कायामाह– ॥ **इतरेतरसामीप्यात् इति** ॥

चोदनालक्षणशब्दः, अर्थशब्दः इत्येतावुभावपि शब्दौ सामीप्यात् परस्परमेव सूत्रद्वयेऽपि वाक्यशेषतया विशेषणत्वेन स्वीक्रियेते । अतः न दोषः ।

**अयमाशयः**– "अर्थो धर्मः" इत्यस्मात् चोदनालक्षणसूत्रे अनुषज्यमानः धर्मशब्दः, अन्तर्नीतार्थ एव चानुषज्यते, न स्वार्थ-

विशिष्टार्थानुवादित्वादथवेत्यपि भाषिते ॥ २८० ॥
वाक्यभेदः स एवेऽति संज्ञातन्त्रत्वमुत्तरम् ।

---

नादरेण स्वतन्त्रतया धर्मशब्दः अवयवत्वेन परिकल्प्यते ; तादृशस्य धर्मशब्दस्यानुपस्थितत्वात् । तथा चार्थत्वविशिष्टः यश्चोदनालक्षणः स एव धर्मः इति सिद्ध्यति । अतो नानर्थस्य धर्मत्वप्रसक्तिः ।

एवं "अर्थो धर्मः" इति सूत्रेपि चोदनालक्षणत्वविशिष्ट एव धर्मः न तदविशिष्टः ; अतश्च भोजनादेर्लौकिकस्य न धर्मत्वापत्तिः । तदत्रवं सिद्धम् ; यदर्थोधर्मः इत्येकेन सूत्रेणोक्तं तच्चोदनालक्षणः, इति । एवं 'यच्चोदनालक्षणो धर्मः' इति यदुक्तं, तदर्थं इति । नान्यस्य लौकिकस्य अवयवत्वेन कल्पना ।

अत्रापरं भाष्य- 'अर्थस्य सतः चोदनालक्षणस्य धर्मत्वमित्येकार्थमेवेति " इदं च पूर्वोक्तशङ्कायाः परिहारान्तरप्रदर्शनपरं भवति । तदेतदाक्षिपति, समाधत्ते च- ॥ विशिष्टार्थानुवादित्वादिति ॥

एतद्भाष्यानुसारेण अयमर्थः, अर्थविशेषण-विशिष्टचोदनालक्षणानुवादेन धर्मत्वविधानं, इति । तथा च नानर्थस्य धर्मत्वं, न वा चोदनालक्षणभिन्नस्य । तत्र दूषणमाह- ॥ एवं भाषितेऽपि ' इति ॥ एवमङ्गीकारोऽपि विशिष्टोद्देशेन विधानाङ्गीकाराद्वाक्यभेदः स्यादेव । यथा ग्रहं संमार्ष्टि इत्यत्र एकत्वविशिष्टग्रहानुवादेन " संमार्गविधौ '' इति । तदुक्तं वाक्यभेदः ' स एवे'ति । अतः नेदं समाधानं भाष्यकारीयं घटते इति । एवमाक्षिप्य पूर्वोक्तमेव युक्तमित्याह- ॥ संज्ञातन्त्रत्वामीति ॥

अर्थं वा प्रत्युपादानात् संज्ञालक्षणशब्दयोः ॥ २८१ ॥

तन्त्रं लक्षणशब्दो वा वाच्यो धर्मार्थशब्दयोः ।

---

अत्र संज्ञापदेन धर्मपदमुच्यते । चोदनालक्षणः अर्थश्च यः तस्य धर्म इति संज्ञा, अलौकिकी यथा च धातुशब्दः भूवादीनाम् ।

अर्थचोदनालक्षणशब्दयोर्वा इतराभ्यां तन्त्रसंबन्धो भवितुमर्हतीत्याह– ॥ अर्थं वा प्रत्युपादानात् इति ॥

**संज्ञालक्षणशब्दयोः** ( चोदनालक्षणधर्मशब्दयोः ) **अर्थं प्रत्युपादानात्** अर्थपदेन संबन्धात् इत्यर्थः । **सूत्रार्थस्तु** धर्मपदतन्त्रत्ववदेव दर्शयितव्यः । एतद्विस्तरस्तु **पूर्वमेव** ( २७८ वार्तिकव्याख्याने ) कृतः इति नात्र विस्त्रियते ॥

ननु **'भिन्नार्थयोरेव वाक्ययोरिमावेकदेशा'विति** पूर्वप्रदर्शित-भाष्यानुरोधेनात्र वचनव्यक्तिद्वयमत्राभिप्रेतमिति सिद्धम् । तत्र चोदना-लक्षणानुवादेन धर्मत्वविधानमिति पक्षाश्रयणे यद्यप्यर्थशब्दः आवश्यकः; चो-दनालक्षणस्य सर्वस्यार्थत्वमेवेति नियमाभावेनानर्थस्यापि धर्मत्वापत्तेः, तदर्थ-मर्थशब्दस्यावश्यकत्वात् ।

यदि च सामान्यतः सिद्धं धर्ममनूद्य चोदनालक्षणत्वं विधीयते, तदा व्यर्थो ह्यर्थशब्दः; तथा हि–

**सर्वेषामेव च वादिनां 'प्रीतिसाधनं धर्मः' इत्यत्र नैव,** विप्रतिपत्तिर्वर्तते । प्रीतिसाधनविशेषः कः ? इत्येव च विप्रतिपत्तिः

धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥ २८२ ॥
वृत्तमेव तदार्थत्वं किमर्थं पुनरुच्यते ।

चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥
लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा, भवेत् ।

---

परिदृश्यते । अत एव चोत्तरसूत्रे अयमेव वार्तिककारः वक्ष्यति— "विशेषस्य च जिज्ञासा सूत्रकारेण दर्शिता" (प्र–सू– १०८) इति । ततश्च, धर्मानुवादेन चोदनालक्षणत्वविधानमिति पक्षे, अनूद्यमानस्य धर्मस्य प्रीतिसाधनत्वमिति सर्वपक्षेष्वपि सिद्धत्वात्, अर्थशब्दः निरर्थकः इति । तदेतदाह– ॥ धर्मे सामान्यतः इति ॥

एवमाक्षेपे परिहारमाह– ॥ चोदनालक्षणत्वस्येति ॥

धर्मं उद्दिश्य चोदनालक्षणत्वं विधीयते, इति पक्षः, एवाश्रीयते ; न तु चोदनालक्षणानुवादेन धर्मत्वविधानमिति । एतादृशपक्षसिद्धिरपि अर्थशब्दे स्थित एवेति अर्थपदमावश्यकमेव । ननूक्तं, प्राप्तत्वात् वैयर्थ्यमिति न । अविशेषणमर्थपदं नित्यानुवादोऽस्तु । तत्प्रयोजनं तु वचनव्यक्त्यन्तरसन्देहनिवृत्तिः । यथा, विद्वद्वाक्ययोः समुदायानुवादकयोस्सद्भावात् प्रयाजादीनां फलसाधनत्वशङ्कानिरसनं तद्वत् । असति चार्थशब्दे यश्चोदनालक्षणः स धर्मः इत्यपि वचनव्यक्तिराश्रीयते । तत्र च दोषः उत्तरत्र सपद्येव वक्ष्यते ।

नित्यानुवादकस्यार्थशब्दस्य सत्त्वे तु ना हि चोदनालक्षणोद्देशेन धर्मं विधानवचनव्यक्तिपक्षः घटते ; तथासति च अर्थग्रहणस्य विध्यनुवादपक्षयोः

तथा च येऽप्यनर्थस्य साधनत्वेन कल्पिताः ॥ २८४ ॥
निषेधैस्तेऽपि धर्माः स्युः चोदनालक्षणत्वतः ।
तस्मादर्थापरित्यागादेकार्थग्रहणं यथा ॥ २८५ ॥
लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।

---

कस्याप्यसंभवात् । अर्थत्वस्य विधानमिति पक्षे, धर्मत्वार्थत्वयोरुभयोर्विधेयत्वेन वाक्यभेदापत्तेः । नाप्यनुवादः; अप्राप्तत्वात् । नैव च चोदनाज्ञाप्यं अर्थरूपं अनर्थस्यापि चोदनालक्षणत्वात् । नचैतत्पदं (अर्थ पदम्) परित्यज्य वाक्यार्थनिरूपणं घटते, वाक्यैकदेशस्यानर्थकत्वात् । यत्र च पक्षे अर्थपदस्यापि सार्थकत्वसंभवः स एव हि पक्षः समाश्रयणीयः, स च पक्षः धर्मानुवादेन चोदनालक्षणत्वविधानरूपएव । अर्थपदानुवाद-प्रयोजनम् च सपद्येव हि प्रादर्शि ।

ननु चोदनालक्षणोद्देशेन धर्मत्वविधानपक्ष एव च स्वीक्रियताम् । को दोषः ? इति शङ्कायामाह - ॥ तथा च येऽप्यनर्थस्येति ॥

यः चोदनालक्षणः स धर्मः; इति वचनव्यक्तिस्वीकारेण चोदनालक्षणानुवादेन धर्म विधान स्वीकारे ब्रह्महत्यादिकानां निषेध्यानामपि धर्मत्वं स्यात ; तेषामपि निषेधचोदनया अनर्थसाधनत्वेन लक्षितत्वात् । न चेष्टापत्तिः तेषां निषेध्यानामधर्मत्वस्य सिद्धान्तात् । अतः न विधेयार्थमपि अर्थग्रहणं विधिफलमर्थवादिति ॥

तथा च वचनव्यक्त्यन्तरपरिग्रहणेनानर्थस्यापि धर्मत्वमिति शंकां परिहर्तुं अर्थवदर्थग्रहणमिति प्रदर्शयन्नुपसंहरति ॥ तस्मादर्थापरित्यागादिति ॥

'चोदनालक्षितः यस्स धर्मः' इति वचनशरीरस्वीकारे पूर्वोक्तदोषापत्तेः । सा नाम वचनव्यक्तिः स्वीकरणीया, यस्यामाश्रितायां, अर्थश्च

विशेषणाद्विना चैतत् अर्थसामर्थ्यकारितम् ॥ २८६ ॥
कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ।

---

न धर्मो न त्यज्यते, वाक्यार्थोऽपि एक एव भवति। सा च धर्ममनूद्य प्रमाणविधिः इति वचनव्यक्तिः। अस्यां च धर्मो हि अर्थाव्यभिचरितः इति नार्थत्यागः। वाक्यार्थोऽपि एक एव, चोदनालक्षणत्वमात्रविधानात्। अर्थस्तु सामर्थ्यलभ्यः। इयं च रीतिः अर्थानुवादादेव हि सिध्यति नान्यथा ॥

ननु '**यो धर्मः स चोदनालक्षणः**' इति वचनव्यक्तिमेवाश्रित्य अर्थपदस्य नित्यानुवादित्वमित्युच्येत, तर्हि भाष्यविरोधः। भाष्यकारो हि '**उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति। तत्रानर्थो धर्मः उक्तो माभूदित्यर्थग्रहण**'मिति स्पष्टमेव विशेषणत्वमर्थपदस्य दर्शयति। एवं यदपि '**अथवे**'त्यादिभाष्यमाक्षिप्तं, तदपि नैतावतापि समाहितमिति चेदाह— ॥ **विशेषणादिति** ॥

'**उभयमिहे**'त्यादिभाष्ये '**अर्थग्रहण**'मिति पदे अर्थसामार्थ्यकारित मित्येव भाष्यकारेण भिप्रेतम्। नन्वर्थपदस्य विशेषणत्वमभिप्रेतम्। अर्थ सामर्थ्याकारितमित्यस्यायमाभिप्रायः— अनर्थत्वाभाव एव धर्मत्वदर्शनात, अर्थसामर्थ्यात्, अनर्थधर्मवर्जनम्। उद्देश्यभूतधर्मस्वरूपमेवार्थरूपम्। तदनुवादेन प्रमाणविधौ चानर्थानां हिंसादीनां अधर्मत्वात् तेषां परिहारो भवतीत्याशयः।

तदिदं भाष्ये कथितम्— '**अनर्थो धर्मः उक्तो माभूदित्यर्थग्रहणं**' इति। तथा चैवं वदता भाष्कृता पूर्वोक्तवचनव्यक्तिद्वयमध्ये, धर्मानुवादेन

प्रमाणविधिरूपवचनव्यक्तिरेव ( यो धर्मः स चोदनलक्षणः ) स्वीकार्या; नान्या ( यश्चोदनालक्षणः स धर्मः ) इति प्रदर्शितम्। एतदर्थमेव च चोदनासूत्रे ' अर्थ 'शब्दः इति स्पष्टीकृतम्।

एवं 'अथवे'त्यादिभाष्य यदाक्षिप्त तत्समाधानार्थतयाप्ययमेव ग्रन्थो व्याख्यायते 'कथ्यते' इत्यादिवार्तिकेण- अथवा 'अर्थस्य सतः' इति भाष्ये अर्थत्वविशिष्टस्य चोदनालक्षणस्ये'ति विशिष्टानुवादः उच्यते ; येन, ग्रहैकत्वन्यायेन वाक्यभेदः स्यात् ; किं तर्हि— विशेषणत्वमनभ्युपगम्यैव ( अर्थपदस्य ) अर्थसामर्थ्यकारित यत् फलं वचनव्यक्तिविशेष ( धर्मानुवादेन चोदनालक्षणविधानरूप ) समाश्रयणेन हिंसादिवर्जनरूपं तदेव हि कथ्यते । अर्थात् यदाप्यते न तस्य वाक्यभेदापादकत्वं संभवति । वाक्यभेदस्य शब्ददोषत्वेन अर्थादापद्यमानस्य शब्दप्रमाणकत्वाभावात् । तथा च यदिदं 'अथवेति' भाष्यं धर्मोद्देशकचोदनाप्रमाणविधानमेव युज्यते ' इत्येतदर्थं प्रवृत्तमिति न दोषः । तदयं भाष्यार्थः ' अर्थस्य सतः यद्धर्मत्वं, तत् चोदनालक्षणस्येति । अत्र भाष्ये ' अर्थस्य सतः ' इति सच्छब्दः अर्थपदं नित्यानुवादरूपमिति सूचयति । अर्थत्वं नोद्देश्यतावच्छेदकोटौ प्रविष्टमिति यावत् ।

पर्यवसितार्थस्तु यदेतदनर्थानां, हिंसादीनां वर्जनं तदिदं 'धर्ममनूद्य प्रमाणविधानवचनव्यक्तिस्वीकारे अर्थसामर्थ्यकारितं फलमिति भाष्यकारेण कथ्यते इति ॥ २६४–२८६ ॥

इति मीमांसकशिरोमणिना, मीमांसावाचस्पतिना
पण्डितरत्नेन, मीमांसाभूषणेन, उभयवेदान्तकेसरिणा
**ई.श.वरदाचार्येण** विरचिते
**श्लोकवार्तिकभूषणे** चोदनासूत्रं द्वितीयं समाप्तम् ।

श्रीः

श्रीलक्ष्मीहयग्रीवाय नमः

कुमारिलभट्टविरचितम्

# श्लोकवार्तिकम्

— —

श्री वरदाचार्यविरचित-

भूषणव्याख्यासमलंकृतम

शास्त्रारम्भसूत्रम्

## ॥ तस्य निमित्तपरीष्टिः ॥ १-१-३ ॥

---

**अस्य सूत्रस्य तावदयमर्थः— तस्य** धर्मस्येत्येत्यर्थः । पूर्वसूत्रे '**चोदनालक्षणोऽर्थो धर्मः**' इत्यत्र धर्मपदसत्वात् तस्योपस्थितत्वात्, उपस्थितपरामर्शिना सर्वनामशब्देन ( तच्छब्देन ) तत्परामर्शस्यैवयुक्तत्वात् । निमित्तस्य परीष्टिः **निमित्तपरीष्टिः** इति विग्रहः । निमित्तं चात्र प्रमाणं इति ज्ञेयम् । तस्य परीक्षा कार्येत्यर्थः । तस्येत्यत्र षष्ठी विषयत्वार्थका, विषयत्वस्य च विभक्त्यर्थस्य निमित्तपदार्थप्रमाणपदार्थैकदेशभूतप्रमायामन्वयः । तथा च धर्मविषयकप्रमाजनक ( चोदना ) प्रमाण-परीक्षा कर्तव्येति शेषः ।

**अत्र सूत्रे 'परीष्टि'** रिति शब्दः विकल्पेन सिद्ध्यति । तथ .ह— इषु— गतौ इत्यस्मात् धातोः **इषेरनिच्छार्थस्येति** युचिप्रत्यये विहितो

'परेर्वा' इति क्तिन्-युचोः विकल्पः स्मर्यते। तत्र युज्धौ पर्येषणेति भवेत्। क्तिनि परीष्टिः इति।

ननु पूर्वसूत्रे 'चोदनालक्षणोऽर्थो धर्मः' इति धर्मे चोदनैव प्रमाणमिति प्रतिज्ञातं, चोदना प्रमाणमेवेति च। एवं च तदनन्तरं तदुपपपादक हेतुः किल निरूपणीयो भवति। तद्विहाय तदसंबद्धतया निमीत्तपरीक्षेयं कुतो वा प्रतिज्ञायते? न हि बादरायणः सूत्रेषु स्वेषु 'जन्माद्यस्य यतः' शास्त्रयोनित्वात्इत्यादिकं प्रतिज्ञाय तदेतत् परीक्षामहे इति परीक्षामवतारयति। न वा नैयायिकाः 'शब्दोऽनित्यः इति प्रतिज्ञां कृत्वा, तदेतत् परीक्ष्यते इति प्रयतन्ते। अपि तु सहसेव शब्दानित्यत्वसाधकहेतुमेव कृतकत्वादिकं निरूपयन्ति। एवं भगवान् व्यासोऽपि जगत्कारणत्वशास्त्रयोनित्वादिसाधकं समन्वयादिकमेव तत्तुसमन्वयादिभिस्सूत्रैः-भिस्सत्रैनिरूपयति तद्वत् प्रकृतेऽपि सूत्रकारैः चोदनासूत्रप्रतिज्ञातावधारणद्वय-सिद्धये- सदौत्पत्तिकसूत्राभ्यां हेतुरेव निरूपणीयः; मध्ये अनेन परीक्षा प्रतिज्ञानेन किं प्रयोजनम्?

न च यत्र परानुद्दिश्य प्रतिज्ञा क्रियते, तत्र हि पूर्वोक्तरीतिः यथा प्रतिज्ञासमनन्तरमेव च हेत्वभिधानामिति, स्वप्रतिपत्तिसिद्धये यत्र प्रतिज्ञा नात्र स न्यायः हेतुधर्माणां तत्रावश्यकत्वाभावात् इति वाच्यम्। अत्रापि च सूत्रकारो न स्वप्रतिपत्त्यर्थशास्त्र प्रणिनाय। किं तर्हि? अन्यत एव अवगतवेदार्थः स्वय लोकानुजिघृक्षया शिष्यहितार्थमेव हि

स्वशास्त्रं प्रवर्तयामास ? अतोऽत्रापि परार्थैव प्रतिज्ञेति पूर्वोक्तदोषस्तदवस्थः ।

अथ स्यात्— परार्थप्रतिज्ञेति काममत्रापि भवेत् । परः द्वेधा भवति । व्युत्थितः, अव्युत्थितश्चेति । तत्र व्युत्थितो नाम, विरुद्धम् उत्थितः व्युत्थितः इति व्युत्पत्त्या, विप्रतिपन्नः इत्यर्थः । तद्भिन्नः अव्युत्थितः, शिष्यः इत्यर्थः । तत्र आद्याय विप्रतिपन्नाय यत्र प्रतिज्ञा क्रियते तत्रैव प्रतिज्ञासमनन्तरमेव हेत्वभिधानस्यावश्यकता, न तु उत्तरत्र । अव्युत्थितप्रतिपादने तु परीक्षापुरस्सरमेव हेत्वभिधानेन ते प्रतिपाद्यन्ते इति, विभागस्वीकारेण प्रकृते अव्युत्थितशिष्योद्देश्यकप्रतिज्ञारूपत्वात् मध्ये परीक्षायाः आवश्यकता वर्तते; इति ।

तदिदं न युक्तं— तर्हि उत्तराध्यायेष्वपि भेदलक्षणादिषु यथास्वं अर्थं प्रतिज्ञाय परीक्षाप्रतिज्ञानस्य करणापत्तेः । न च सूत्रकारैः तथा क्रियते । किं च, विप्रतिपन्नाय प्रतिज्ञानन्तरमेव हेतुकथनं न शिष्येभ्यः इति विभागकरणमपि न घटते ; प्रमाणाभावात् ।

वस्तुतस्तु शिष्यान् प्रति यत्र प्रतिज्ञा भवति तान् प्रत्येव सपदि हेतुर्वक्तव्यः ; मध्ये व्याक्षेपे हेतुप्रतिज्ञाप्रवेशस्यायुक्तत्वात् । अतः मध्ये परीक्षाप्रतिज्ञानमनवसरग्रस्तमिति चेत्—

अत्र ब्रूमः— सूत्रकारः प्रथमजिज्ञासासूत्रेण शास्त्रस्यास्य प्रयोजनं प्रतिजज्ञे । द्वितीयेन समस्तवक्ष्यमाणतन्त्रार्थसंक्षेपप्रतिज्ञानं चकार ।

अनेन तृतीयसूत्रेण सुखबोधाय, प्रथमाध्यायार्थं प्रतिजानीते । यथा अथातः शेषलक्षणम् (३-१-१) अथ विशेषलक्षणम् (८-१-१) इति । तथा अस्मिन् अध्याये धर्मप्रमाणं परीक्षिष्यामहे, इति । न च द्वितीय-सूत्रेणैव समस्ततन्त्रार्थसंक्षेपकरणात् प्रमाणलक्षणा ( प्रथमाध्याया ) र्थोऽपि प्रतिज्ञात एवेति, पुनरस्य सूत्रस्य का वा आवश्यकतेति वाच्यम् । द्वितीयसूत्रप्रतिज्ञा संकीर्णरूपा, अनेन तु निष्कृष्यार्थः प्रथमाध्यायार्थ परं प्रति-ज्ञायते, इत्यदोषात् । एतदभावे च चोदनासूत्रेण संकीर्णप्रतिज्ञाकरणात् सदौत्पत्तिकसूत्राभ्यां द्वितीयसूत्रकृतप्रतिज्ञासु नानारूपासु कस्याः प्रतिज्ञायाः हेतुरुच्यते इति निर्णयासंभवः स्यात् । द्वितीये च धर्मस्वरूपादि बह्वेव हि प्रतिज्ञातमभूत् । तत्रापि सदौत्पत्तिकसूत्राभ्यां हेतुरभिधीयते इति भ्रमः स्यात् अत्र कृपानिधिः सूत्रकारः तं भ्रममपनुदते । योऽयं तन्त्रार्थः चोदना-सूत्रे संक्षिप्यास्माभिः प्रतिज्ञातः, तद्विवरणे निमित्तपरीक्षैव च इह प्रथमा-ध्याये वर्तिष्यते ; उत्तरत्र निरूप्यमाणप्रमेयसिद्धेः प्रमाणपुरस्सरत्वात् । मानाधीना मेयसिद्धिरिति हि नयविदः प्राहुः ।

अत्रपरीक्षा चतुर्विधा भविष्यति ।

१) किं चोदनैव, उत अन्यदेवेति नियमः ।

२) चोदना वा अन्यद्वेति विकल्पः ।

३) उभयमिति समुच्चयः ।

४) न चोभयमपीति चोभयापलापः, इति ।

आह च—

निमित्तान्वेषणा चेह चतुर्धैव करिष्यते ।
चोदनैवान्यदेवेति यद्वान्यच्चोदनापि वा ॥
अथवा चोदनाऽन्यच्च, नचान्यन्नापि चोदना ॥ इति ॥

भवति चैकस्मिन्नेव प्रमेये प्रमाणानां विकल्पः यथा– दूरादवस्थितं वह्निं कदाचित् धूमात्मकात् लिङ्गादवगच्छति ; समयविशेषे आप्तवाक्यात्। अत्रानुमानशब्दयोः प्रमाणयोः विकल्पेनैव वह्निप्रमाणकत्वम्। न च समुच्चयरूपतृतीयपक्षे अन्यतरप्रमाणवैयर्थ्यम् ; एकेनैव प्रमेयसिद्धेः इति वाच्यम् ; प्रमातृभेदेनोभयोपपत्तेस्संभवात्। यथा एकमेव धर्मात्मकं प्रमेयं योगिनः ईश्वरश्च प्रत्यक्षेणावगच्छन्ति ; अन्येत्वागमेनैवेति। भाष्यकारश्चात्र 'किं चोदनैव उतान्यदपी'ति वदन् इतरत् पक्षत्रयमपि उपलक्षयति।

तदत्र प्रत्यक्षसूत्रे प्रत्यक्षादीनां धर्मे अनिमित्ततां प्रतिपादयन् सूत्रकारः पूर्वनिरूपितेषु चतुर्षु पक्षेषु नियम-विकल्प-समुच्चयपक्षान् दूरीकरोति। उभयापलापस्तु औत्पत्तिकसूत्रे 'तत् प्रमाणमनपेक्षत्वा'दिति खण्डेन दूरीकरिष्यते।

निमित्तपरीक्षणं चात्र क्रियमाणं संक्षिप्ततया एकं नाम भवति। प्रत्यक्षादिप्रमाणान्तरनिराकरणेन धर्मे, चोदनैवेत्यवधारणं स्थाप्यते। "अभावोऽपि नास्ती"ति चोत्तरत्र औत्पत्तिकसूत्रावतरणात, चोदना प्रमाणमेवेति प्रतिज्ञा रक्षिता। एवं तत्रैव सूत्रे शब्दार्थसंबन्धवाक्यरचनानामपौरुषेयत्वनिरूपणेन, पुरुषसंबन्धनिबन्धनप्रामाण्यशङ्कादूरीकरणं भवति। तद्भूताधिकरणे वाक्यार्थज्ञानं प्रति सन्मूलत्वोपपादनम् प्रथमद्वितीयपादे अर्थवादमन्त्रप्रामाण्यस्थापनम्। प्रथमतृतीये च स्मृतिपादे स्मृत्याचारादीनां मूलभूतवेदसद्भावप्रतिपादनं, प्रथमचतुर्थे नामधेयपदानां उद्भिदादिकानां

प्रतीज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।
वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥ १ ॥

प्रतिज्ञामात्रमित्येतत् जैमिनेर्मतमुच्यते ।
वृत्तिकारोऽधिकं वाऽपि भूतादिद्वारमब्रवीत् ॥ २ ॥

---

गुणपराणामपि नामधेयत्वेन प्रकृतयोपयोगित्वनिरूपणं, एवंरीत्या कृत्स्नोऽप्ययं **प्रथमाध्यायः** धर्मनिमित्तपरीक्षापर एवेति मत्वा **सूत्रकारः 'तस्य निमित्तपरीष्टि'रिति** सुष्टु प्राह ।

अत्र भाष्यं **" उक्तमिदमस्माभिः चोदननिमित्तं धर्मस्य ज्ञानमिति । तत् प्रतिज्ञामात्रेणोक्त'मिति** । इदं च न घटते । **भाष्यकारएव 'चोदना हि भूतं भविष्यन्त'**मित्यादिना तत्र प्रतिज्ञायां उपपत्तीश्चाह । एवं **" नान्यत् किञ्चनेन्द्रिय"**मिति चोदनाभिन्नानाम-प्रामाण्य च । स्थिते चैवं प्रतिज्ञामात्रेत्युक्तिः कथं घटते ? इति चेदाह– **॥ प्रतिज्ञाव्यतिरेकेणेति ॥**

यद्यपि **भाष्यकारेण** प्रतिज्ञाव्यतिरिक्ता पूर्वोक्तप्रतिज्ञासाधकयुक्तिरपि **प्रत्यक्षसूत्रौत्पत्तिकसूत्राभ्यां** वक्ष्यमाणा प्रदर्शिता । परं तु **सूत्रकारः चोदनासूत्रे**, केवलां प्रतिज्ञामेव हि करोति, न साधकयुक्तिं कांचिदपि सूचयति । अतः सूत्रकारानुरोधेन **' तत् प्रतिज्ञामात्रेणोक्त'मिति** भाष्यकृदाह ॥

अथवा, स्वाभिप्रायेणापि तथा भाष्यकृदाहेत्यपि वक्तुं शक्यते इति प्राह– **॥वृत्तिकारोऽधिकमिति॥** यत् , भाष्यकारैः **' चोदनाहि '**

त्यादिभाष्येण चोदनायाः भूतभविष्यदाद्यर्थप्रकाशनसामर्थ्यं उक्तं, तत् संभावनमात्रमेव। न तु साधनम्। पारमार्थिकी युक्तिस्तु उपरिष्टादेव अपरिवक्ष्यते। हेतुना च पक्षे स एवार्थः साधयितुं शक्यते। यः संभावितः, न तु कदाप्यसंभावितः। अतः भाष्यकाराभिप्रायानुरोधेनापि 'प्रतिज्ञामात्रेणोक्त'मित्यस्य न काप्यनुपपत्तिरिति विभाव्यताम्। अत एव च भाष्यकारः तत्राह— 'एवं जातीयकं अर्थं शक्नोत्यवगमयितुं' इति। वार्तिककारोऽपि तद्भाष्यं तथैवव्याचख्यौ—

संभाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत्॥ (चो-सू-५)

अतो भाष्यस्य न मनागप्यनुपपत्तिरिति सिद्धम् ॥१-२॥

इति मीमांसाशिरोमणिना, मीमांसावाचस्पतिना, पण्डितरत्नेन,

मीमांसभूषणेन उभयवेदान्तकेसरिणा

ई.श. वरदाचार्येणविरचिते

श्लोकवार्तिकभूषणे

निमित्तसूत्रं समाप्तम्

# शुद्धाशुद्धपत्रिका

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | शाखात्रयवत | शाखात्रयवत् |
| २ | १४ | तव्द्याख्या | तद्व्याख्या |
| २ | १० | शास्त्रां | शास्त्रं |
| ४ | १५ | र्य्यां | ध्र्यां |
| ५ | १८ | शब्द्र | शब्द |
| ५ | १५ | ानपेध्दुं | निषेद्धुं |
| ६ | १६ | पूजांबा | पूजानां |
| ६ | २२ | शब्दबत | शब्दबत् |
| ७ | ८ | स्वयमुबा | स्वयम्भुवा |
| ७ | ९ | वेदभयी | वेदमयी |
| ८ | ७ | प्रमृतिषु | प्रभृतिषु |
| ८ | १६ | ततभिदम | ततमिदम् |
| ८ | २१ | अन्तर्यामा | अन्तर्यामी |
| ९ | ४ | रुध्देषु | रुद्धेषु |
| ९ | १७ | योपष्ठब्ध | योपष्टब्धं |
| १० | १ | शिष्याधी | शिष्यधी |
| १० | ८ | नित्य | नित्य |
| १० | ११ | निषादि | निषदि |
| १० | १४ | आनाध्य | आनाय्य |

| | | | |
|---|---|---|---|
| १० | १४ | चा | च |
| १० | १६ | युक्तामिति | युक्तमिति |
| १० | २४ | श्लाकबार्तिक | श्लोकवार्तिक |
| ११ | ५ | बहुदूरस्योऽपि | बहुदूरस्थोऽपि |
| ११ | १४ | ....आदित्यबत | ...मादित्यवत् |
| ११ | २१ | ...गृण्हन्तु | ...गृह्णन्तु |
| १२ | ७ | करणात् | कारणात् |
| १२ | १८ | तान | तान् |
| १३ | १७ | स्खखलन्नपि | स्खलन्नपि |
| १३ | १८ | ...विशेषणम | ...विशेषणम् |
| १४ | १ | ...दाराव्घा | दारब्ध |
| १४ | २ | साराऽपि | अल्पसारापि |
| १६ | ७ | मीमांसशास्त्रे | मीमांसाशास्त्रे |
| १६ | ८ | शस्त्रं | शास्त्रं |
| १६ | १५ | साध्यष्य | साध्यस्य |
| १६ | १७ | एवासम्भवात | एवासम्भवात् |
| १७ | ४ | कचित् | क्वचित् |
| १९ | ७ | शात्रान्तरादौ | शास्त्रान्तरादौ |
| १९ | १० | सम्बन्घ | सम्बन्धं |
| १९ | १२ | अश्रय | आश्रय |
| २० | ९ | सवेत | सचेत |
| २० | ११ | त्वात | त्वात् |
| २० | १६ | कयायाः | क्रियया |

| | | | |
|---|---|---|---|
| २१ | १२ | सिद्धयै | सिद्धये |
| २१ | १४ | अप्रवृत्त्य ङ्कत्वेन | अप्रवृत्त्यङ्गत्वेन |
| २१ | १७ | निवृत्ति | निवृत्तिः |
| २२ | १३ | शास्क्रादौ | शास्त्रादौ |
| २२ | १५ | त्वात | त्वात् |
| २३ | ९ | पौनरुक्त्यापते | पौनरुक्त्यापत्ते |
| २३ | ९ | साधरणीति | साधारणीति |
| २३ | १८ | पूव | पूर्व |
| २४ | १ | द्धोषु | द्वेषु |
| २४ | १ | केषुचत् | केषुचित् |
| २४ | २ | सम्भवा | सम्भवात् |
| २४ | ८ | सिद्धे | सिद्‌धे |
| २४ | १६ | हरस्येति | हारस्येति |
| २५ | ६ | पदसमुदायऽरूप | पदसमुदायरूप |
| २५ | ९ | साधरणीं | साधारणीं |
| २५ | २१ | सूत्रणां | सूत्राणां |
| २६ | ४ | शब्जानां | शब्दानां |
| २६ | ५ | नानत्तर्ये | नानन्तर्ये |
| २६ | १८ | आनयन्तर्य | आनन्तर्य |
| २८ | ६ | शास्त्रं | शास्त्रं |
| ३० | २ | चगमक | चागमक |
| ३० | १३ | ताह | चाह |
| ३० | २० | प्रासद्धार्थकत्वात | प्रसिद्धार्थकत्वात् |

| | | | |
|---|---|---|---|
| ३१ | १४ | व्यख्यात | व्याख्यात |
| ३३ | १४ | य्यगुणे | न्याय्यगुणे |
| ३३ | १५ | सिध्दतया | सिद्धतया |
| ३४ | ११ | न्यायात | न्यायात् |
| ३४ | १६ | सूत्रेष्वेति | सूत्रेष्विति |
| ३५ | १५ | निपेधपरत्वातत्तत्र | नि षेधपरत्वात्तत्र |
| ३५ | २१ | स्यदिति | स्यादिति |
| ३६ | १० | विप्रकर्षदिति | विप्रकर्षादि ति |
| ३६ | २० | पञ्चम्यतन्तया | पञ्चम्यन्ततया |
| ३६ | २१ | पशाश्च | पशोश्च |
| ३७ | ५ | प्रथमाध्य | प्रथमाध्याय |
| ३७ | १२ | वारूणां | धारुणा |
| ३८ | २ | त्वभी | स्वभी |
| ३८ | ४ | प्रक्करणाः | प्रकरणा |
| ३८ | ५ | षशुधर्मा | पशुधर्माः |
| ३८ | ७ | . . . मूताः | . . . भूताः |
| ३८ | ८ | इनि | इति |
| ३८ | १५ | तस्मात | तस्मात् |
| ३८ | १९ | सत्रे | सूत्रे |
| ३९ | २१ | करणात | करणात् |
| ४० | १ | प्रसिध्दै | प्रसिद्धै |
| ४० | २ | वेधा | वेदा |
| ४० | ४ | तेनाधेयस्य | तेनाथेत्यस्य |

| | | | |
|---|---|---|---|
| ४० | ६ | ...पते | —मते |
| ४० | ७ | स्थापपात् | स्थापनात् |
| ४० | ८ | भगवानू | भगवान् |
| ४० | १५ | अथऽशब्द | अथशब्द |
| ४० | १८ | वोजयति | योजयति |
| ४० | १९ | कर्तुभ् | कर्तुम् |
| ४० | २० | प्रसिद्धत्वत | प्रसिद्धत्वात् |
| ४२ | ४ | वदे | पदे |
| ४२ | १० | व्याख्यायेयेत | व्याख्यायेत |
| ४२ | २० | व्याख्येयम | व्याख्यायेम |
| ४३ | २ | ना व्याख्याते | नाव्याख्याते |
| ४३ | ५ | ...वुत्त्त | ...वृत्तत्व |
| ४४ | ६ | ....चन | . . .यन |
| ४४ | ८ | पूर्ववृत्व | पूर्ववृत्तात्व |
| ४४ | १२ | वेदाध्यना | वेदाध्ययन |
| ४५ | ८ | नान्तय | नानन्तर्यं |
| ४५ | ९ | जिह्ला | जिह्वा |
| ४५ | ९ | वक्षभा | वक्षा |
| ४६ | ७ | तदनान्तय | तदानन्तर्य |
| ४७ | ७ | लब्धेऽथे | लब्धेऽर्थे |
| ४८ | ९ | प्रयेजन | प्रयोजन |
| ४८ | १८ | इयपरः | इत्यपरः |
| ४८ | २१ | एकेनैवव | एकेनैव |
| ४९ | १ | ....वेनि | वेति |

| | | | |
|---|---|---|---|
| ४९ | ८ | स्यादति | स्यादिति |
| ४९ | २१ | . . .वचार | . . .विचार |
| ५१ | ५ | भष्यं | भाष्यं |
| ५१ | ८ | अयाथो | अथाथो |
| ५१ | ११ | स्मृतिप्राप्तगुरु | स्मृतिप्राप्त |
| ५१ | १४ | वया | वय |
| ५१ | १९ | भष्यं | भाष्यं |
| ५२ | १० | तन्निवृत्यर्थ | तन्निवृत्यर्था |
| ५२ | १९ | व्यावत्ति | व्यावृत्ति |
| ५३ | ७ | विरुध्दे | विरुद्धे |
| ५३ | १८ | अययना | अध्ययना |
| ५४ | १ | सा | सया |
| ५४ | १२ | तद्य | यद्य |
| ५५ | १६ | क्त्वाप्रयत्यस्य | क्त्वाप्रत्ययस्य |
| ५५ | १९ | उभयक्रिया | उभयक्रिया |
| ५५ | १९ | क्त्वेति | क्त्वा |
| ५६ | ५ | स्पृष्टयति | स्पष्टयति |
| ५६ | ५ | ग्रहणोत | ग्रहणेति |
| ५६ | १३ | प्रासिद्धि | प्रसिद्धि |
| ५६ | १५ | स्वाध्यय | स्वाध्याय |
| ५७ | १९ | श्रय | श्रूय |
| ५८ | ३ | . . . मनो | . . . मानो |
| ५८ | ६ | त्तया | त्तया |
| ५९ | ६ | दविरोध | अविरोध |

| | | | |
|---|---|---|---|
| ६० | ३ | प्रत्यवैतीत | प्रत्यवैतीति |
| ६० | १६ | यथपाठं | यथापाठं |
| ६० | १६ | यवगू | यवागू |
| ६० | १६ | . . . पत्त | . . . पति |
| ६१ | १० | न्ययात् | न्यायात् |
| ६१ | २१ | गृह्णन | गृह्णन् |
| ६१ | २१ | . . . निबत्ति | निवृत्ति |
| ६२ | १ | जज्ञासेत | जिज्ञासेत |
| ६२ | १३ | यावन्न | यावत् |
| ६२ | १४ | . . .तीतिति | . . . तीति |
| ६३ | ७ | स्नना | स्नाना |
| ६३ | १६ | तद्भित्वत | तद्भित्वा |
| ६२ | १७ | मास | मा |
| ६४ | ९ | त्व: | त्वं |
| ६४ | १३ | . . . दिनि | . . . दीनि |
| ६५ | १० | . . .भूत | . . . भूत् |
| ६६ | ४ | अनन्तर्यो | आनन्तर्यो |
| ६६ | १४ | . . पर्यन्तं | . . . पर्यन्तम् |
| ६६ | १७ | पूब | पूर्व |
| ६६ | २० | भवेत | भवेत् |
| ६७ | ५ | नम | नम् |
| ६७ | १५ | एवथि | एवंस्थिते |
| ६७ | १६ | भ्रमः | भ्र मः |

| | | | |
|---|---|---|---|
| ६८ | २० | कक्स्य | कस्य |
| ६९ | १७ | घा | घाय |
| ७० | ८ | क्तयं | त्त्य |
| ७० | १० | सन्प्रत्येन | सन्प्रत्ययेन |
| ७० | १४ | नेच्छा | नेच्छ |
| ७० | १७ | र्णायपि | र्णमपि |
| ७२ | १३ | जिज्ञसा | जिज्ञासा |
| ७२ | १५ | यस्थली | स्थली |
| ७३ | १४ | भष्य | भाष्य |
| ७४ | १२ | साध | साधनं |
| ७६ | २ | शक्यत्व | शक्यत्वा ॥ |
| ७७ | २ | विस्प्र | निष्प्र |
| ७७ | ४ | ....शब्ते | शब्दे |
| ७७ | १३ | ...जिज्ञस्यां | जिज्ञास्य: |
| ७७ | १५ | ....ग्ध | ...ग्धं |
| ७७ | १६ | जिज्ञस्य | जिज्ञास्य |
| ७८ | ७ | स्वरूपपदिशु | स्वरूपादिषु |
| ७८ | ८ | धमे | धर्मे |
| ७८ | १६ | ...दीना | ....दीनां |
| ७९ | १ | ...न्नास | ...नासा |
| ७९ | ७ | पुम्साम् | पुंसाम् |
| ८२ | १८ | —णत्मा | ...णात्मा |
| ८३ | २ | उदिश्य | उद्दिश्य |
| ८३ | १३ | मूल | मूलं |

| | | | |
|---|---|---|---|
| ८३ | १५ | स्यते | स्यते |
| ८३ | १७ | ...तैवति | ...तैवेति |
| ८४ | ५ | सूत्र | सुत्र |
| ८४ | ५ | मनागप्प | मनागप्य |
| ८४ | १० | एव | एवं |
| ८४ | १२ | आग्नि | अग्नि |
| ८५ | ९ | चेद | चेद् |
| ८६ | १८ | ...त्वा | ....त्वात् |
| ८७ | ७ | ....श्रत्या | श्रुत्या |
| ८७ | ७ | अर्थी | आर्थी |
| ८७ | ११ | किमाद्या | किमाद्य |
| ८७ | १५ | व्यवहित | व्यवहितं |
| ८७ | १६ | ....र्थ्यं | ...र्थ्यं |
| ८८ | ६ | संभाविता | सम्भावितः |
| ८९ | ११ | ...ब्रवीद् | ब्रवीत् |
| ९० | १५ | संर्गादौ | संसर्गादौ |
| ९० | १५ | ज्ञा | ज्ञानं |
| ९१ | २ | नाप्राण्य | नाप्रामाण्य |
| ९१ | ८ | स्यवापत्ते | स्येवापत्तेः |
| ९१ | १६ | यितु | यितुं |
| ९२ | ५ | समाभ | समभि |
| ९३ | १ | स्यासू | स्यात् |
| ९३ | ४ | व्युपत्तिं | व्युत्पत्तिं |
| ९३ | १४ | सधन | साधन |
| ९३ | १४ | णनया | णतया |

| | | | |
|---|---|---|---|
| ९३ | १५ | स्वीकरे | स्वीकारे |
| ९३ | १७ | तस्योति | तस्येति |
| ९५ | ३ | लक्षणाया | लक्षणया |
| ९५ | १६ | . . पदस्याऽपि | . . पदस्यापि |
| ९६ | ३ | प्रवृत्तौ | प्रवृत्तौ |
| ९६ | १० | . . मित्याव | . . मित्यव |
| ९६ | ११ | . . प्रव्यस्य | . . द्रव्यस्य |
| ९७ | २ | तस्म | तस्मा |
| ९७ | २ | . . मत्रोक्त | मत्रोक्तं |
| ९८ | १४ | . . जींष्य | . . जीव्या |
| ९९ | ५ | किञ्च | किञ्चे |
| ९९ | ८ | ष्टष्टा | कृष्टा |
| ९९ | १५ | रोदिण्यु | रोहिण्यु |
| ९९ | १७ | . . तेऽप्रिय | . . तेन्द्रिय |
| ९९ | १८ | नान्मत् | नान्यत् |
| १०० | ५ | . . भिमात | . . भिमत |
| १०० | १८ | पूर्वोक्त | पूर्वोक्त |
| १०० | २१ | भ्रमः | भ्रूमः |
| १०१ | १८ | तावदक्षि | तावदाक्षि |
| १०२ | ९ | . . दृडी | . . दृढी |
| १०३ | ११ | ष्टोप्यर्थः | ष्टोप्यर्थः |
| १०४ | ७ | . . द्वादिति | . . द्वा इति |
| १०४ | १२ | . . र्घं | . . र्घं |

| | | | |
|---|---|---|---|
| १०४ | १२ | ममाणा | प्रमाणा |
| १०४ | १५ | वेदबाक्या | वेदबाक्यात् |
| १०५ | ३ | स्वतन्त्रा | स्वतन्त्रात् |
| १०५ | ३ | निमित्ताच | निमित्ताच्च |
| १०६ | ७ | प्रयोग | प्रयोगे |
| १०५ | ११ | इद्द | ईह |
| १०६ | १४ | प्रयागे | प्रयोगे |
| १०६ | १६ | पक्षाब | पक्षवि |
| १०७ | १३ | . . . रूपदो | रूपदोष |
| १०७ | १९ | चोदनामृषात्वे | चोदनामृषात्वे |
| १०८ | २ | . . . स्द्धि | . . . सिद्ध |
| ११० | ९ | प्रमाण | प्रमाण |
| १११ | ११ | हेत्वापि | हेत्वधि |
| १११ | १३ | प्रमाण्य | प्रामाण्ये |
| १११ | १७ | शश्द | शब्द |
| १११ | १८ | सिद्धान्त | सिद्धान्ति |
| ११४ | १९ | प्रमाण्य | प्रामाण्यं |
| ११५ | १३ | अपर | अपरा |
| ११७ | ५ | ज्ञानव्यक्ता | ज्ञानव्यक्तौ |
| ११९ | ८ | सुष्ठक्तं | सुष्ठूक्तं |
| १२० | १७ | बटते | घटते |
| १२१ | १० | . . . रूप | . . . रूपः |
| १२१ | १० | ाह | हि |

| | | | |
|---|---|---|---|
| १२१ | १० | रूप | रूपः |
| १२१ | १८ | असिद्धे | असिद्धो |
| १२२ | २१ | इत्व | कत्व |
| १२२ | २२ | कति | इति |
| १२३ | १६ | नित्यत्ये | नित्ये |
| १२४ | १९ | . . . ज्ञाना | ज्ञानाना |
| १२६ | ४ | प्रामण्या | प्रामाण्या |
| १२७ | २ | तव्या | तद्व्या |
| १२९ | १० | प्रत्येवौ | प्रत्येव |
| १३० | १७ | आबाधक | अबाधक |
| १३१ | १ | पूर्वज्ञानो | पूर्वज्ञानस्य |
| १३१ | १७ | साय | साम |
| १३२ | ९ | वम | म |
| १३२ | १८ | ज्ञन | ज्ञान |
| १३२ | १२ | अनयो | अनपो |
| १३३ | १३ | गण | गुण |
| १३५ | ८ | गृत्ह्भन्ते | गृह्यन्ते |
| १३५ | १० | सद्भावा | सद्भावात् |
| १३६ | ५ | ....क्त | ...क्त |
| १३७ | ६ | स्थस्र | स्था |
| १३९ | १ | भावभाव | भावाभाव |
| १४० | १४ | ...लिषित | लषित |
| १४१ | २ | तदुद्भतौ | तदुद्भूतौ |
| १४१ | १९ | सर्वांका | सर्वका |

| | | | |
|---|---|---|---|
| १४६ | ७ | पादन | पादनं |
| १४७ | ६ | नद | तद |
| १५१ | १० | ण्य | ण्य |
| १५४ | १२ | प्रमाण | प्रमाणं |
| १५४ | १८ | सामर्थ्यं | सामर्थ्या |
| १५५ | १७ | धीना | धीनां |
| १५६ | ६ | यत | यत् |
| १५६ | १३ | ावज्ञान | विज्ञान |
| १५६ | १६ | श्रोत्र | श्रोत्रे |
| १५७ | १५ | ज्ञनं | ज्ञानं |
| १५९ | ७ | प्रामाय | प्रामाण्य |
| १६० | ६ | शक्तीन्यप्यपी | शक्तीन्यपी |
| १६१ | ८ | चो.स. | चो.सू. |
| १६१ | १५ | येव | यैव |
| १६३ | १० | करण | करणं |
| १६४ | २ | ज | च |
| १६६ | १८ | चादना | चोदना |
| १६७ | २ | धर्म | धर्म |
| १६८ | १ | तीदं | तीदं तु |
| १६८ | ३ | सत | सति |
| १६८ | ७ | पेक्ष | पेक्षं |
| १६८ | १७ | अतबानृ | अनृतवा |
| १६८ | १९ | स्वीकार्यमेंवा | स्वीकार्यमेवा |
| १६८ | २० | ज्ञनाण्ह्नवः | ज्ञानापह्नवः |

| | | | |
|---|---|---|---|
| १७१ | १७ | सिद्‌ध्यथ | सिद्‌ध्यर्थं |
| १७२ | १३ | पेक्षेप | क्षेप |
| १७२ | १६ | त्वत् | त्वात् |
| १७२ | १७ | सार्वेदिक | सार्वधिक |
| १७४ | ८ | येते | यते |
| १७५ | १० | बौःद्ध | बौद्ध |
| १७५ | ११ | नाभवः | नाभावः |
| १७५ | १९ | सूचतं | सूचित |
| १७५ | २० | दाषा | दोषा |
| १७५ | २१ | सुस्थम | सुस्थम् |
| १७६ | ३ | यत | यत् |
| १७७ | ३ | द्विविध | द्विविधं |
| १७७ | १२ | बीज | बीजं |
| १७८ | १८ | एकैकाप | एकैकोप |
| १७९ | ४ | पकौका | एकैका |
| १७९ | ४ | ...मत्रेण | मात्रेण |
| १७९ | १३ | ...त्युत्यु | ...त्यु.... |
| १८० | ९ | इन्द्रि | इन्द्रिय |
| १८० | १० | म्मू | मू |
| १८० | २१ | प्रप | प्रद |
| १८१ | ३ | पूर्वं | पूर्वं |
| १८१ | १० | मात | मिति |
| १८२ | १० | वाम् प्रयोजकम् | प्रयोजकत्वात् |

| | | | |
|---|---|---|---|
| १८२ | ५ | विषय | ·विषय |
| १८४ | १२ | षड्भि | षड्भिः |
| १८५ | १६ | सर्वज्ञ | सर्वज्ञाया |
| १८५ | १८ | नना | ना |
| १८६ | १ | असि | अति |
| १८६ | ८ | बुद्ध | बुद्धः |
| १८७ | ४ | सभन्ध | सम्बन्ध |
| १८७ | १४ | सत्य | सत्य |
| १८७ | १५ | तिलघ | तिलङ्घ |
| १८७ | १८ | तिलघ | तिलङ्घ |
| १८८ | ४ | रजतं | रजत |
| १८८ | १८ | बरो | बिरो |
| १८९ | ८ | ज | च |
| १९२ | १२ | तवा | ताव |
| १९३ | १ | निय | नित्य |
| १९५ | ६ | पूर्वक | पूवंक |
| १९६ | १६ | सिद्धोः | सिद्धो |
| १९७ | २ | ण्यातान् | ण्यताम् |
| १९७ | १७ | मिष्ठ | मिष्टं |
| १९८ | २ | धर्मति | धर्माति |
| १९८ | ८ | तावन्त्रे | तावन्मात्रे |
| १९९ | ७ | किथ | किक |
| १९९ | १३ | व्याख्याते | व्याख्याने |
| १९९ | १९ | ज्ञेयम | ज्ञेयम् |
| १९९ | २१ | त ; इधि | त् इति |

| | | | |
|---|---|---|---|
| २०० | १७ | असंहृवि | असंहशि |
| २०१ | ४ | सिद्ध | सिद्धिः |
| २०१ | १४ | सद्भा | सद्भाव |
| २०२ | १२ | मप | माप |
| २०२ | २१ | द्धे | बुद्धे |
| २०३ | १४ | सिदध्ये | सिद्ध्येत् |
| २०४ | ८ | स्मति | स्मृति |
| २०५ | १० | चादना | चोदना |
| २०५ | १२ | स्यन्य | स्यान्य |
| २०८ | ५ | सर्वज्ञ | सर्वज्ञं |
| २०८ | १० | क्षब | क्षण |
| २०८ | १९ | शय | शयः |
| २०९ | १६ | द्वितीयद्वितीयः | द्वितीयः |
| २०९ | १८ | बुरुषा | पुरुषा |
| २१० | २ | विस्रभ | विस्रम्भः |
| २१० | ११ | णै | णौ |
| २११ | ३ | स्यव | सैव |
| २११ | १० | देग्र | देग्रं |
| २१२ | ४ | अन्यूया | अन्यूना |
| २१२ | ६ | जन्म | जन्मा |
| २१२ | १२ | भात् | भावात् |
| २१३ | १९ | तातानि | तीतानि |
| २१४ | २ | वार्ति | वार्तिक |
| २१४ | ३ | काश | काशि |

| | | | |
|---|---|---|---|
| २१४ | ३ | मेऽमेव | मेवं |
| २१४ | ९ | बास्तु | बासु |
| २१६ | १० | जन्मति | जन्मनि |
| २१७ | १८ | निप्र | निष्प्र |
| २१८ | ८ | स्दिध्यर्थं | सिद्ध्यर्थं |
| २१८ | २० | माय | माण्य |
| २१९ | १२ | योऽग्यं | योग्यं |
| २१९ | १४ | त्तेसत्वात् | त्तास्तमत्वात् |
| २१९ | २० | भवन्त | भवन्ति |
| २२२ | ७ | भास्यण्य | भाष्य |
| २२२ | ५ | एबती | एबाती |
| २२४ | १२ | अव्या | अव्य |
| २२४ | २० | षेब | षेया |
| २२५ | ११ | पुरु | पुरुष |
| २२५ | १४ | दर्शनत्प्र | दर्शनात्प्र |
| २२६ | १० | ज्ञान | ज्ञानं |
| २२६ | १२ | त्यतेत् | त्येतत् |
| २२६ | १७ | अबापो | आबापो |
| २२७ | १२ | क्ति | क्त |
| २२८ | ४ | णन | णान |
| २३० | १५ | ताव ! | ताव— |
| २३० | १७ | तद्या | तद्ष्या |
| २३० | १९ | चौप | चौपा |
| २३१ | ९ | स्फुष्ट | स्पष्ट |

| | | | |
|---|---|---|---|
| २३१ | १३ | थैरेव | थैरेव |
| २३२ | ११ | साध्यान | साध्याना |
| २३३ | ९ | मेति | मैवेतिं |
| २३३ | १२ | भिन्नर्थ | भिन्नार्थो |
| २३४ | २० | क्रिम | क्रिय |
| २३५ | ३ | याऽनृ | यानृ |
| २३५ | १२ | त्वा | त्वात् |
| २३५ | १४ | यत्नां | यानां |
| २३६ | १४ | न्येपी | न्द्रियेऽपि |
| २३६ | १७ | मसस्ति | मस्तीति |
| २३९ | १५ | मनुमनु | मनु |
| २४० | ३ | मिति | इति |
| २४० | ६ | न्निक | न्तिक |
| २४० | ११ | विकल्य | विकल्प |
| २४० | १६ | वायानन्क्य | वाक्यानन्य |
| २४१ | ३ | वर्जितै | वर्जितैः |
| २४१ | ५ | स्येस्य | स्ये |
| २४१ | ९ | तिण्द्वा | यद्वा |
| २४१ | २० | नर्देशः | निर्देशः |
| २४२ | ५ | चारित | चरित |
| २४३ | ५ | जन्त | जन्य |
| २४३ | ९ | र्वोक्त | पूर्वोक्त |
| २४३ | ९ | दृष्टालन्तो | दृष्टान्तो |
| २४३ | ९ | च्य | क्त्य |

| | | | |
|---|---|---|---|
| २४४ | ७ | आत्मानं | आत्मानं |
| २४५ | १ | ददूर्थम् | दार्ढ्य |
| २४६ | १४ | विस्तरणो | विस्तरेणो |
| २४७ | १. | यच्घ्रेय | यछ्रेय |
| २४७ | ७ | चोद | चोदना |
| २४७ | ८ | संहर | संहार |
| २४७ | १७ | थर्म | धर्म |
| २४७ | २१ | कास्य | कामस्य |
| २४७ | २१ | च्योति | ज्योति |
| २४८ | २ | षुनु | ष्वनु |
| २४८ | ४ | दध्या | दध्यादि |
| १४८ | १८ | अन्तसा | अन्यत्सा |
| २४८ | १९. | नापूर्व | नापूर्व |
| २४९ | १ | अह | अह |
| २४९ | ६ | प्रतम् | प्रेतम् |
| २५१ | ५ | गमगमा | गमा |
| २५१ | १२ | द्विषु | दिषु |
| २५२ | १८ | साऽपि | सापि |
| २५२ | १२ | शद्ब | शब्द |
| २५३ | ७ | वाशचकः | वाचकः |
| २५३ | ११ | कृत्ता | वृत्ता |
| २५३ | १५ | रंभबा | रम्भवान् |
| २५६ | ३ | श्रैयो | श्रेयो |
| २५७ | १० | अन्त | अन्तः |

| | | | |
|---|---|---|---|
| २५७ | १७ | भवे | भवेत् |
| २५९ | ११ | प्रत्यवबा | प्रत्यवा |
| २६१ | १३ | हिंमायाम् | हिंसायाम् |
| २६२ | ६ | निषो | निषे |
| २६४ | १७ | आख्यतो | आख्यातो |
| २६५ | १८ | दास्य | दायस्य |
| २६८ | ५ | व्याख्याख्यां | व्याख्यां |
| २६८ | ७ | मवेति | मेवेति |
| २६८ | १२ | वाक्या | वाक्य |
| २७० | ५ | तव्या | तद्व्या |
| २७० | १२ | पथव | पृथव |
| २७० | १४ | चोनये | चोदनये |
| २७० | १९ | वारा | वार |
| २७१ | १९ | तत्वन | तत्वं न |
| २७४ | ३ | नत्सा | तत्सा |
| २७५ | १७ | काऽर्थ | कोऽर्थ |
| २७७ | ३ | फलशो | फलांशो |
| २७८ | ११ | यार्थ | स्वार्थ |
| २७९ | २ | ।वधे | विधे |
| २७९ | ८ | तमा | ताम |
| २७९ | ८ | ञ्यशो | ञ्यंशो |
| २७९ | ९ | विधेये | विधेय |
| २७९ | ९ | तमश | तमांश |
| २८० | २ | विंधान | विधान |

| | | | |
|---|---|---|---|
| २८० | ४ | भाष्य | भाष्यं |
| २८० | ८ | ...त्य | ...त्या.... |
| २८० | ८ | काङ्क्षाव्यां | काङ्क्षायां |
| २८१ | १ | साध्येर्थे | साध्येऽर्थे |
| २८३ | ११ | तस्मत् | तस्मात् |
| २८३ | १७ | ह्येतेन | ह् येतेन |
| २८४ | २ | व्यपार | व्यापार |
| २८४ | ९ | विहि | बहि |
| २८४ | १४ | वस्तृ | वस्तु |
| २८४ | १८ | काव्यांश | व्यक्तांश |
| २८५ | २ | साऽपि | साषि |
| २८६ | १२ | नातबतायि | तदाततायि |
| २८७ | ९ | माणि | माण |
| २८९ | १० | दानां | दानं |
| २८९ | ५ | जक | जनक |
| २९० | ४ | भिता | भिमता |
| २९२ | १५ | स्व | स्वं |
| २९३ | २ | पीडाद | पीडादि |
| २९४ | ७ | षशु | पशु |
| २९४ | १८ | त्वघर्मत्वेति | त्वमधर्मत्वमिति |
| २९५ | ८ | व्याप्प | व्याप्ति |
| २९६ | १७ | उच्छाश्र | तच्छास्त्र |
| २९६ | २२ | स्मस्मन्म | स्मन्म |
| २९९ | ८ | यथ | याद्य |

| | | | |
|---|---|---|---|
| २९९ | १५ | हिंम्स्थात् | हिंस्यात् |
| ३०० | ७ | देवेत | देवेति |
| ३०० | १६ | स्वर्गैं | स्वर्गो |
| ३०० | १६ | आन | अन |
| ३०२ | ११ | हिंम्सा | हिंसा |
| ३०२ | १८ | शक्तिना | शक्तीना |
| ३०४ | १२ | वात् | त्वात् |
| ३०४ | १५ | तस्पा | तस्या |
| ३०६ | १९ | घातदे | घातादे |
| ३०७ | ११ | तेऽत्ति | तेऽपि |
| ३०७ | १८ | इत्या | इत्य |
| ३०८ | ६ | स्यस्या | स्यास्या |
| ३०८ | ६ | ग्रेव | ग्रेऽव |
| ३०८ | ६ | जिह्वा | जिह्वा |
| ३०९ | ११ | तस्याऽपि | तस्यापि |
| ३०९ | १५ | चैद्वि | चैतद्वि |
| ३१० | ४ | शङ्काऽपि | शङ्कापि |
| ३११ | ११ | हिंसार | हिंसा |
| ३११ | १८ | श्येन | श्येने |
| ३१२ | ५ | त्प्रीति | त्वप्रीति |
| ३१३ | ४ | संप्रध | संप्रधा |
| ३१३ | ६ | रदि | दिर |
| ३१४ | ६ | चागम | चागमे |
| ३१५ | १६ | दर्थोऽभव | दर्थोऽव |

| | | | |
|---|---|---|---|
| ३१५ | १८ | समा | सम |
| ३१५ | १३ | शक्त्तो | शक्त्यो |
| ३१८ | ११ | स्यात्तदा | तदा |
| ३१८ | २१ | ह्यर्थं | ह्यर्थं |
| ३१९ | ९ | चोदेना | चोदना |
| ३१९ | १३ | अथ | अर्थ |
| ३२० | ४ | यश्च | यश्चो |
| ३२१ | ११ | भिन्ना | भिन्न |
| ३२३ | १२ | वादिति | वदिति |
| ३२३ | १२ | मक्ष | पक्ष |
| ३२४ | १४ | उभया | उभय |
| ३२४ | १५ | णभि | णाभि |
| ३२४ | २१ | भाष्कृता | भाष्यकृता |
| ३२७ | ९ | स्येस्येत्य | स्येत्य |
| ३२७ | १० | सक्षणो | लक्षणो |
| ३२८ | १ | पर्य | पर्ये |
| ३२८ | ५ | पपपा | पपा |
| ३२८ | ९ | सहसेव | सहसैव |
| ३२८ | १२ | भिस्सत्रे | - |
| ३२९ | १ | अतोत्रापि | अतोऽत्रापि |
| ३२९ | ८ | अभ्युत्थि | अभ्युत्थित |
| ३२९ | १६ | व्याक्षपे | व्याक्षेपे |
| ३२९ | १९ | सक्षेप | संक्षेप |
| ३३० | ६ | स्यर्थः | स्यार्थः |

| | | | |
|---|---|---|---|
| ३३० | १० | घत्त्वि | त्पत्त्वि |
| ३३० | २३ | चोदनाऽन्य | चोदनान्य |
| ३३१ | २ | वर्ह्वि | वर्ह्वि |
| ३३१ | १६ | षय | पेय |
| ३३२ | ५ | तयो | तो |
| ३३२ | ८ | चोदन | चोदना |
| ३३२ | २० | बत्ति | वृत्ति |
| ३३३ | २ | अपरि | — |
| ३३३ | ९ | सामर्थ्यं | सामर्थ्यं |
| ३३३ | ११ | षण्ति | पण्डित |
| ३३४ | १३ | चायेण | चार्योग |



| | |
|---|---|
| **Title** | Mimamsa Slokavartika |
| **Author1** | Kumarila bhatta |
| **Author2** | |
| **Subject** | RELIGION. THEOLOGY |
| **Language** | sanskrit |
| **Barcode** | 1990020047485 |
| **Year** | 1987 |
| **Format** | Tagged Image File Format |
| **Publisher** | Rastriya Sanskrit Sansthan ,New delhi ,A 40 Vishal Enclave, New Delhi |
| **Vendor** | NONE |
| **Scanning Centre** | asr, melkote |
| **Scanning Location** | NONE |
| **Source Library** | ASR,Melkote |
| **Digital Re-Publisher** | Digital Library Of India |
| **Digital PublicationDate** | 2005-01-03 |
| **Numbered Pages** | |
| **Un-Numbered Pages** | |
| **TotalPages** | 390 |
| **Table of Contents** | Click here |
| **Read Online** | Click here |